आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६३

# श्रीमद्रङ्गरामानुजमुनिविरचितप्रकाशिकोपेता छान्दोग्योपनिषत् ।

एतत्पुस्तकं वे० शा० रा० रा० गोखले इत्युपाह्व-
गणेशशास्त्रिभिः संशोधितम् ।

तत्

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३२

खिस्ताब्दाः १९१०



मूल्यं पादोनरूपकचतुष्टयम् । (३८१२)

# छान्दोग्योपनिषद्विषयसूचीपत्रम् ।

## अथ प्रथमः प्रपाठकः ।



## अथ द्वितीयः प्रपाठकः ।

अथ तृतीयः प्रपाठकः ।

## अथ पञ्चमः प्रपाठकः ।

| विषयाः । | (आरम्भ- खण्डाङ्काः । | पृष्ठाङ्काः ।) | (समाप्ति- पृष्ठाङ्काः ।) |
|---|---|---|---|
| त्याशङ्क्यमानस्य श्वेतकेतोर्वृक्षदृष्टान्तेनोपदेशः | ११ | ५१४ | ५१५ |
| सच्छब्दितस्यानेकब्रह्माण्डहेतुत्व आशङ्कमानस्य श्वेतकेतोर्वटफलदृष्टान्तेनोपदेशः... ... | ...१२ | ५१५ | ५१६ |
| कारणानुगतस्य परमात्मनोऽनुपलम्भे शङ्कमानस्य श्वेतकेतोर्लवणदृष्टान्तेनोपदेशः ... ... | ...१३ | ५१६ | ५१७ |
| सर्वव्यापिनः सच्छब्दितस्यावगत्युपायप्रदर्शनार्थं गन्धारदेशानीतपुरुषदृष्टान्तेनोपदेशः ... | ...१४ | ५१८ | ५२० |
| देहराहित्योपजीविनी ब्रह्मसंपत्तिरपि न श्रद्धेयेति मन्वानस्य श्वेतकेतोर्मुमूर्षुपुरुषदृष्टान्तेनोपदेशः | १५ | ५२० | ५२१ |
| सत्यभूतं सदात्मकत्वमनुसंदधानस्यैवानर्थनिवृत्तिरिति चौरपरशुग्रहणदृष्टान्तेन कथनम् ... | ...१६ | ५२१ | ५२५ |

## अथ सप्तमः प्रपाठकः ।

| | | | |
|---|---|---|---|
| नारदाय सनत्कुमारोपदेशः ... ... ... | ... १ | ५२५ | ५२८ |
| वाङ्नाम्नो भूयसीति ... ... ... ... | ... २ | ५२८ | ५२९ |
| मनो वाचो भूय इति ... ... ... ... | ... ३ | ५३० | ५३० |
| संकल्पो मनसो भूयानिति ... ... ... | ... ४ | ५३१ | ५३३ |
| चित्तं संकल्पाद्भूय इति ... ... ... | ... ५ | ५३३ | ५३४ |
| ध्यानं चित्ताद्भूय इति ... ... ... | ... ६ | ५३४ | ५३६ |
| विज्ञानं ध्यानाद्भूय इति ... ... ... | ... ७ | ५३६ | ५३७ |
| बलं विज्ञानाद्भूय इति ... ... ... | ... ८ | ५३७ | ५३८ |
| अन्नं बलाद्भूय इति ... ... ... ... | ... ९ | ५३८ | ५३९ |
| आपोऽन्नाद्भूयस्य इति ... ... ... | ...१० | ५३९ | ५४० |
| तेजोऽद्भ्य भूय इति ... ... ... ... | ...११ | ५४० | ५४१ |
| आकाशस्तेजसो भूयानिति ... ... ... | ...१२ | ५४१ | ५४२ |
| स्मरणमाकाशाद्भूय इति ... ... ... | ...१३ | ५४२ | ५४३ |
| आशा स्मरणाद्भूयसीति ... ... ... | ...१४ | ५४३ | ५४३ |
| प्राण आशाया भूयानिति ... ... ... | ...१५ | ५४४ | ५४६ |
| सत्यं त्वेव विजिज्ञासितव्यमित्युपदेशः | ...१६ | ५४७ | ५४८ |
| विज्ञानं त्वेव विजिज्ञासितव्यमित्युपदेशः ... | ...१७ | ५४८ | ५४९ |
| मतिस्त्वेव विजिज्ञासितव्येत्युपदेशः... ... | ...१८ | ५४९ | ५४९ |

समाप्तमिदं छान्दोग्योपनिषद्विषयसूचीपत्रम् ।

---

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु । ॐ शान्तिः ३ ।

ॐ तत्सद्ब्रह्मणे नमः ।

रङ्गरामानुजविरचितप्रकाशिकोपेता

# छान्दोग्योपनिषत् ।

---

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥
श्रीशैलपूर्णवंशाब्धिकौस्तुभस्य जगद्गुरोः ।
श्रीमतस्तातयार्यस्य चरणौ शरणं वृणे ॥ २ ॥
श्रीतातगुरुसेवाप्तवेदान्तयुगलाशयः ।
वात्स्यानन्तगुरुः श्रीमाञ्छ्रेयसे मेऽस्तु भूयसे ॥ ३ ॥
यत्सेवावैभवाल्लब्धा मया परमहंसता ।
तमहं शिरसा वन्दे परकालमुनीश्वरम् ॥ ४ ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान्गुरूनपि ।
छन्दोगोपनिषद्व्याख्यां करवाणि यथामति ॥ ५ ॥

ब्रह्मविद्यौपयिकं कर्माङ्गविषयमादावुपासनमुपदिश्यते—

ओमित्येतदक्षरमुद्गीथमुपासीत ।

उद्गीथं

उद्गीथभक्त्यवयवभूतमोमित्येतदक्षरमुपासीतेत्यर्थः । ओमित्यक्षरस्योद्गीथत्वासंभवेन सामानाधिकरण्यार्थमुद्गीथपदस्य वाऽक्षरपदस्य वा मुख्यार्थत्यागेन लक्षणायां समाश्रयणीयायामेतस्यैवाक्षरस्योपव्याख्यानमित्युपसंहारानुगुण्यादुद्गीथशब्दस्य जघन्यतया च तस्यैवोद्गीथावयवलक्षकत्वं युक्तं न तु मुख्यस्योमित्येतदक्षरमित्यस्योंकारावयवयुक्तोद्गीथलक्षकत्वं युक्तमिति द्रष्टव्यम् । स्वयमेव श्रुतिरोंकारस्योद्गीथशब्दप्रतिपाद्यत्वे हेतुमाह—

ओमिति ह्युद्गायति ।

लोक ओमिति ह्यारभ्यैवोद्गायति । अत उद्गीथावयवत्वादुद्गीथशब्दप्रतिपाद्यत्वं युक्तमित्यर्थः ।

तस्योपव्याख्यानम् ॥ १ ॥

मित्या व्याख्यानमिदं

तस्योक्षरस्यैवमुपासनमेवं विभूतिरेवं फलमित्यादिकथनमुपव्याख्यानं क्रियत इति शेषः ॥ १ ॥

एषां भूतानां पृथिवी रसः ।

एषां स्थावरजङ्गमात्मकभूतानां पृथिवी रसः परायणं भूतानां पृथिव्याधारकत्वादिति भावः ।

पृथिव्या आपो रसः ।

तस्या जलप्रकृतिकत्वादिति भावः ।

अपामोषधयो रसः ।

तत्परिणामत्वादिति भावः ।

ओषधीनां पुरुषो रसः ।

अन्नपरिणामत्वाच्छरीरस्येति भावः ।

पुरुषस्य वाग्रसः ।

वाचोऽत्युपकारकत्वादिति भावः ।

वाच ऋग्रसः ।

ऋचां गम्भीरार्थकत्वादिति भावः ।

ऋचः साम रसः ।

गीतिसारत्वात्साम्नामिति भावः ।

साम्न उद्गीथो रसः ॥ २ ॥

श्राव्यत्वात्सार इत्यर्थः । अत्रोद्गीथशब्देनोद्गीथावयव ओंकार उच्यते ॥ २ ॥

स एष रसानाꣳ रसतमः परमः । कोरसो नास्तीत्यर्थः ।

रसतमः परमः

स एष ओंकारो भूतादीनामुत्तरोत्तररसानामतिशयितो रसः । इत्योऽधि-

परार्ध्योऽष्टमो यदुद्गीथः ॥ ३ ॥

परार्ध्यः परस्य ब्रह्मणोऽर्धमर्धशब्दः स्थानवाची स्थानमर्हतीति परार्ध्यः । छन्दसि चेति यत् । ब्रह्मवदोंकारस्याप्युपास्यत्वादिति भावः । अष्टमोऽयमुद्गीथः । 'पृथिवी रसः पृथिव्या आपो रस' इति परिगणनायामष्टम इत्यर्थः । यदुद्गीथो य उद्गीथ इत्यर्थः ॥ ३ ॥

वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रस इत्यृक्सामोद्गीथानां प्रस्तुतत्वात्तानि विमृशति कतमा कतमर्गिति—

कतमा कतमर्क् ।

(कतमत्कतमत्सामेत्यादौ द्रष्टव्यम् ।

कतमा कतमेति वीप्साऽऽदरार्था का ऋगित्यर्थः । एवमुत्तरत्रापि ।

कतमत्कतमत्साम कतमः कतम
उद्गीथ इति विमृष्टं भवति ॥ ४ ॥

प्राचीनैर्विमर्शः कृतो भवतीत्यर्थः ॥ ४ ॥

विमर्शनिष्पन्नमर्थमाह—

वागेवर्क् प्राणः सामोमित्येतदक्षरमुद्गीथः ।

ऋचो वागिन्द्रियोच्चारणसाध्यत्वाद्वागेवर्क् । सामगानस्य प्राणनरूपश्वासधारणसाध्यत्वात्प्राण एव साम । उद्गीथभक्त्यवयवत्वादोमित्यक्षरमेवोद्गीथ इत्यर्थः ।

तद्वा एतन्मिथुनं यद्वाक्च प्राणश्च ।

स्त्रीलिङ्गशब्दवाच्यतया वाचः स्त्रीत्वं, प्राणस्य पुंलिङ्गशब्दवाच्यतया पुंस्त्वमिति भावः ।

ऋक्च साम च ॥ ५ ॥

अत्रापि तदेतन्मिथुनमित्यनुषज्यते । उक्तरीत्या वाक्प्राणयोर्मिथुनत्वेन तदभिन्नत्वेनर्क्सामयोरपि मिथुनत्वं द्रष्टव्यम् ॥ ५ ॥

तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सꣳसृज्यते ।

ऋक्सामात्मकं तदेतन्मिथुनमोमित्यस्मिन्नक्षर उद्गीथावयवभूते संसृज्यते । उद्गीथस्यर्गारूढसामभक्तिरूपत्वेनर्क्सामरूपतयोद्गीथावयवप्रणवस्यर्क्सामाभ्यां संसृष्टत्वात्तदात्मकमिथुनेन संसृष्टत्वमित्यर्थः । वाक्प्राणात्मकमिथुनाध्यासविशिष्टर्क्सामसंसृष्टतयोद्गीथावयवप्रणवोपासनं कर्तव्यमित्यर्थः ।

यदा वै मिथुनौ समागच्छत आपयतो
वै तावन्योन्यस्य कामम् ॥ ६ ॥

यदा दंपती मिथुनीभूतौ ग्राम्यधर्माय संसृज्येयातां तदाऽन्योन्यकाम-

१) स्वसंसृष्टमिथुनेन - इति ग्रन्थान्तरपाठः।



प्रापकत्वं प्रसिद्धमित्यर्थः। मिथुनाविति पुंस्त्वद्विवचने छान्दसे ततश्चों-कारोऽपि स्वात्मसंसृष्टमिथुनेन[१] कामप्रापक इति भावः॥ ६॥

तदुपासकोऽप्युद्गाता स्वोपास्योंकारवद्यजमानकामप्रापक इत्याह—

आपयिता ह वै कामानां भवति य एत-
देवं विद्वानक्षरमुद्गीथमुपास्ते॥ ७॥

कामाप्त्यादिविशिष्टोद्गीथावयवोपासनस्य यजमानगतकामाप्तिरेव फलमित्यर्थः॥ ७॥

तद्वा एतदनुज्ञाक्षरम्।

ओंकारोऽनुज्ञाक्षरमित्यर्थः।

तदेवोपपादयति—

यद्धि किंचानुजानात्योमित्येव तदाह।

लोके ह्यनुज्ञां प्रयच्छन्पुरुष ओमित्यनुजानाति।

एषो एव समृद्धिर्यदनुज्ञा।

लोके समृद्धो ह्योमित्यनुज्ञां प्रयच्छति। अतोऽनुज्ञारूपस्योंकारस्य समृद्धिमूलकत्वादनुज्ञारूप ओंकार एव समृद्धिरित्यर्थः।

एवं समृद्धिगुणविशिष्टोंकारोपासनस्य फलमाह—

समर्धयिता ह वै कामानां भवति य
एतदेवं विद्वानक्षरमुद्गीथमुपास्ते॥ ८॥

यजमानस्य कामसमृद्धिं करोतीत्यर्थः॥ ८॥

उपास्यमोंकारं प्ररोचनार्थं स्तौति—

तेनेयं त्रयी विद्या वर्तते।

तेन प्रकृतेनोपास्येनोंकारेण त्रयी विद्या त्रयीविहितं कर्म प्रवर्तत इत्यर्थः।

तदेवोपपादयति—

ओमित्याश्रावयत्योमिति शꣳसत्योमित्युद्गायति।

ओंकारपूर्वकत्वादाश्रावणशंसनोद्गानानामित्यर्थः।

किमित्योंकारपूर्वकमेवाऽऽश्रावणादिकं क्रियत इत्यत्राऽऽह—

एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥ ९ ॥

रसेन सारभूतेन महिम्ना माहात्म्येन युक्तस्योंकारलक्षणस्यापचित्यै पूजार्थमित्यर्थः ॥ ९ ॥

नन्वनेवंविद्भिरपि कर्मणोऽनुष्ठीयमानत्वदर्शनाद्विद्याया वैयर्थ्यमित्याशङ्क्य सत्यं विद्वद्भिरविद्वद्भिरपि लोक ओंकारेण कर्मानुष्ठीयते तथापि विद्याविद्ये विलक्षणफले । विद्यया क्रियमाणं हि कर्म वीर्यवत्तरं भवति, अतादृशं तु न तथेत्याह—

तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद ।
नाना तु विद्या चाविद्या च यदेव विद्यया करोति
श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ।

नाना तु विलक्षणफले इत्यर्थः । यदेव कर्मेत्यर्थः ।

विद्योपासनं श्रद्धाऽऽस्तिक्यबुद्धिः । उपनिषच्छब्देनोपनिषज्जन्यं ब्रह्मात्मकज्ञानमुच्यते । कर्मणो वीर्यवत्तरत्वं नाम प्रबलकर्मान्तराप्रतिबद्धफलकत्वम् ।

इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥ १० ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

रसतमत्वकामाप्तिसमृद्धिगुणकत्वादिभिरुक्तप्रकारैर्विशिष्टमभिहितमुपासनं सर्वमेतदक्षरविषयकमेवेत्यर्थः । ततश्चोपास्यभेदशङ्का न कार्येति भावः । एतत्खण्डान्तर्गतवाक्यविषयाधिकरणान्युपन्यस्यन्तेऽङ्गपादे । 'स एष रसानाꣳ रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ' [ छा० १ । १ । ३ ] इत्येवंजातीयकानाम् 'इयमेव जुहूः स्वर्लोक आहवनीयः ' इत्यादिवाक्यवत्स्तावकत्वमेव न तु रसतमत्वादिलक्षणोपास्यगुणसमर्पकत्वम् । ओमित्येतदक्षरमुद्गीथमुपासीतेति नोपासनं विधीयते । उद्गीथविधसिद्धानुष्ठानौपयिकज्ञानसामान्यवाची ह्युपासनशब्दः । अतोऽनुवाद एव । ततश्च रसतमत्वादिवाक्ये समभिव्याहृतविध्यभावेन तद-

कवाक्यतया स्तावकत्वाभावेनोद्गीथपदोपस्थापितक्रतुप्रकरणगतोद्गीथविध्येकवाक्यतयैव रसतमादिवाक्यानां स्तावकत्वम् । न च स्तावकवाक्यानां स्तुत्यविधिसमभिव्याहारनियमोऽस्ति । "एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणीत्यतिदिष्टार्थवादेषु व्यभिचारात् । अस्तु वोद्गीथमुपासीतेत्युपासनविधिस्तदेकवाक्यता च रसतमादिवाक्यानां तथाऽपि रसतमादिवाक्यानां नोपासनविषयसमर्पकत्वेनैकवाक्यत्वम् । ओमित्येतदक्षरमित्यनेनैवोपास्यस्य लाभात् । अपि तूपास्योद्गीथस्तावकत्वेनैवोपास्योद्गीथमुपादाय स्तुतिमात्रस्योपलम्भादिति 'स्तुतिमात्रमुपादानादिति चेत् ' [ ब्र० सू० ३ । ४ । २१ ] इति सूत्रखण्डेन पूर्वपक्षं कृत्वा 'नापूर्वत्वात् । ' इति सूत्रखण्डेन 'भावशब्दाच्च' [ ब्र० सू० ३ । ४ । २२ ] इति सूत्रेण च सिद्धान्तः कृतः । अयमर्थः—उद्गीथे रसतमत्वादीनां मानान्तराप्राप्तत्वेनानुवादमुखेन स्तुत्यसंभवादियमेव जुहूरित्यादौ जुहूविधेः संनिहिततया तदेकवाक्यत्वेन तत्स्तावकत्वसंभवेऽपि क्रतुप्रकरणगतोद्गीथविधेरसंनिहिततया तदेकवाक्यत्वाभावात् । एतद्ब्राह्मणान्येव पञ्च हवींषीत्यादिवदेकवाक्यताकल्पकवचनान्तराभावादोमित्येतदक्षरमुद्गीथमुपासीतेति संनिहिते विशिष्टविधिप्रत्ययुक्ते क्रियावाचिनि भावशब्दे विद्यमाने तदेकवाक्यतामनादृत्य क्रतुप्रकरणगतोद्गीथविध्येकवाक्यताकल्पनस्यान्याय्यत्वात् । ननु संनिहितोपासनविध्येकवाक्यत्वेऽप्युपास्योद्गीथस्तावकत्वेनैव रसतमादिवाक्यानामेकवाक्यताऽस्तु न तूपास्यसमर्पकत्वेनेति चेन्न । उपासनविषयसमर्पकतया प्रवृत्तिविशेषकत्वे संभवति व्यर्थप्रायस्तुतित्वकल्पनाया अयुक्तत्वात् । अतो रसतमत्वादिकमप्युपास्यमेव । ततश्च रसतमत्वादिविशिष्टतयैवोद्गीथोपासनं कर्तव्यं तत्फलार्थिभिरिति स्थितम् । तथा 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादौ निर्विशेषसामान्येन व्यवहारासंभवाद्विशेषाकाङ्क्षायां तत्तच्छाखागतानामेवोद्गीथव्यक्तीनां संनिहितत्वात्तन्मात्रविषयकत्वमेवोद्गीथश्रुतेरिति युक्तम् । ततश्च ताण्डिशाखागतरसतमत्वकामाप्तिहिरण्मयपुरुषाकाशादिदृष्टिविशिष्टोपासने ताण्डिशाखागतोद्गीथव्यक्तेरेव क्रतुमध्यप्रयुक्ताया उपास्यत्वं न तु शाखान्तरगतोद्गीथव्यक्तेः । न च सर्वशाखागतोद्गीथानामैक्यं शङ्क्यम् । स्वरादिभेदेनोद्गीथव्यक्तीनां भिन्नत्वात् । न चोद्गीथश्रुतेः संकोचलक्षणनाधप्रसङ्ग इति वाच्यम् । शुक्लं पटमानयेत्यादौ पटशब्दस्य व्यक्तिविशेषार्थकत्वेऽपि

जातिव्यक्ती गृहीत्वेह वयं तु श्रुतिलक्षिते। श्लो॰ वा॰ वाक्याधिकरणे २४८ श्लो॰
कल्पयामि यदि मुञ्चामः का श्रुतिस्तत्र पीड्यते॥

इत्युक्तन्यायेन श्रुत्यर्थभूतायाः पटत्वजातेर्लक्ष्याया व्यक्तेश्चापरित्यागेन पटश्रुत्यबाध इत्युक्तरीत्योद्गीथश्रुतेरप्यबाधात्तत्तच्छाखागतोद्गीथमात्रविषयत्वमेवेति पूर्वपक्षे प्राप्त उच्यते—'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्।' [ब्र० सू० ३।३।५५] तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। उद्गीथाद्यङ्गावबद्धा उपासनास्तत्तच्छाखागतोद्गीथव्यक्तिष्वेव न व्यवतिष्ठेरन्नपि तु प्रतिशाखं संबध्येरन्। शुक्लं पटमानयेत्यादौ शुक्लपदसमभिव्याहारान्यथानुपपत्त्या विशिष्टैकार्थप्रत्यायनायाविशेषप्रवृत्तश्रुतेः पीडनेऽपि प्रकृते तादृशबाधकाभावेनाविशेषप्रवृत्तोद्गीथश्रुतेः संनिधिमात्रेण संकोचासंभवाच्छाखान्तरगतः क्रतुमध्ये प्रयुज्यमान उद्गीथः शाखान्तरोक्तोपासनप्रकारेणाप्युपास्य इत्यर्थः। 'मन्त्रादिवद्वाऽविरोधः।' [ब्र०सू०३।३।५६] शाखान्तराम्नातानां मन्त्रादीनां शाखान्तराम्नातक्रतुसंबन्धवच्छाखान्तरगतोपासनानामपि शाखान्तरगतोद्गीथसंबन्धे विरोधाभावादिति स्थितम्। तथा गुणोपसंहारपादे 'ओमित्येतदक्षरमुद्गीथमुपासीत।' इत्यादिना विहितानामङ्गावबद्धोपासनानामव्यभिचरितक्रतुसंबन्धिजुहूपस्थापितक्रतुफलनिराकाङ्क्षपर्णतादिवदव्यभिचरितक्रतुसंबन्ध्युद्गीथोपस्थापितक्रतुफलेनैव नैराकाङ्क्ष्यात्। 'तदेव वीर्यवत्तरं भवति' [छा० १।१।१०] इति वीर्यवत्तरत्वादिश्रवणानामर्थवादत्वाद्व्रीहिप्रोक्षणपर्णतादिवदङ्गत्वादुपासनानि क्रतौ नियमेनोपादेयानीति पूर्वपक्षे प्राप्त उच्यते—'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' [ब्र० सू० ३।३।४२] निर्धारणं निश्चयेन मनस्युपस्थापनं ध्यानमित्यर्थः। तस्योपासनस्यानियमो नियमेनाननुष्ठानं 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' [छा० १।१।१०] इत्यनियमदर्शनात्। तस्योपासनस्य प्रबलकर्मप्रतिबन्धरूपवीर्यवत्तरत्वलक्षणफलान्तरवत्त्वेन कर्माङ्गत्वाभावादित्यर्थः। अयं भावः—पर्णतोदुम्बरतादिस्थले विधिविभक्त्यश्रवणादर्थवादेनैव विधिशक्तिमुपजनय्य पुनस्तेनैव फलसमर्पणे विरम्य व्यापाराद्वाक्यं भिद्येत। उपासनायां तु विस्पष्टविधिश्रवणान्न फलविधित्वेऽपि वाक्यभेदशङ्का। अतः पर्णतोदुम्बरतादिविध्यपेक्षयोपासनविधेर्वैषम्यात्फलविधित्वं संभवतीति स्थितम्। तथाऽङ्गपादे मुक्तिव्यतिरिक्तफलकोपासनाना-

मुद्गीथविद्यारहितयज्ञादिकर्मनिष्पाद्यानामपि यज्ञादिरूपसाधननिष्पत्तौ सत्यां विलम्बे हेत्वभावादिह जन्मन्येव निष्पत्तिरिति पूर्वपक्षे प्राप्त उच्यते 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्।' [ ब्र० सू० ३ । ४ । ५१ ] मुक्तिव्यतिरिक्तफलकमुपासनमप्रस्तुतप्रतिबन्धे प्रतिबन्धाभाव ऐहिकमिहैव जन्मनि भवमिहैव जन्मनि भवति। सति प्रतिबन्धे जन्मान्तरे। न च प्रतिबन्धासंभवः शङ्कनीयः। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति।' [ छा० १ । १ । १० ] इत्युद्गीथविद्यायाः प्रबलकर्मान्तराप्रतिबद्धफलत्वावेदनेन प्रबलकर्मान्तरप्रतिबन्धस्यानुज्ञातत्वात्। न च 'तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' [ बृ० ४ । ४ । २२ ] इति यज्ञादेर्वेदनसाधनत्वश्रवणात्कारीर्यभिचारादिवन्नियतैहिकत्वमेव किं न स्यादिति वाच्यम्। शुष्यच्छालिसंपत्तिवैरिविशेषविपत्तिफलकत्वेन विहितानां तेषां नियतैहिकत्वेऽपि विद्यासाधनयज्ञादिकर्मणां तज्जन्मनि विद्योद्देशेनाविहिततया पश्वादिफलकचित्रेष्ट्यादिवन्नियतैहिकत्वाभावात्, पूर्वतन्त्रे चतुर्थाध्याये योगसिध्द्यधिकरणे तथा निर्णीतत्वादिति स्थितम्। तथा तदुत्तराधिकरणे यक्षानुरूपो बलिरिति न्यायेन बलवत्कर्मसाध्यानां मुक्तिफलकब्रह्मोपासनानां प्रबलकर्मान्तरप्रतिबन्धासंभवान्नियतैहिकत्वमेवेति पूर्वपक्षे प्राप्त उच्यते—'एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः'। [ब्र० सू० ३ । ४।५२] मुक्तिफलकविद्यानामप्यैहिकत्वनियमो नास्ति। अप्रस्तुतप्रतिबन्धत्वरूपावस्थाया विशेषेण तत्राप्यवधृतत्वात्तत्रापि प्रबलानां ब्रह्मविदपचारादिप्रतिबन्धकानां संभवात्। द्विरुक्तिरध्यायसमाप्त्यर्था। प्रकृतमनुसरामः॥ १०॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य
प्रथमः खण्डः॥ १॥

---

उद्गीथावयव ओंकारे मुख्यप्राणदृष्टिं विधातुमाख्यायिकां प्रस्तौति—

देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्याः।

द्विविधाः प्रजापतिसुता देवासुरा यस्मिन्काले परस्परं युद्धं कृतवन्त इत्यर्थः। प्राजापत्या इत्यपत्यार्थे दित्यदित्यादित्यपत्युत्तरपदाण्ण्य इति ण्यः।

तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ॥ १ ॥

तदा देवा अनेनोद्गीथावयवेनोंकारेणोपासितेनासुरान्भविष्याम इत्यभिसंधायोद्गीथं प्राणमुपायत्वेन स्वीकृतवन्त इत्यर्थः ॥ १ ॥

ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे ।

ते देवा घ्राणेन्द्रियत्वेनोद्गीथमुपासितवन्त इत्यर्थः । नासिकायां भवं नासिक्यं शरीरावयवाच्चेति यत् ।

तꣳ हासुराः पाप्मना विविधुः ।

तं नासिक्यं प्राणमसुराः स्वकीयेन पाप्मना संयोजितवन्तः पापहेतुभूतवृत्त्या संयोजितवन्त इति यावत् ।

तस्मात्तेनोभयं जिघ्रति सुरभि च
दुर्गन्धि च पाप्मना ह्येष विद्धः ॥ २ ॥

तस्मात्पापसंसर्गाद्धेतोः पुरुषो घ्राणेन सुरभि च दुर्गन्धि चोभयं जिघ्रति । तस्मान्नासिक्यः प्राणः पापविद्ध एवेत्यर्थः ॥ २ ॥

अथ ह वाचमुद्गीथमुपासांचक्रिरे ताꣳ हासुराः
पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यं
चानृतं च पाप्मना ह्येषा विद्धा ॥ ३ ॥

पूर्ववत् ॥ ३ ॥

अथ ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः
पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं
चादर्शनीयं च पाप्मना ह्येतद्विद्धम् ॥ ४ ॥

अदर्शनीयममेध्यादिकमित्यर्थः ॥ ४ ॥

अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे तद्धासुराः
पाप्मना विविधुस्तस्मात्तेनोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् ॥ ५ ॥

अश्रवणीयं पापवचनमित्यर्थः ॥ ५ ॥

अथ ह मन उद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ संकल्पयते संकल्पनीयं चासंकल्पनीयं च पाप्मना ह्येतद्विद्धम् ॥ ६ ॥

असंकल्पमीयं पापमित्यर्थः ॥ ६ ॥

अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे ।

उद्गीथावयवमोंकारं मुख्यप्राणत्वेनापासितवन्त इत्यर्थः ।

तꣳ हासुरा ऋत्वा विदध्वंसुः ।

तं मुख्यप्राणं पाप्मना वेद्धुं प्रवृत्ता असुरास्तं प्राप्य स्वयमेव विद्ध्वंसुर्विध्वस्ता अभवन्नित्यर्थः । तत्र दृष्टान्तमाह—

यथाऽश्मानमाखणमृत्वा विध्वꣳसेतैवम् ॥ ७ ॥

आखन्यत इत्याखणं मृत्पिण्डः । यथा मृत्पिण्डोऽश्मानं प्राप्य विध्वस्तो भवति एवमिति व्यासार्यैर्व्याख्यातम् । आखणामिति च्छान्दसं णत्वं नपुंसकत्वं च ॥ ७ ॥

एतद्विद्यायाः फलमाह—

यथाऽश्मानमाखणमृत्वा विध्वꣳसत एवꣳ स विध्वꣳसते य एवंविदि पापं कामयते यश्चैनमभिदासति ।

एवंविदि एतद्विद्यानिष्ठे यः पापं कर्तुं कामयते । यश्चैनमभिदासति हिनस्ति सोऽश्मप्राप्तलोष्टवद्ध्वस्तो भवतीत्यर्थः । दाप्लवन इत्यतो दोऽवखण्डन इत्यतो वा लेटि सिब्बहुलं लेटीति सिपि दासतीति रूपम् ।

स एषोऽश्माखणः ॥ ८ ॥

स एष एतद्विद्यानिष्ठे पापकामोऽश्मप्राप्ताखण इत्यर्थः । एतेन खनो घ चेति घप्रत्ययस्य करणाधिकरणयोरित्यनुवृत्त्या कर्मण्यभावात्करणार्थ

एव घप्रत्ययो वक्तव्यः । अत आखणशब्दस्याश्मविशेषणत्वमेव वक्तव्यम् । खननसाधनतया दृढमश्मानं प्राप्य यथा लोष्टादिकं ध्वंसत इति हि तस्यार्थः । अत एव स एषोऽश्माखण इति वाक्यशेषेऽश्मविशेषणत्वमेवाऽऽखणस्य श्रूयत इति शङ्काऽपास्ता । वाजसनेयके समानप्रकरणे 'यथाऽश्मानमृत्वा लोष्टो विध्वꣳसेत' [बृ० १।३।७] इति श्रवणेन तत्समानार्थत्वस्य वक्तव्यतयाऽऽखणशब्दस्य लोष्टवाचित्वस्यैवोचितत्वात् । बहुलग्रहणेन कर्मण्यपि घप्रत्ययस्योपपत्तेः । इतरथा कर्तृवाचिपदाध्याहारप्रसङ्गात्स एषोऽश्माखण इत्यत्राश्माखणशब्दस्य समस्तस्याश्मप्राप्ताखणवाचित्वेनाश्मशब्दसामानाधिकरण्येनाऽऽखणशब्दस्याश्मविशेषणत्वाभावात्पूर्ववाक्ये नपुंसकलिङ्गनिर्दिष्टस्यापि स एष इति पुंलिङ्गसामानाधिकरण्येनाऽऽखणशब्दस्य पुंलिङ्गत्वोपपत्तेश्चेति द्रष्टव्यम् ॥ ८ ॥

इतरप्राणाद्यपेक्षया तस्य वैषम्यमाह—

नैवैतेन सुरभि न दुर्गन्धि च विजानाति ।

एतेन मुख्यप्राणेनेत्यर्थः । पुरुष इति शेषः । तत्र हेतुमाह—

अपहतपाप्मा ह्येषः ।

स्पष्टोऽर्थः ।

तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति ।

तेनैव हेतुना तस्यापहतपाप्मत्वादेव प्राणान्तरवदात्मंभरित्वाभावात्स्वाशितपीतादिनेतरान्प्राणान्रक्षतीत्यर्थः ।

एतमु एवान्ततोऽवित्त्वोत्क्रामति ।

यत एव घ्राणादिप्राणसमुदायो मुख्यप्राणाशितपीतलब्धसत्ताकोऽत एवान्ततो मरणकाले मुख्यप्राणाशितादेरभावेनैतमवित्त्वाऽलब्ध्वोत्क्रामतीत्यर्थः । विद्लृ लाभ इति हि धातुः ।

व्याददात्येवान्तत इति ॥ ९ ॥

अन्ततो मरणकाले सर्वप्राणानामुत्क्रमणादेवाऽऽस्यव्यादानं करोतीत्यर्थः ॥ ९ ॥

तꣳ हाङ्गिरा उद्गीथमुपासांचक्रे ।

तमध्यस्तप्राणभावमुद्गीथावयवमोंकारमङ्गिरा ऋषिरुपासांचक्र इत्यर्थः । केचित्त्वङ्गिरसोपास्यमेव मुख्यप्राणमाङ्गिरसं वदन्तीत्याह—

एतमु एवाऽऽङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥

अङ्गानां प्राणाधीनस्थितित्वेन प्राणस्याऽऽङ्गिरसत्वमिति भावः । अङ्गरसमङ्गिरसं वदन्ति परोक्षप्रियत्वाद्देवानामिति भावः ॥ १० ॥

तेन तꣳ ह बृहस्पतिरुद्गीथमुपासांचक्रे ।

तेनाऽऽङ्गिरसत्वेन गुणेन बृहस्पतिरुपासितवानित्यर्थः ।

एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिः ॥ ११ ॥

वागिन्द्रियस्य सर्वार्थप्रकाशकत्वादिना बृहत्त्वम् । तस्य च मुख्यप्राणाधीनत्वात्प्राणस्य वाक्पतित्वम् । अत उपास्यस्यैव बृहस्पतित्वं मन्यन्त इत्यर्थः ॥ १ ॥

तेन तꣳ हायास्य उद्गीथमुपासांचक्रे ।

तेन बृहस्पतित्वेनायास्य ऋषिरुपासितवानिति ।

एतमु एवायास्यं मन्यन्त आस्याद्यदयते ॥ १२ ॥

आस्यान्मुखादयते निर्गच्छतीत्यर्थः ॥ २ ॥

तेन तꣳ ह बको दाल्भ्यो विदांचकार ।

तेन पूर्वोक्ताङ्गिरसत्वबृहस्पतित्वायास्यत्वादिगुणविशिष्टतया दल्भसुतो बकनामोपासितवानित्यर्थः ।

स ह नैमिषीयाणामुद्गाता बभूव ।

स्पष्टोऽर्थः ।

स ह स्मैभ्यः कामानागायति ॥ १३ ॥

स दाल्भ्यो बक एभ्यो नैमिषीयेभ्यो यजमानेभ्यः शत्रुपराभवादीन्कामान्गानेन विद्यामाहात्म्यात्संपादितवानित्यर्थः । आगायति स्म 'लट्स्मे' इति लड्भूतेऽपि ॥ १३ ॥

आगाता ह वै कामानां भवति य
एतदेवं विद्वानक्षरमुद्गीथमुपास्ते।

एवमुपासको यजमानकामानां गानेन संपादयिता भवतीत्यर्थः।

इत्यध्यात्मम् ॥ १४ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य द्वितीयः खण्डः ॥ २ ॥

---

अध्यात्ममुद्गीथोपासनं समाप्तमित्यर्थः। आत्मशब्देनेन्द्रियमनःप्राणादिसंघात उच्यते। अध्यात्ममात्मनीत्यर्थः। आत्मविषयमिति यावत्। एतत्खण्डान्तर्गतवाक्यविषयकमाधिकरणं लिख्यतेऽङ्गपादे। ऋत्विक्परिक्रयस्याङ्गानुष्ठानमात्रार्थत्वादङ्गावबद्धोपासनानां च 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' [ ब्र० सू० ३।३।४२ ] इतिसूत्रोक्तन्यायेनानङ्गत्वाच्छास्त्रफलं प्रयोक्तरीति न्यायेन यजमानगामिफलसाधनभूतोपासनस्य यजमानेनैव कर्तव्यत्वात्। 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिश्रुतपश्वर्थगोदोहनादेरनङ्गत्वेऽप्यृत्विक्कर्तृकप्रणयननिर्वाहकस्य(१) गोदोहनस्य यजमानेनोपादातुमशक्यतयर्त्विक्कर्तृकत्वेऽप्युद्गातृकर्तृक उद्गीथे यजमानस्योपासनसंभवादुपासनं यजमानकर्तृकमेव। औद्गात्रसमाख्यानं तु शास्त्रफलं प्रयोक्तरीति न्यायविरोधादुपेक्षणीयम्। अतः फलस्य स्वामिगतत्वात्फलस्वामियजमानकर्तृकमेवोपासनमित्यात्रेयमतमिति 'स्वामिनः फलश्रुतेरित्यात्रेयः' [ ब्र० सू० ३। ४। ४४ ] इति सूत्रेण पूर्वपक्षं कृत्वा, उपासनान्यप्यृत्विक्कर्माण्येव स्युः। प्रयोगाङ्गस्यर्त्विजः प्रयोगान्तःपात्युद्गीथाद्युपासनेऽपि कर्तृत्वसंभवात् 'तं ह बको दाल्भ्यो विदांचकार। स ह नैमिशीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति' [ छा० १। २। १३ ] इत्युद्गातृदाल्भ्यागतविद्याया यजमानकामसंपादकत्वदर्शनलिङ्गाच्चर्त्विक्कर्तृकमेवोपासनम्। न चर्त्विक्कर्तृकोपासनस्य फलमृत्विग्गतमेव स्यादिति शक्यशङ्कम्। ऋत्विजां परार्थतया तेषां वचनमन्तरेण फलसंबन्धानुपपत्तेः। 'यां वै कांचन यज्ञ ऋत्विज आशिषमाशासते यजमानायैवैतामाशिषमाशासते' [शत०१।३।१।२६]

(१) ऋत्विक्कर्तृकप्रणयननिर्वर्तकस्य — इति ग्रन्थान्तरपाठः।

इति श्रुतेश्च। 'तस्मादु हैवंविदुद्गाता ब्रूयात्कं ते काममागायानि' [छा०१। ७। ८] इत्यृत्विग्गतविज्ञानस्य यजमानगामिफलकत्वावेदनलिङ्गाच्च न शास्त्रफलं प्रयोक्तरीति न्यायावतारः। ततश्च परिक्रयविधिबलादुत्सृष्टस्यर्त्विक्कर्तृकत्वस्य यजमानसमाख्याद्युपपादकाभावाल्लिङ्गानुग्रहादौद्गात्रसमाख्यानाच्चाऽऽर्त्विज्यमेवोपासनमिति 'आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते' [ब्र० सू० ३। ४। ४५] इति सूत्रेण सिद्धान्तितम्। सूत्रस्य चायमर्थः—उपासनमार्त्विज्यमृत्विक्कर्म तस्मै क्रतुप्रयोजनाय ह्यृत्विक्परिक्रीयते। अतोऽनङ्गभूतमप्युपासनं क्रतुप्रयोगान्तःपातित्वादृत्विजैवानुष्ठेयमिति स्थितम् ॥ १ ॥ तथा गुणोपसंहारपादे च चिन्तितम्। तत्र हि वाजिनां तावद्द्वया ह वै प्राजापत्या देवाश्चासुराश्चेत्यारभ्य 'ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति' [बृ० १। ३। १]। उद्गीथेनासुरविध्वंसनं प्रतिज्ञायोद्गीथे वागादिमनःपर्यन्तदृष्टावसुरैरभिभवमुक्त्वा 'अथ हेममासन्यं प्राणमूचुः' [बृ० १। ३। ७] इत्यादिनोद्गीथे प्राणदृष्ट्याऽसुरपरिभवमुक्त्वा 'भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति य एवं वेद' [बृ०१। ३। ७] इति शत्रुपराजयफलायोद्गीथे प्राणदृष्टिर्विहिता। एवं छन्दोगानामपि 'देवासुरा ह वै यत्र संयेतिरे' इत्यारभ्य 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति' [छा० १। २। १] इत्युद्गीथेनासुरपराभवं प्रतिज्ञाय तद्वदेवोद्गीथे वागादिदृष्टौ दोषमभिधाय 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' [छा० १। २। ७] इत्यादिनोद्गीथे प्राणदृष्ट्याऽसुरपराभवमुक्त्वा 'यथाऽश्मानमाखणमृत्वा विध्वꣳसत एवꣳ हैव स विध्वꣳसते य एवंविदि पापं कामयते' [छा०१। २। ८] इति शत्रुपराभवायोद्गीथे प्राणदृष्टिर्विहिता। तत्रोभयत्राध्यस्तप्राणभावस्योद्गीथस्यैवोपास्यत्वश्रवणेन रूपाभेदाच्छत्रुपराभवरूपफलसंयोगाविशेषादुद्गीथविद्येति समाख्यैक्याच्च तयोरैक्यमिति पूर्वः पक्षः। तत्र राद्धान्तच्छायया परिचोद्य परिहरति—'अन्यथात्वं शब्दादिति चेन्नाविशेषात्' [ब्र० सू० ३। ३। ६] वाजसनेयके—'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' [बृ० १। ३। ७] इत्युद्गानकर्तरि प्राणदृष्टिविधानात्। छान्दोग्ये—'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' [१। २। ७] इत्युद्गानकर्मणि प्राणदृष्टिविधानाच्छब्दादुपास्यरूपान्यथात्वप्रतीतेर्भेद

इति चेन्न । देवासुरसङ्ग्रामोपक्रमादिबहुसारूप्याद्वाजसनेयकेऽपि 'हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति' [ बृ० १ । ३ । १ ] इत्युद्गीथेनोपक्रमात्तदविरोधाय 'तेभ्य एष प्राण उदगायत्' [ बृ० १ । ३ । ७ ] इत्युद्गानकर्मरूप एवोद्गीथे पाकादिषु सौकर्यातिशयविवक्षया पच्यत ओदनः स्वयमेवेत्योदने कर्तृत्वोपचारवदुद्गानकर्मण्येव कर्तृत्वोपचारोपपत्तेरुद्गीथ एवोभयत्राप्युपास्यः । अतो विद्यैक्यमिति प्राप्ते प्रचक्ष्महे 'न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्' [ब्र० सू० ३ । ३ । ७] न वेति पूर्वपक्षं व्यावर्तयति । प्रकरणभेदात् । छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति प्रकृतोद्गीथावयवप्रणवविषयकमुपासनम् । वाजसनेयके प्रणवस्याप्रकृतत्वादुद्गीथेनात्ययामेति कृत्स्नोद्गीथस्यैव प्रस्तुतत्वात्कृत्स्नोद्गीथविषयकमेवोपासनम् । अतो रूपभेदाद्विद्याभेदः । किं च च्छान्दोग्य उद्गीथस्याध्यस्तप्राणभावस्योपास्यत्वं वाजिनां तु 'अथ हेममासन्यं प्राणमुचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' [बृ०१।३।७]इत्यध्यस्तप्राणभावस्योद्गातुरुपास्यत्वम् । न च वाजसेनयक उद्गातुरुपास्यत्व उद्गीथेनात्ययामेत्युपक्रमविरोधः शङ्कनीयः । उद्गातुरुपासन उद्गीथस्यानुप्रविष्टतयोपक्रमावगतस्योद्गीथस्यापरित्यागात् । अत्र च वक्तव्यं बृहदारण्यकप्रकाशिकायामुक्तं तत्रैवानुसंधेयम् । 'संज्ञातश्चेत्तदुक्तमस्ति तु तदपि' [ ब्र०सू०३।३।८ ] ननूद्गीथविद्येति संज्ञैक्याद्विद्यैक्यमुक्तमिति चेन्न । तत्संज्ञैक्यं विधेयभेदेऽप्यस्त्येव । यथाऽग्निहोत्रसंज्ञा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च । छान्दोग्यगतप्रथमप्रपाठकोदितासु बह्वीषु विद्यासूद्गीथविद्येति संज्ञैक्यदर्शनाच्च तदप्रयोजकमिति भावः । 'व्याप्तेश्च समञ्जसम्' [ ब्र० सू०३।३।९ ] छान्दाग्ये प्रथमप्रपाठक उत्तरास्वपि विद्यास्वोमित्येतदक्षरमुद्गीथमुपासीतेत्यादिषूद्गीथावयवस्य प्रणवस्य व्याप्तत्वेन तन्मध्यपातित्वादस्या अपि विद्याया उद्गीथावयवप्रणवविषयत्वमेव । ततश्च च्छान्दोग्यवाजसनेयकयोर्बह्वर्थवादसारूप्येऽपि च्छान्दोग्यगतविद्याया अध्यस्तप्राणभावोद्गीथावयवप्रणवविषयत्वाद्वाजसनेयकोद्गीथविद्यायाश्चाध्यस्तप्राणभावोद्गानकर्तृविषयत्वात्प्रधानभूतोपास्यभेदे बह्वर्थवादसारूप्यस्याप्रयोजकत्वाद्विद्याभेद इति स्थितम् । प्रकृतमनुसरामः ॥ १४ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य द्वितीयः खण्डः ॥ २ ॥

———

अथाधिदैवतम् ।

उद्गीथस्योपासनमुच्यत इति शेषः । अधिदैवतं देवतायामित्यर्थः । देवताविषयमिति यावत् ।

य एवासौ तपति तमुद्गीथमुपासीत ।

आदित्यदृष्ट्योद्गीथमुपासीतेत्यर्थः । कर्माङ्गभूतोद्गीथापेक्षया कर्माराध्यस्याऽऽदित्यस्योत्कृष्टत्वादपकृष्ट उत्कृष्टदृष्टेरेव न्याय्यत्वादादित्यदृष्ट्योद्गीथस्योपास्यत्वं द्रष्टव्यम् । अयमर्थः 'आदित्यादिमतयश्चाङ्ग उपपत्तेः' [ब्र० सू० ४ । १ । ६ ] इत्यधिकरणसिद्धः । तच्चाधिकरणं बृहदारण्यकप्रकाशिकायामुपन्यस्तं तत्रैवानुसंधेयम् । उद्गीथेऽध्यस्यमानस्याऽऽदित्यस्योद्गीथसाम्यमाह—

उद्यन्वा एष प्रजाभ्य उद्गायति ।
उद्यꣳस्तमोभयमपहन्त्यपहन्ता ह वै
भयस्य तमसो भवति य एवं वेद ॥१॥

वैशब्दोऽवधारणे एष आदित्य उद्यन् उद्गच्छन्नेव प्रजानामर्थप्रकाशनं कुर्वन्नुद्गायतीव भवति । उद्गीथोऽपि प्रजानामुद्गायतीव भवतीत्यर्थः । उद्यन्नेवाऽऽदित्यस्तमोजनितं प्राणिनां भयमपहन्ति । तमोभयापहन्तृत्वगुणविशिष्टतयोद्गीथ आदित्योपासनस्य फलमाह—अपहन्तेत्यादि । अन्धकारादिप्रयुक्तभयापहन्ता भवतीत्यर्थः ॥ १ ॥

समान उ एवायं चासौ च ।

अध्यात्मप्रकरण उक्तोऽयं प्राणश्चाधिदैवतप्रकरण उच्यमानोऽसावादित्यश्च समान एवेत्यर्थः । तदेव दर्शयति—

उष्णोऽयमुष्णोऽसौ ।

अयं प्राण उष्ण उच्छ्वासस्योष्णतयोपलभ्यमानत्वात् । उष्णोऽसौ सवितुश्चोष्णत्वं स्पष्टमेवेति भावः ।

स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुम् ।

इमं प्राणं स्वर इत्याचक्षते । स्वरो गन्तेत्यर्थः । स्वृ शब्दोपतापयोरित्यस्माद्धातूनामनेकार्थत्वात्कर्तर्यचि रूपम् । अमुमादित्यं स्वर इति

प्रत्यास्वर इति चाऽऽचक्षते । उदयास्तमययोर्गमनप्रत्यागमनवत्त्वात् । प्राणस्य वायुरूपतया सदागतित्वेन प्रत्यागमनाभावान्न प्रत्यास्वरसंज्ञेति भावः। अतः स्वरसंज्ञावत्त्वादौष्ण्याच्च प्राणादित्यौ परस्परसमानावित्यर्थः ।

तस्माद्वा एतमिममसुं चोद्गीथमुपासीत ॥ २ ॥

तस्मादुभयोरपि समत्वादिमं प्राणं वाऽमुमादित्यं वैतमेतादृशगुणकमुद्गीथमुपासीत । उद्गीथेऽध्यस्तमुपासीतेत्यर्थः ॥ २ ॥

प्रकारान्तरेणोद्गीथोपासनमाह—

अथ खलु व्यानमेवोद्गीथमुपासीत।

उद्गीथं व्यानत्वेनोपासीतेत्यर्थः । को व्यान इत्यत्राऽऽह—

यद्वै प्राणिति स प्राणो यदपानिति सोऽपानोऽथ यः प्राणापानयोः संधिः स व्यानः ।

पुरुषो मुखनासिकेन यत्प्राणिति यं वायुं बहिर्निःसारयति स प्राणाख्यो वायोर्वृत्तिविशेषः। मुखनासिकेन यं वायुमन्तराकर्षति सोऽपानाख्यवृत्तिविशेषः । तयोरन्तर्वृत्तिविशेषरूपः संधिर्व्यान इत्यर्थः। उद्गीथे व्यानाध्यासहेतुमाह—

यो व्यानः सा वाक् ।

वाचो व्याननिर्वर्त्यत्वाद्वाग्व्यान एवेत्यर्थः। वाचो व्याननिर्वर्त्यत्व युक्तिमाह—

तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥ ३ ॥

तस्माद्वाचो व्याननिर्वर्त्यत्वादेव हेतोः श्वासमोक्षाकर्षणलक्षणप्राणापानौ विनैव तत्संधिरूपया व्यानवृत्त्या वाचमभिव्याहरतीत्यर्थः ॥ ३ ॥

या वाक्सर्क्तस्मादप्राणन्ननपानन्नृचमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्ननपानन्साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति ॥ ४ ॥

अप्राणताऽनपानता पुंसा क्रियमाणत्वादेव व्यानस्य वागृक्सामोद्गीथानां चैक्यमित्यर्थः ॥ ४ ॥

अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाऽग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥

लोकेऽग्निमथनमर्यादाधावनदृढधनुरारोपणादिवीर्यवत्तराणि कर्माणि व्यानसाध्यान्येव । अतो हेतोरुद्गीथाख्यवीर्यवत्कर्मणोऽपि व्यानसाध्यत्वाद्व्यानमेवोद्गीथमुपासीतेत्यर्थः ॥ ५ ॥

अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति ।

त्रीण्युद्गीथनामानुप्रविष्टान्यक्षराण्येवोपासीतेत्यर्थः ।

प्राण एवोत्प्राणेन ह्युत्तिष्ठति ।

उदित्यक्षरे प्राणबुद्धिः कार्येत्यर्थः । तत्र हेतुः प्राणेन ह्युत्तिष्ठति ।

वाग्गीर्वाचो ह गिर इत्याचक्षते ।

गीरित्यक्षरे वाग्बुद्धिः कार्या । वाचो गीःशब्दवाच्यत्वाद्गीरित्यस्य वागध्यासाधिष्ठानत्वमुपपद्यत इति भावः ।

अन्नं थम् ।

थमित्यक्षरेऽन्नबुद्धिः कर्तव्येत्यर्थः । तत्र हेतुमाह—

अन्ने हीदꣳ सर्वꣳ स्थितम् ॥ ६ ॥

अन्नस्य सर्वस्थानत्वेन थकारवत्त्वसाम्यात्थशब्देऽन्नबुद्धिर्युज्यत इति भावः ॥ ६ ॥

प्रकारान्तरेणोद्गीथोपासनमाह—

द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थꣳ सामवेद एवोद्यजुर्वेदो गीर्ऋग्वेदस्थम् ।

उदक्षरे द्युलोकादित्यसामवेददृष्टिर्गीरक्षरेऽन्तरिक्षवायुयजुर्वेददृष्टिस्थमक्षरे पृथिव्यग्न्यृग्वेददृष्टिश्च कार्येत्यर्थः । उक्तस्य चतुर्विधस्योद्गीथनामाक्षरोपासनस्य फलमाह—

दुग्धेऽस्मै वाग्दोहम् ।

वागस्मा उपासकाय सकामाय दोहं दोग्धि । कं दोहमित्यत्राऽऽह—

यो वाचो दोहः ।

वाक्साध्यं फलमित्यर्थः । फलान्तरमप्याह—

अन्नवानन्नादो भवति ।

प्रभूतान्नो दीप्ताग्निश्च भवतीत्यर्थः ।

य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत ।

आशीःसमृद्धिहेतुभूतान्युपासनानीति मत्वोपासनं कुर्यादित्यर्थः । केषामुपासनं कार्यमित्यत्राऽऽह—

येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥ ८ ॥

उपधावेच्चिन्तयेदुपासीतेत्यर्थः ॥ ८ ॥ शिष्टं स्पष्टम्

यस्यामृचि तामृचम् ।

यस्यामृचि साम्ना स्तोष्यन्स्यात्तामृचं चिन्तयेदित्यर्थः ।

यदार्षेयं तमृषिम् ।

ऋषिसंबन्ध्यार्षेयमृषिद्दृष्टमित्यर्थः । यस्याऽऽर्षेयं यदार्षेयं शिवभागवतवत्समासः । साम यद्दृषिकं तमृषिं चिन्तयेदित्यर्थः ।

यां देवतामभिष्टोष्यन्स्यात्तां देवतामुपधावेत्॥९॥ स्पष्टम् ॥ टी

येन च्छन्दसा स्तोष्यन्स्यात्तच्छन्द उपधावेत् ।

छन्दो गायत्र्यादिकमित्यर्थः ।

येन स्तोमेन स्तोष्यमाणः
स्यात्तꣳ स्तोममुपधावेत्॥१०॥

स्तोमस्त्रिवृत्पञ्चदशादिलक्षण ऋक्संख्याविशेषः ॥ १० ॥

यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावेत् ॥ ११ ॥

यद्दिगभिमुखतया स्तोष्यन्स्यात्तां दिशं च ध्यायेदित्यर्थः ॥ ११ ॥

आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तः ।

उक्तं सर्वं ध्यात्वाऽन्ततोऽन्त आत्मानमप्युपसृत्य ब्रह्मात्मकं ध्यात्वा काममात्मन इष्टं ध्यायन्नप्रमत्तोऽवहितः स्वरवर्णाद्यभ्रेषानुकूलमनोवधानयुक्तः सन्बहिष्पवमानादिस्तोत्रमारभेतेत्यर्थः ।

अभ्याशो ह यदस्मै स कामः समृध्येत
यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥१२॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

---

यत्कामनया स्तोत्रं करोति स कामो यस्मात्कारणादभ्याशः क्षिप्रं समृध्येत समृद्धिं प्राप्नोतीत्यर्थः । अभ्याङ्पूर्वादश्नोतेरसुन्यभ्याश इति रूपं क्षिप्रफलसिद्धिरुपसरणफलमित्यर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ १२ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

---

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति
ह्युद्गायति तस्योपव्याख्यानम् ॥१॥

पूर्ववदर्थः । अत्रोक्तस्यैवोद्गीथोपासनस्य पुनः परामर्शो मध्य उद्गीथनामाक्षराद्युपासनयाऽन्तरितत्वादिति द्रष्टव्यम् ॥ १ ॥

देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन् ।

देवा मरणभीता वैदिकं कर्म प्रारब्धवन्त इत्यर्थः ।

ते छन्दोभिरच्छादयन् ।

छन्दोभिः कर्मविनियुक्तैर्वैदिकैर्मन्त्रैर्मृत्युभीताः सन्त आत्मानं छादितवन्त इत्यर्थः । वैदिकमन्त्रकञ्चुकच्छन्ना इति यावत् ।

यदेभिरच्छादयꣳस्तच्छन्दसां छन्दस्त्वम् ॥ २ ॥

छादकत्वादेव वैदिकमन्त्राणां छन्दस्त्वमित्यर्थः ॥ २ ॥

तानु तत्र मृत्युर्यथा मत्स्यमुदके परि-
पश्येदेवं पर्यपश्यदृचि साम्नि यजुषि ।

उशब्दो निरर्थकः । तान्देवान्कर्मपरान्यथा मत्स्यग्राह्युदके मत्स्यं परिपश्यत्येवं मृत्युस्त्रयीविहितं कर्मानुप्रविष्टान्कर्मभ्रंशसमयं प्रतीक्ष्य ग्रहीतुमैच्छत् ।

ते नु विदित्वोर्ध्वा ऋचः साम्नो
यजुषः स्वरमेव प्राविशन् ॥ ३ ॥

ते देवा मृत्योश्चिकीर्षितं ज्ञात्वा त्रयीविहितयज्ञादिकर्मभ्य उद्गताः कर्मनिर्मलीकृतान्तःकरणाः सन्तः स्वरशब्दितमोंकारमुपासितुं प्रवृत्ता इत्यर्थः । नुशब्दः खल्वर्थः ॥ ३ ॥

कथं पुनः स्वरशब्दवाच्यत्वमोंकारस्येत्यत्राऽऽह—

यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवꣳ सामैवं यजुः ।

यदा वर्गादिकमारभते तदोमिति शब्दं करोतीत्यर्थः ।

एष उ स्वरः ।

तस्मादेष ओंकारः स्वर इत्यर्थः ।

यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य
देवा अमृता अभया अभवन् ॥ ४ ॥

मरणभयादिनिवर्तकमोंकारं प्रविश्य देवा अमृताश्चाभयाश्चाभवन् ॥ ४ ॥

स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ स्वरममृतमभयं
प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ ५ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य चतुर्थः
खण्डः ॥ ४ ॥

---

य एवं विद्वानेतदक्षरं प्रणौति स्तौति । णु स्तुताविति हि धातुः ।

३५

उपास्त इति यावत् । तादृशामृतत्वादिगुणकं प्रणवं प्रविश्य देवा यादृशामृतत्वयुक्तास्तादृशो भवतीत्यर्थः ॥ ५ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य चतुर्थः खण्डः ॥ ४ ॥

---

प्रणवोद्गीथयोरेकत्वविज्ञानमनेकपुत्रफलकमुपदिश्यते—

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति ।

उद्गात्रा प्रयुज्यमानो य उद्गीथ उद्गीथावयवोंकारः स एव होत्रा प्रयुज्यमानः प्रणवः । यश्च होत्रा प्रयुज्यमानः प्रणवः स एवोद्गात्रा प्रयुज्यमान उद्गीथावयवोंकार इतीतरेतरैक्याध्यासः कर्तव्य इत्यर्थः । एवं तयोरैक्यं कृत्वा तत्राऽऽदित्यदृष्टिमुपदिशति—

असौ वा आदित्य उद्गीथ एष प्रणवः ।

कथमादित्यस्य प्रणवत्वमित्यत्राऽऽह—

ओमिति ह्येष स्वरन्नेति ॥ १ ॥

एष आदित्य ओमिति स्वरन्कर्तव्यकर्मणामोमित्यनुज्ञां कुर्वन्निवोदेति । स्वृ शब्दोपतापयोरिति हि धातुः । अतः सविता प्रणवोऽत एवोद्गीथश्चेति भावः ॥ १ ॥

एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमे-
कोऽसीति ह कौषीतकिः पुत्रमुवाच ।

एतमादित्यमेवोद्गीथं गीतवानस्मि न तु बहुरश्मिगुणविशिष्टतयोपासितवानस्मि । तेन दोषेण मम त्वमेक एव पुत्रोऽभूरिति कौषीतकिः स्वपुत्रमुवाचेत्यर्थः ।

रश्मींस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्ति ।

तस्मात्त्वं बहुरश्मिविशिष्टादित्यविज्ञानावृत्तिं कुरु तव रश्मिबहुत्वविज्ञानमहिम्ना बहवः पुत्रा भविष्यन्तीत्यप्युवाचेति पूर्वेण संबन्धः । पर्यावर्तयादिति पुरुषव्यत्ययश्छान्दसो लेटि लेटोऽडाटावित्याडागमः ।

इत्यधिदैवतम् ॥ २ ॥

उपदिष्टमिति शेषः ॥ २ ॥

अथाध्यात्मम्।

उपदिश्यत इति शेषः।

य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत।

स्पष्टोऽर्थः।

ओमिति ह्येष स्वरन्नेति ॥ ३ ॥

एष प्राणो वागादिप्राणप्रवृत्त्यर्थमोमित्यनुज्ञां कुर्वन्निव संचरति तस्मात्प्राण एव प्रणव उद्गीथश्चेत्यर्थः ॥ ३ ॥

एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमे-
कोऽसीति ह कौषीतकिः पुत्रमुवाच।

पूर्ववदर्थः।

प्राणाꣳस्त्वं भूमानमभिगायताद्ब-
हवो वै मे भविष्यन्तीति ॥ ४ ॥

मे बहवः पुत्रा भविष्यन्तीत्यभिसंधाय मुख्यं प्राणमुपासीनस्त्वं भूमानं बहुत्वमाश्रितान्वागादीन्प्राणांश्च मुख्यप्राणेन सहाभिसंधायाभिगायतादुद्गानं कुर्वित्यर्थः ॥ ४ ॥

उक्तप्रणवोद्गीथैकत्वविज्ञानफलमाह—

अथ खलु य उद्गीथः। स प्रणवो यः
प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरु-
द्गीथमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य पञ्चमः
खण्डः ॥ ५ ॥

---

अपि दुरुद्गीथं वेदनहीनमप्युद्गीथमित्यर्थः। होतृषदनाद्धोतृकर्तृकोद्गीथप्रणवैक्यज्ञानादित्यर्थः। होतृषदनादित्यत्र पूर्वपदादिति षत्वम्। अयं भावः—उद्गीथप्रणवैकत्वविज्ञानं होत्राऽपि कर्तव्यमुद्गात्राऽपि कर्तव्यं प्रणवे होतुरुद्गीथ उद्गातुश्च कर्तृत्वात्। तत्रोद्गातुरेतादृशैकत्वविज्ञानाभा-

अनुसमाहरत्यनुसमाहरतीति

वेन दोषयुक्तमप्युद्गात्रा प्रयुज्यमानमुद्गीथं होता स्वीयोद्गीथप्रणवैकत्वविज्ञानमाहात्म्यादनुसमाहरति समादधात्यदुष्टं करोतीति । द्विरुक्तिर्विद्यासमाप्त्यर्था । एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते गुणोपसंहारपादे 'अङ्गेषु यथाश्रयभावः' [ब्र० सू० ३ । ३ । ६१] अङ्गेष्वाश्रितानामुपासनानां क्रतोर्बहिः प्रयोगासंभवेनाऽऽश्रयतन्त्रत्वस्य वक्तव्यतया प्रयोगवचनेनाऽऽश्रयाणामुद्गीथादीनां समुच्चयनियमेनाऽऽश्रितानामपि समुच्चयनियमो युक्तः । इतरथा तदाश्रितत्वानुपपत्तेरित्यर्थः । 'शिष्टेश्च' [ब्र० सू० ३ । ३ । ६२] गोदोहनेन पशुकामस्य प्रणयेदितिवदधिकारान्तराश्रवणेनोद्गीथमुपासीतेत्युद्गीथाङ्गतयोपासनविधानाच्च नियमेनोपासनोपादेया । न च वीर्यवत्तरत्वरूपफलार्थत्वस्य 'तन्निर्धारणानियमः' [ब्र० सू० ३ । ३ । ४२] इत्यत्रोक्तत्वात्कथं तस्योद्गीथाङ्गत्वमिति वाच्यम् । उद्गीथमुपासीतेतिवाक्येनोपासनस्योद्गीथरूपाश्रयसंबन्धे वीर्यवत्तरत्वरूपफलसंबन्धे च बोध्यमाने वाक्यभेदप्रसङ्गात् । न च वाक्यभेदभीत्या तस्य फलविधित्वासंभवेऽपि तस्य फलाकाङ्क्षायां रात्रिसत्रन्यायेन वीर्यवत्तरत्वस्यैवाऽऽर्थवादिकस्य फलत्वकल्पनं संभवतीति वाच्यम् । पर्णतादावपि तथा प्रसङ्गात् । 'समाहारात्' [ब्र० सू० ३ । ३ । ६३] होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति [छा० १ । ५ । ५] इत्युपासनस्य समाहारनियमो दृश्यते । उद्गातृकृतवेदनहानिप्रयुक्तोद्गीथवैगुण्यस्य होतृकर्तृकप्रणवोद्गीथैकत्वविज्ञानेन समाधानोक्त्योपासनस्याऽऽवश्यकत्वप्रतीतेरित्यर्थः । 'गुणसाधारण्यश्रुतेश्च' [ब्र० सू० ३ । ३ । ६४] उपासनगुणस्योपास्यस्य प्रणवस्य 'तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायतीति' [छा० १ । १ । ९ । ] इति साधारण्यश्रुतेश्चोपासनावश्यकता गम्यते । प्रकृतपरामर्शिना तेनेतिशब्देन सोपासनस्य प्रणवस्यैवं प्रतीतेः । उपासनानियमोऽस्तीति प्राप्त उच्यते—'न वा तत्सहभावाश्रुतेः' [ब्र० सू० ३ । ३ । ६५] न वा क्रतुषूपादाननियम उद्गीथोपासनादेः । कुतः । तत्सहभावाश्रुतेरुद्गीथोभावाश्रुतेरित्यर्थः । वीर्यवत्तरत्वरूपफलार्थतया गोदोहनतुल्यत्वेन क्रत्वर्थत्वाभावादिति भावः । न च पर्णतादेरपि पुरुषार्थत्वप्रसङ्गः । पर्णताया जुहूसंबन्धेऽप्यव्यापाररूपतया फलनिष्पादकत्वाभावेन फलाकाङ्क्षाया एवाभावात्फलकल्पनाया अप्रसक्तेः । अतः फलाकाङ्क्षासिद्ध्यर्थं क्रतूपरागेण व्यापाररूपतां संपादयितुं जुहूलिङ्गेन क्रतुमुपस्थाप्य तत्संबन्धबोधकः शब्दो वा कल्प्यः । जुहूशब्दस्य जुहूसं-

बन्धिक्रतुलक्षकत्वं वा कल्प्यम्। ततश्च क्रतुफलेनैव नैराकाङ्क्ष्याद्रात्रिसत्रन्यायेनाऽऽर्थवादिकफलकल्पना न समुन्मिषति। इहोपासनायाः स्वयं व्यापाररूपायाः क्रतूपरागमन्तरेणैव फलाकाङ्क्षा संभवति। सत्यां च फलाकाङ्क्षायां वाक्यशेषस्यैव फलसमर्पकतया परिणामसंभवे फलवत्कर्मान्तरबोधकवाक्यकल्पनाद्यनपेक्षणात्तस्माद्वाक्यशेषश्रुताय तस्मै फलायोद्गीथाद्याश्रयविशिष्टोपासनविधिरित्येव युक्तम्। न चोपासनानामाश्रयतन्त्रत्वात्सत्याश्रये तत्तन्त्राणामुपासनानामप्यावश्यकत्वमिति वाच्यम्। इदमेव ह्युपासनानामाश्रयतन्त्रत्वं यदाश्रये सत्येव वृत्तिर्नान्यदाऽस्तीति न तु यावदाश्रयसत्त्वं वृत्तिरिति। ततश्च कामोपबद्धत्वादुपासनानां कामानां चानित्यत्वात्तदवबद्धानामप्युपासनानामनित्यत्वमेव। 'दर्शनाच्च' [ ब्र० सू० ३।३।६६ ] 'एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' [ छा० ४।१७।१० ] इति ब्रह्मणो वेदनेनैव सर्वेषां रक्षणं ब्रुवतीति श्रुतिरुद्गातृप्रभृतीनां वेदनस्यानियमं दर्शयतीति स्थितम्। केचित्तूद्गीथविद्यायाः क्रत्वर्थत्वाभावे 'अन्यथात्वं शब्दादिति चेत्।' [ ब्र० सू० ३।३।६ ] इत्यधिकरण उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलकत्वेऽप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमिति देवताधिकरणे प्रतिपादितमिति भाष्यं विरुध्येत। तथा पुरुषार्थाधिकरणे 'यदेव विद्यया करोति' [ छा०१।१।१० ] इति विद्यायास्तृतीयाश्रुत्या कर्माङ्गत्वप्रतिपादनान्न विद्यातः पुरुषार्थ इति 'तच्छ्रुतेः' [ ब्र० सू० ३।४।४ ] इति सूत्रेण पूर्वपक्षे कृते तत्र विद्याशब्दस्य प्रकृतोद्गीथविद्याविषयत्वेनोद्गीथविद्यामात्रस्य कर्माङ्गत्वेऽपि न ब्रह्मविद्यायाः कर्माङ्गत्वमस्तीत्येतदर्थप्रतिपादकयोः 'असार्वत्रिकी' [ ब्र०सू०३।४।१० ] इति सूत्रतद्भाष्ययोर्विरोधश्च स्यादतश्चास्त्येव क्रत्वर्थत्वम्। न च 'तन्निर्धारणानियमः।' 'अङ्गेषु यथाश्रयभावः' [ ब्र०सू०३।३।४२।६१ ] इत्यधिकरणद्वयविरोधः। तयोर्नियतक्रत्वर्थत्वप्रतिक्षेपमात्रपरत्वात्। न च क्रत्वर्थत्वेऽप्यार्थवादिकफलस्वीकारे पर्णताया अप्यपापश्लोकश्रवणफलकत्वप्रसङ्ग इति शङ्क्यम्। प्रस्तरप्रहरणस्य क्रत्वर्थस्यापि सूक्तवाकमन्त्रप्रतिपाद्यफलार्थत्ववदुपकोसलविद्याङ्गभूताग्निविद्यायाः 'नास्यावरपुरुषाः क्षीयन्ते' [ छा०४।११।२ ] इति प्रतिपन्नब्रह्मविद्याविरोधितदुपयोगिफलार्थत्ववच्च क्रत्वर्थाया अपि पर्णताया अर्थवादप्रतिपन्नक-

त्वविरुद्धफलार्थत्वे न दोष इति भाष्यकाराशय इति वदन्ति । अन्ये तु 'अन्यथात्वं शब्दात्' [ ब्र०सू०३।३।६ ] इत्यत्र भाष्यस्यान्वारुह्योक्तत्वात्क्रत्वर्थत्वं न भाष्यकृदभिमतमिति वदन्ति । प्रकृतमनुसरामः ॥ ५ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

---

प्रकारान्तरेणोद्गीथोपासनं प्रस्तूयते—

इयमेवर्गग्निः साम ।

इयमित्युक्त
ऋचि पृथ्वीदृष्टिः साम्न्यग्निदृष्टिश्च कर्तव्येत्यर्थः ।

तदेतदेतस्यामृच्यध्यूढꣳ साम ।

तदेतदग्न्याख्यं सामैतस्यां पृथिवीरूपायामृच्यध्यूढमुपरिस्थितमित्यर्थः । अत एवाद्याप्यृगारूढमेव साम गीयत इत्याह—

तस्मादृच्यध्यूढꣳ साम गीयते ।

एवमृक्सामयोः पृथिव्यग्निदृष्टिं विधाय सामनामावयवभूतयोः साशब्दामशब्दयोः पृथिव्याग्निदृष्टिः कर्तव्येत्याह—

इयमेव साऽग्निरमः ।

उक्तोऽर्थः ।

तत्साम ॥ १ ॥

तत् तत एव परस्परसंसृष्टपृथिव्यग्निरूपसाशब्दामशब्दमेलनेन सामव्यवहारो लोके प्रवर्तत इत्यर्थः ॥ १ ॥

अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत्साम ॥ २ ॥

द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते द्यौरेव साऽऽदित्योऽमस्तत्साम ॥ ३ ॥

नक्षत्राण्येवर्क्चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढꣳ
साम तस्मादृच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा
चन्द्रमा अमस्तत्साम ॥ ४ ॥

पूर्ववदर्थः ॥ २ ॥ ३ ॥ ४ ॥

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्क् ।

शुक्लं भाः शुक्ला दीप्तिरित्यर्थः । शुक्लमिति लिङ्गव्यत्ययश्छान्दसः ।

अथ यन्नीलं परः कृष्णं तत्साम ।

परः कृष्णमतिशयेन कार्ष्ण्यरूपं परः कृष्णमिति प्रसिद्धं यन्नीलं तत्सामेत्यर्थः । आदित्ये कार्ष्ण्यस्य समाहितदृष्टिभिरीक्ष्यमाणत्वात्तव-स्तीति द्रष्टव्यम् । अत्र परः शब्दः सान्तो द्रष्टव्यः । शिष्टं स्पष्टम् ।

तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते ॥५॥

अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ

पूर्ववदर्थः । यन्नीलं परः कृष्णं तदमस्तत्साम ।

एवमृचि पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुक्लभारूपत्वदृष्टिं साम्न्य-ग्निवाय्वादित्यचन्द्रादित्यगतनीलभारूपत्वदृष्टिं च विधायाऽऽह—

अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते ।

अन्तरादित्ये

आदित्यमण्डलस्यान्तर्हिरण्मयो रमणीयो यो योगिभिर्दृश्यत इत्यर्थः । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः'[क०१।३।१२]इति श्रुत्यै-कार्थ्याद्धिरण्मय इति रूपसामान्याच्चन्द्रमुखवदिति वाक्यकारः । ततश्च हिरण्मयशब्दस्य न मुख्यार्थो ग्राह्य इति वाक्यकाराभिप्रायः । ततश्च हिरण्मयत्वमुज्ज्वलत्वमित्यर्थः । ततश्च नीलतोयदाभस्यापि हिरण्मयत्वे नानुपपत्तिः । यद्वा कश्चिन्न तद्धेमसमानवर्णं तस्याऽऽननमिति श्रीरामाय-णप्रयोगात् 'पश्यते रुक्मवर्णम् [मु० ३ । १ । ३] इति श्रुतेश्च नीलतोयदाभस्यापि रुक्मवर्णत्वं संभवति । तत्र हेतुश्च संप्रदायगम्यः । एतत्सर्वं वेदार्थसंग्रहश्रुतप्रकाशिकायां स्पष्टं तत एवावगन्तव्यम् । अत्र केचित् 'कप्यासं पुण्डरीकम्' [छा० १ । ६ । ७] इति वाक्ये कप्यासशब्देनाऽऽदित्यमण्डलमुच्यते पुण्डरीकमित्यनेन हृदयपुण्डरीक-मुच्यते । अतश्च यथा सूर्यमण्डलं हृदयपुण्डरीकं चोपासनस्थानमेवमु-

(२) कथमिति चेत् - इति ग्रन्थारम्भः ।



पासकस्याक्षिणी अपि परमात्मन उपासनस्थानमिति परोक्तव्याख्यानदूषणावसरे व्यासार्यैरादित्यमण्डलरूपस्थानावरुद्धेऽक्ष्णोः स्थानतया विधानं न संभवतीत्युक्तेरादित्यमण्डलस्थानमुत्पत्तिशिष्टमिति प्रतीयते। ततश्च य एषोऽन्तरादित्य इति वाक्यमुपासनोत्पत्तिपरम्। ततश्च पुरुषो दृश्यत इत्यत्र द्रष्टव्य इत्यर्थ इति व्यासार्याभिप्रायः। न चाऽऽदित्यमण्डलस्योत्पत्तिशिष्टत्व उत्पत्तिशिष्टस्थानावरुद्धे भाष्यकृदभिमतपुण्डरीकदलामलायताक्षत्वादेः कथं विधानमिति वाच्यम्। पुण्डरीकाक्षत्वादेरुत्पत्तिशिष्टादित्यमण्डलस्थानाविरुद्धत्वादुत्पत्तिशिष्टाविरुद्धगुणानां विधानसंभवात्। नन्वेवं 'सर्वत्र प्रसिद्धोपदेशात्' [ब्र० सू० १। २। १] इत्यत्र 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' [छा०३।१४।१] इत्युत्पत्तिशिष्टसार्वात्म्यावरुद्धे मनोमयत्वादीनां विधानं न संभवतीत्याक्षिप्य सर्वं खल्विति वाक्यस्योपासीतेत्यनेनैकवाक्यत्वाभावेन सार्वात्म्यस्य नोत्पत्तिशिष्टत्वमिति व्यासार्यैः समर्थनमयुक्तं स्यात्। मनोमयत्वादीनामुत्पत्तिशिष्टसार्वात्म्याविरोधादित्येव परिहारसंभवेन वाक्यभेदमाश्रित्य सार्वात्म्यस्योत्पत्तिशिष्टत्वाभावसमर्थनं मुधेति चेदुपायान्तरस्योपायान्तरादूषकत्वादिति वदन्ति। अन्ये त्वादित्यमण्डलस्थानावरुद्ध इत्यस्य नोत्पत्तिशिष्टस्थानावरुद्धत्वमभिप्रेतमपि तु युगपदनुपसंहरणीयादित्यमण्डलाक्षिरूपस्थानद्वयविधानेऽष्टदोषदुष्टविकल्पप्रसङ्गादित्येव तात्पर्यमित्याहुः। 'यदा पश्यः पश्यते रुक्मवर्णम्' [मु०३। १। ३] इति प्रकरणे मनसा तु विशुद्धेनेति रुक्मवर्णविग्रहविशिष्टस्य (वि)शुद्धमनोग्राह्यत्वोक्तेरारोपिताकारस्य विशुद्धमनोग्राह्यत्वाभावादनारोपितत्वं सिद्धम्। 'ईक्षतिकर्मव्यपदेशात्सः' [ब्र०सू०१।३।१३] इत्यत्रेक्षणस्य परमात्मविषयत्वं वक्तव्यमिति परैरप्यङ्गीकृतत्वाच्च। 'आदित्यवर्णं तमसः परस्तात्' [श्वे०३।८] इति तमःपारवर्तिन आदित्यवर्णविग्रहविशिष्टत्वाभिधानेन कल्पितत्वाप्रसक्तेः। न हि कल्पितस्य तमःपारवर्तित्वं संभवति।

हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ॥ ६ ॥

रमणीयश्मश्रुकेशो रमणीयसर्वावयव इत्यर्थः ॥ ६ ॥

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी ।

कं पिबतीति कपिरादित्यस्तेनास्यते क्षिप्यते विकास्यत इति कप्यासम्। तथाऽऽह वाक्यकारः—आदित्यक्षिप्तं वा श्रीमत्त्वादिति। यद्वा

कं पिबतीति कपिर्मालं तस्मिन्नास्त इति कप्यासम् । अपचितादपि पङ्कजान्नालस्थस्य पुण्डरीकस्य शोभातिशयशालित्वात्ताद्दशमिह विवक्षितम् । यद्वा कं जलम् । आस उपवेशन इति धातुरपिपूर्वकः । वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरिति वचनादकारलोपः । के जलेऽप्यास्त इति कप्यासं सलिलस्थमित्यर्थः । एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धन्तितत्वमभिप्रेत्य भगवता भाष्यकारेण वेदार्थसंग्रहे—'गम्भीराम्भःसमुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षण' इत्यभिहितम् । मर्कटजघनसद्दशपुण्डरीकसादृश्याद्यर्थान्तरं त्वश्लीलत्वादिदोषदुष्टतया वाक्यकृदनादृतत्वाद्भाष्यकारेणाप्यनादृतम् । यद्यप्यमरकोशे पुण्डरीकं सिताम्भोजमित्यनुशिष्टं तथाऽपि शबरस्वामिना नवमाध्याये 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकाम' इति विहितायामिष्टौ 'पौण्डरीकाणि बर्हींषि भवन्तीति' स्तरणार्थत्वेन विहितेषु पुण्डरीकेष्वतिदेशप्राप्तस्य 'दर्भैः स्तृणीत हरितैरिति मन्त्रस्य दर्भपदस्थाने पुण्डरीकपदं हरितपदस्थाने रक्तपदमूहितव्यमित्युक्तत्वाद्रक्ताम्भोजमेव पुण्डरीकमिति द्रष्टव्यम् ।

तस्योदिति नाम ।

स्पष्टोऽर्थः । तस्योन्नामकत्वे हेतुमाह—

स एष सर्वेभ्यः पाप्मभ्य उदितः ।

(१) सर्वपापोद्गतत्वादुन्नामक इत्यर्थः इति ग्रन्थान्तरकोशे पाठः ।

सर्वपापोद्गतत्वादुन्नामकत्वमित्यर्थः (१) । नीडाच्छकुन्तस्योद्गमनवत्पापपञ्जरादुद्गमनरूपमुख्यार्थस्य कुत्राप्यभावादुद्गमनेन तत्संबन्धराहित्यं लक्ष्यते । 'नैनᳪ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्' [ छा० ८ । ४ । १ ] इति परमात्मनः सुकृतदुष्कृतसंबन्धाभावो हि प्रतिपाद्यते तरतेः प्राप्तिवाचित्वात् । पापशब्दश्च पुण्यपापरूपोभयविधकर्मपरः । परमात्मप्रकरणेषु 'नैनᳪ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतᳪ सर्वे पाप्मानोऽतो निवर्तन्ते' [छा० ८ । ४ । १ ] इति सुकृतेऽपि पापशब्दप्रयोगात् । 'पाप्मनः कालजरामृत्युशोकादयः संख्यातत्वादिति वाक्यकारवचनादलौकिकत्वे सत्यनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तयोगात्पुण्यस्यापि पापशब्दाभिधेयत्वोपपत्तेः । मुमुक्ष्वपेक्षया स्वर्गादीनामप्यनिष्टत्वात् ।

एते वै निरयास्तात स्थानस्य परमात्मनः ।
क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ॥
क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ।

इति स्मरणात्सर्वपापोदितत्वं नाम कर्मवश्यतागन्धराहित्यमिति फलितोऽर्थः । कृतानामपि कर्मणां फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदैश्वरस्वभावविशेषोऽपहतपाप्मत्वाख्यः सर्वपापोदितशब्दार्थ इति द्रष्टव्यम् । एवं नाम शिष्टज्ञानफलमाह—

उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

तस्यर्क्च साम च गेष्णौ । गेष्णौ

पृथिव्यग्न्यादित्यदृष्टिविशिष्टतया प्राक्प्रस्तुते ऋक्सामे एतस्य गान-रूपे । यद्यप्यृचो गानाश्रयत्वेऽपि न गानरूपत्वं तथाऽप्यभेदोपचारेण गेष्णत्वोक्तिर्द्रष्टव्या । अव्युत्पन्नो गेष्णशब्दो व्यत्ययेन पुंस्त्वम् । अग्नी-न्द्रादिप्रतिपादकर्क्सामगेयत्वोक्त्या सर्वात्मकत्वमुक्तं भवति ।

तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता ।

यस्मादुन्नामकत्वं परमात्मनोऽत एव तद्गानरूपत्वाद्द्वितीयभक्तेरु-द्गीथसंज्ञत्वं तद्गातुरुद्गातृसंज्ञावत्त्वं चेत्यर्थः । यद्वा परमात्मन उन्ना-मकत्वादृक्सामगेष्णत्वाच्चोद्गेष्णस्य परमात्मन उद्गीथत्वमुपपद्यते तत उद्गीथे परमात्मदृष्टिर्युक्तेत्यर्थः ।

स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च ।

स एष हिरण्मयः पुरुष आदित्यमण्डलोर्ध्ववर्तिलोकानां देवभोग्य-भोगोपकरणभोगस्थानानां च नियन्तेत्यर्थः ।

इत्यधिदैवतम् ॥ ८ ॥

---

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य षष्ठः खण्डः ॥ ६ ॥

उपदिष्टमिति शेषः ॥ ८ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां प्रथमप्रपाठकस्य षष्ठः खण्डः ॥ ७ ॥

---

अथाध्यात्मम् ।

उपदिश्यत इति शेषः ।

वागेवर्क्प्राणः साम तदेतदेतस्यामृच्यध्यूढꣳ
साम तस्मादृच्यध्यूढꣳ साम गीयते वागेव सर्वं पूर्ववत्॥१॥
सा प्राणोऽमस्तत्साम ॥ १ ॥ २॥३॥४॥

चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मा-
दृच्यध्यूढꣳ साम गीयते चक्षुरेव साऽऽत्माऽमस्तत्साम॥२॥

श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्य-
ध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते
श्रोत्रमेव सा मनोऽमस्तत्साम ॥ ३ ॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ
यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्य-
ध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते
अथ यदेवैतदक्ष्णःशुक्लं भाः सैव साऽथ
यन्नीलं परः कृष्णं तदमस्तत्साम ॥ ४ ॥

एवमृचि वाक्चक्षुःश्रोत्राक्षिगतशुक्लभारूपत्वदृष्टिं साम्नि प्राणच्छायात्ममनोक्षिगतपरःकृष्णरूपत्वदृष्टिं च विधायाऽऽह—

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते
सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म ।

चक्षुषि यः पुरुषो योगिभिर्दृश्यते स एवर्ग्यजुःसामात्मोक्थाविशिष्टात्मा ब्रह्म चेत्यर्थः । अत्रोक्थस्य त्र्यपेक्षया पृथक्परिगणनं गोबलीवर्दन्यायेन द्रष्टव्यम् ॥१॥२॥३॥४॥

तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमु-
ष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥

तस्य एतस्याक्ष्यन्तर्वर्तिनः परमपुरुषस्याऽऽदित्यान्तर्वर्तिनो यद्धिरण्मयत्वा-

दिरूपमुदिति नाम ऋक्सामरूपगेष्णौ च तानि सर्वाणि भवन्तीत्यर्थः ॥ ५ ॥

स एष ये चैतस्मादर्वाञ्चो लोका-
स्तेषां चेष्टे मनुष्यकामानां चेति ।

एतस्मादक्षिस्थानादधोवर्तिनां लोकानां मनुष्यभोग्यादीनां चै[च] नियन्तेत्यर्थः ।

तद्य इमे वीणायां गायन्त्येतं ते गायन्ति ।

यस्मादयमीश्वरस्तस्माद्धेतोर्वीणागायकाः सर्वेऽपीममेव गायन्तीत्यर्थः । तस्य सर्वात्मकत्वेन देवमनुष्यादिकर्मकगानस्यापि परमात्मविषयत्वादिति भावः ।

तस्मात्ते धनसनयः ॥ ६ ॥

सनिर्लाभः । धनानां सनिर्येषां ते धनसनयः । ईश्वरगायकत्वादेव वीणागायकानां धनलाभवत्त्वं न ह्यनीश्वरगातृत्वे धनप्रसक्तिरस्तीति भावः ॥ ६ ॥

अथ य एतदेवं विद्वान्साम गायत्युभौ स गायति ।

अध्यात्माधिदैवतभिन्नविद्यायुक्तः सन्नुद्गीथं यो गायति स चाक्षुषमादित्यस्थं च गायतीत्यर्थः । उद्गीथस्य चाक्षुषेण परमात्मनाऽऽदित्यान्तर्वर्तिना च परमात्मनैक्याध्यासविशिष्टतया तादृशोद्गीथगायकस्यैव परमात्मगायकत्वादिति भावः । तस्यैवंविदः फलमुच्यते—

सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोका-
स्तांश्चाऽऽप्नोति देवकामांश्च ॥ ७ ॥
अथानेनैव ये चैतस्मादर्वाञ्चो लोका-
स्तांश्चाऽऽप्नोति मनुष्यकामांश्च ।

स विद्वानमुनैवाऽऽदित्यान्तर्वर्तिनोपासितेन स एष तदुपासनाविशिष्ट एतस्मादूर्ध्वलोकान्देवकामांश्चाऽऽप्नोति । अनेनाक्ष्यन्तर्वर्तिनोपासितेन मनुष्यलोकादधस्तनलोकान्मनुष्यकामांश्चाऽऽप्नोति । चक्षुरादित्यस्थानवर्तिपरमात्मोपासनया सर्वलोकाप्तिर्भवतीत्यर्थः ।

तस्मादु हैवं विदुद्गाता ब्रूयात् ॥ ८ ॥

कं ते काममागायानीति ।

एतादृशविद्यायुक्त उद्गाता यजमानं प्रति हे यजमान ते कं देवकामं मनुष्यकामं वा गानेन संपादयानीति ब्रूयादित्यर्थः । नन्वेतादृशोक्तावुद्गातुः कथं सामर्थ्यमित्यत्राऽऽह–

एष ह्येव कामगानस्येष्टे य एवं विद्वा-
न्साम गायति साम गायति ॥ ९ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य
सप्तमः खण्डः ॥ ७ ॥

---

एवं विदुषः सामगस्य कामसंपादकगानसामर्थ्यमस्तीत्यर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था । एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते समन्वयाध्याये प्रथमपादे—अन्तरादित्येऽन्तरक्षिणि च वर्तमानत्वेन श्रुतः पुरुषो जीव एव । 'हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः' [छा० १।६।६] इति शरीरसंबन्धश्रवणाच्छरीरत्वस्यैव कर्मजन्यतावच्छेदकत्वेन कर्माजन्यशरीरासंभवात्प्रक्रमश्रुतेन शरीरित्वलिङ्गेन जीवत्वे निश्चित औपसंहारिकं सर्वपापोदितत्वमापेक्षिकं नेतव्यमिति पूर्वपक्षे प्राप्त उच्यते–'अन्तस्तद्धर्मोपदेशात्' [ब्र० सू० १।१।२०] आदित्याक्ष्यन्तर्वर्ती पुरुषः परमात्मैव परमात्मधर्मोपदेशात् । कर्मवश्यतागन्धराहित्यलक्षणं नित्याविर्भूतं सर्वपापोदितत्वं न परमात्मनोऽन्यत्र संभवति त्त्वश्च चरमश्रुतमपि 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' [छा० १।६।७] इति फलरूपतात्पर्यलिङ्गात्प्रबलम् । तथर्क्सामगेयत्वाक्षिप्तं सैवर्क्तत्सामेति वाक्यश्रुतं च सार्वात्म्यं परमात्मधर्मः । तथाऽक्ष्यादित्यवर्त्येकपुरुषगतोर्ध्वाधोवर्तिलोककामेश्वरत्वरूपं निरङ्कुशं सर्वकामेश्वरत्वमपि 'सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ताꣳश्चाऽऽप्नोति देवकामाꣳश्च । अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाऽऽप्नोति मनुष्यकामाꣳश्च' [छा०१।७।७।८] इति वाक्यशेषप्रतिपन्नफलरूपतात्पर्यलिङ्गानुगृहीतत्वात्प्रबलम् । अतः प्रबलैः परमात्मलिङ्गैः परमात्मत्वे निर्णीते—अजायमानो बहुधा विजायते ।

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ [गी०४।६]
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ [ गी० ४।८]

इच्छागृहीताभिमतोरुदेह इति श्रुतिस्मृत्यनुसारेणाजहत्स्वभावस्यैव परमात्मनो मायाशब्दितसंकल्पमात्रेणोपासकपरित्राणायाप्राकृतदिव्यविग्रहपरिग्रहोपपत्तेः । एतेन नित्यस्य सर्वज्ञस्य सर्वशक्तेर्ज्ञानार्थं प्रवृत्त्यर्थं वा करणानपेक्षणादात्मानन्दतृप्तस्य विग्रहे स्पृहासंभवाच्च विग्रहो न संभवतीति शङ्का प्रत्युक्ता । करणानपेक्षज्ञानक्रियस्यापि परमात्मन उपासकानुग्रहार्थं भोगार्थं च विग्रहस्वीकारोपपत्तेः । प्रभूतानन्दानामप्यानन्दान्तरापेक्षादर्शनेन निरतिशयानन्दस्वरूपस्यापि ब्रह्मणः प्रीतिविशेषापेक्षायाः संभवात् । न च विग्रहस्य भोग्यत्वे स्वरूपभोग्यत्ववैकल्यं शङ्क्यम् । स्वसंबन्धिभोग्यत्वस्य स्वभोग्यत्वातिशयावहत्वेन तद्वैकल्यावहत्वाभावात् । तत्र च

समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥

'नित्यालिङ्गस्वभावसिद्धिरिन्द्रायाकाराङ्गप्रत्यङ्गव्यञ्जनवती "उज्जहाराऽऽत्मनः केशौ सितकृष्णौ' अंशांशेनावतीर्योर्व्यामित्यादिप्रमाणान्नित्यस्य विग्रहस्याशिथिलसंस्थानस्यैवाप्राकृतानन्तावतारहेतुत्वमुपपद्यते चतुर्मुखदेहस्य संस्थानाशैथिल्येऽप्यनेकदेहोत्पादकत्वदर्शनात् । ततश्चोपासकानुग्रहार्थं स्वेच्छासृष्टाप्राकृतशरीरसंबन्धस्य प्रमाणसिद्धस्य परमात्मनि सत्त्वान्न हिरण्मयविग्रहसंबन्धानुपपत्तिः परमात्मनः । अतोऽक्ष्यादित्यान्तर्वर्ती परमात्मा । नन्वाऽऽदित्यपुरुषादन्यः परमात्मैव नास्तीत्यत्राऽऽह—' भेदव्यपदेशाच्चान्यः' [ ब्र० सू० १ । १ । २१ ] । 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद ' [ बृ० ३ । ७ । ९ ] इत्यादि[illegible]त्यादिपुरुषावेद्यस्य तन्नियन्तुः परमात्मनोऽन्यस्य प्रमाणसिद्धत्वात्तद्व्यतिरिक्तो नास्तीति न शङ्क्यम् । न च नित्यमुक्तव्यतिरिक्तः परमात्मा नास्तीत्यपि शक्यं वक्तुम् । आत्मनि तिष्ठन्निति

पर्यायै परिशुद्धमुक्तात्मभ्योऽपि भेदप्रतिपादनादतोऽन्तरादित्येऽन्तरक्षिणि च विद्यमानः परमात्मेति स्थितम् । प्रकृतमनुसरामः ॥७॥८॥९॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां प्रथमप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

प्रकारान्तरेणोपासनं विधातुमाख्यायिकामाह—

त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चै-
कितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ।

शालावत्सुतः शिलकनामा, दल्भगोत्रश्चिकितायनसुतः, जीवलसुतः प्रवाहणनामा । त्रय एते उद्गीथविज्ञाने निपुणा बभूवुरित्यर्थः । शालावत्यः । शालावच्छब्दादपत्यार्थेऽणि तदन्तात्स्वार्थेऽभिजिद्विदभृच्छालावदित्यादिना यञ्प्रत्ययः । दाल्भ्यः, दल्भशब्दाद्गोत्रापत्ये गर्गादित्वाद्यञ् । चिकितायनशब्दादपत्येऽर्थ ऋषित्वादणि चैकितायनः । जीवलशब्दादत इञि जैवलिः ।

ते होचुरुद्गीथे वै कुशलाः स्मो हन्तो-
द्गीथे कथां वदाम इति ॥ १ ॥

वयमुद्गीथ[illegible]ने कुशला भवामः । अतो विद्यावैशद्याय वादकथां परस्परं प्रवर्तयाम इत्यूचुरित्यर्थः ॥ १ ॥

तथेति ह समुपविविशुः ।

तथा कुर्म इत्यन्योन्यमुक्त्वैकत्रोपविष्टवन्त इत्यर्थः ।

स ह प्रवाहणो जैवलिरुवाच ।

प्रवाहणः क्षत्रियस्तौ ब्राह्मणौ प्रागल्भ्यादुवाचेत्यर्थः ।

उक्तिमेवाह— भगवन्तावग्रे वदतां ब्राह्मण-
योर्वदतोर्वाचꣳ श्रोष्यामीति॥२॥

भगवन्तौ पूजावन्तौ ब्राह्मणावग्रे वदन्तौ वादकथां कुरुतां तत्प्रकारं श्रोष्यामीति ॥ २ ॥

अभिजिद्- विदभृच्च- शालावच्च- शमीवद्- ऊर्णावच्च- श्रुमद्- अणो यञ् ।५।३।११८। अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात् ॥

स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच
हन्त त्वा पृच्छानीति पृच्छेति होवाच ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

का साम्नो गतिरिति ।

गतिरयनं प्राप्यमित्यर्थः ।

स्वर इति होवाच ।

स्वरात्मकत्वात्साम्न इति भावः ।

स्वरस्य का गतिरिति प्राण इति होवाच ।

प्राणनिर्वर्त्यत्वात्स्वरस्येति भावः । एवमुत्तरत्राप्यौचित्यमनुसंधेयम् ।

प्राणस्य का गतिरित्यन्नमिति होवाचा-
न्नस्य का गतिरित्याप इति होवाच ॥ ४ ॥
अपां का गतिरित्यसौ लोक इति होवाच ।

द्युलोकादेव वृष्टिप्रभवादिति भावः ।

अमुष्य लोकस्य का गतिरिति न
स्वर्गं लोकमतिनयेदिति होवाच ।

स्वर्गं लोकमतीत्य परमाश्रयान्तरं साम न नयेत् । स्वर्गलोकव्यतिरिक्तमाश्रयान्तरं साम न प्रापयेदित्यर्थः । न वदेदिति यावत् ।

हि यस्मात्सामस्व-र्गमेस्तावम्

स्वर्गं वयं लोकꣳ सामाभिसंस्थापयामः
स्वर्गसꣳस्तावꣳ हि सामेति ॥ ५ ॥

अतो वयमपि सामाभि साम प्रत्याश्रयत्वेन स्वर्गं लोकं सम्यक्स्थापयामः । 'स्वर्गो वै लोकः सामवेदः' इति श्रुत्या स्वर्गत्वेन साम्नः स्तूयमानत्वादित्यर्थः ॥ ५ ॥

तꣳ ह शिलकः शालावत्यश्चैकितायनं
दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते

दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते
विपतिष्यतीति मूर्धा ते विपतेदिति॥ ६॥

ते मूर्धा

हे दाल्भ्याप्रतिष्ठितं स्वर्गलोकं सामगतिपरम्पराविश्रान्तिभूमिं वदत-स्तव मते सामाप्रतिष्ठितमेव स्यात्। एतस्मिन्समये यः कश्चिदागत्य वादकथायामयुक्तमर्थं प्रतिजानानस्य ते मूर्धा विपतिष्यतीति यदि ब्रूयात्तदा विपतेदेव, न संशयः। मया तु सौहार्दात्तथा नोक्तमतो जीवसीति शिलक उक्तवानित्यर्थः॥ ६॥

हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच।

तर्ह्यहं सामगतिपरम्पराविश्रान्तिभूमिं त्वत्तो जानीयामिति प्रार्थितस्तथेत्युक्तवानित्यर्थः।

अमुष्य लोकस्य का गतिरित्ययं लोक इति होवाच।

यागदानहोमादिभिर्भूलोकस्य स्वर्गोपजीव्यत्वादिति भावः।

अस्यलोकस्य का गतिरिति न प्रतिष्ठां लोकमति
नयेदिति होवाच प्रतिष्ठां वयं लोकꣳ सामाभि-
सꣳस्थापयामः प्रतिष्ठासꣳस्तावꣳ हि सामेति॥ ७॥

पृथिवीलोकस्य का गतिरिति दाल्भ्येन पृष्टः शिलकः प्रतिष्ठां पृथिवीलोकमतिक्रम्य सामगतिपरम्पराविश्रान्तिभूमिमन्यं न कश्चिदपि वदेत्। अतो वयमपि तथैव वदामः। 'इयं वै रथंतरम्' इति श्रुत्या साम्नः प्रतिष्ठालोकत्वेन स्तूयमानत्वात्स्वर्गस्य ज्योतिश्चक्रलग्नतया बम्भ्रम्यमाणत्वेन प्रतिष्ठात्वाभावेऽपि पृथिव्यास्तु स्थिरत्वात्प्रतिष्ठात्वमित्युक्तवानित्यर्थः॥ ७॥

तꣳह प्रवाहणो जैवलिरुवाचान्त-
वद्वै किल ते शालावत्य साम।

अन्तवतीं पृथिवीं सामगतिपरम्पराविश्रान्तिभूमितया प्रतिजानानस्य ते मते सामान्तवदेव स्यादित्यर्थः।

यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति

मूर्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो
वेदानीति विद्धीति होवाच ॥ ८ ॥
इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्याष्टमः
खण्डः ॥ ८ ॥

---

पूर्ववदर्थः ॥ ८ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां प्रथमप्रपा-
ठकस्याष्टमः खण्डः ॥ ८ ॥

---

एवमनुमतः शिलको राजानं पृच्छति—

अस्य लोकस्य का गतिरित्याकाश इति होवाच ।

अस्य पृथिवीलोकस्य का गतिरिति शालावत्येन पृष्टः प्रवाहण आकाश इत्युक्तवानित्यर्थः । नित्यमत्राऽऽकाशते आकाशयतीति वा व्युत्पत्त्याऽऽकाशशब्दो ब्रह्मपरः । 'आकाशो वै नाम नामरूपयोर्निर्वहिता' [ छा० ८ । १४ । १ ] इत्यादावाकाशशब्दस्य ब्रह्मण्यपि प्रसिद्धत्वान्न तु भूताकाशपर इति द्रष्टव्यम् । तदेव गतित्वं प्रपञ्चयति—

सर्वाणि ह वा इमानि भूतान्याका-
शादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति।

चिदचिदात्मकप्रपञ्च आकाशादेवोत्पद्यते तत्रैव लीयत इत्यर्थः ।

आकाशो ह्येवैभ्यो ज्यायान् ।

ज्यायस्त्वं नाम सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयनिरुपाधिकोत्कर्षः ।

आकाशः परायणम् ॥ १ ॥

परायणत्वं परमगतित्वं परमप्राप्यत्वमिति यावत् ॥ १ ॥

स एष परोवरीयानुद्गीथः ।

पर उत्कृष्टो वरीयान्वरीयसामपि वर इत्यर्थः । अत्र परःशब्दः सकारान्तो द्रष्टव्यः । एवंरूप आकाश उद्गीथः परमात्मदृष्टिविशिष्ट उद्गीथ इत्यर्थः । उद्गीथ एतादृशाकाशदृष्टिः कर्तव्येति यावत् ।

स एषोऽनन्तः।

उद्गीथेऽध्यस्यमानोऽयमाकाशोऽनन्तोऽपरिच्छिन्न इत्यर्थः। ततश्चानन्तस्याऽऽकाशशब्दितस्य परमात्मन एव सामगतिपरम्पराविश्रान्तिभूमित्वान्मत्पक्षेऽन्तवद्वै किल ते सामेत्युक्तोऽन्तवत्त्वदोषो न प्रसरतीति भावः।

परोवरीयो हास्य भवति परोवरीयसो
ह लोकाञ्जयति य एतमेवं विद्वान्परो-
वरीयाꣳसमुद्गीथमुपास्ते ॥ २ ॥

यः परोवरीयांसमेतमाकाशशब्दितं परमात्मानं विद्वानाकाशत्वेनोद्गीथमुपास्ते तस्य परोवरीयस्त्वगुणकं जीवनं भवति परोवरीयस्त्वगुणकसकललोकावाप्तिश्च भवति ॥ २ ॥

प्रवाहणः स्वोक्तार्थं संवादयति—

तꣳ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच।

अतिधन्वनामा शुनकसुत उदरशाण्डिल्यायर्षये। उदरशब्देन संततिर्लक्ष्यते संततिशाली शाण्डिल्य इत्यर्थः। तस्मा एनमुद्गीथमुक्त्वाऽन्यदप्युवाचेत्यर्थः। किं तदित्यत्राऽऽह—

यावन्त एनं प्रजायामुद्गीथं वेदि-
ष्यन्ते परोवरीयो हैभ्यस्तावदस्मि-
ँल्लोके जीवनं भविष्यति ॥ ३ ॥

वेदिष्यन्त इत्येतद्व्यत्ययेनाऽऽत्मनेपदम्। प्रजायां त्वत्संततौ यावन्तः पुरुषा एनमुद्गीथमुपासिष्यन्ते तेषामुत्कृष्टमिह लोके जीवनं भविष्यतीत्यर्थः ॥ ३ ॥ मु

तथाऽस्मिँल्लोके लोक इति।

तथाऽमुष्मिन्नपि परलोके भविष्यतीत्यर्थः। परोवरीयो जीवनमित्यनुषङ्गः। लोके लोक इति वीप्सायां द्विर्वचनम्। इत्यतिधन्वोवाचेति पूर्वेणान्वयः। अत इदानींतनानामपि तद्विदां तत्फलमस्तीत्याह—

स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्या-

स्मिँल्लोके जीवनं भवति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य नवमः खण्डः ॥ ९ ॥

स्पष्टोऽर्थः। लोके लोक इति लोके लोक इति

द्विरुक्तिर्विद्यासमाप्त्यर्था। एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते समन्वयाध्याये प्रथमपादे—उद्गीथेऽध्यस्योपास्यमानाकाशो भूताकाश एव। आकाशशब्दस्य भूताकाशे रूढत्वेन रूढाकाशशब्दाभ्यासादिति पूर्वपक्षे प्राप्त उच्यते—'आकाशस्तल्लिङ्गात्' [ ब्र०सू०१।१।२२] आकाशशब्दाभिधेयः परमात्मा, निखिलजगदेककारणत्वसर्वज्यायस्त्वपरायणत्वादीनां परमात्मलिङ्गानां भूताकाशेऽसंभवाद्भूताकाशस्याचेतनवर्गं प्रति कारणत्वसंभवेऽपि चिदचिद्वर्गकारणत्वासंभवात्सर्वैः कल्याणगुणैः सर्वोत्कृष्टत्वलक्षणज्यायस्त्वस्याप्यसंभवादचेतनस्य स्वरूपभिन्नत्वेन मोक्षविरोधितया [redacted] हेयशब्दादिनिषिद्धविषयप्रावण्यजनकतया च सकलपुरुषार्थविरोधिनोऽचेतनस्य परायणत्वलक्षणप्राप्यत्वस्य चाऽसंभवात्। तस्य [redacted] का साम्नो गतिरस्य लोकस्य का गतिरित्युपक्रमलक्षणतात्पर्यलिङ्गेन प्रतिपिपादयिषितत्वावगमात्प्रतिपिपादयिषितपरायणत्वानन्तत्वपरोवरीयस्त्वादिलिङ्गविरोधेऽभ्यस्ताया अपि श्रुतेर्दुर्बलत्वात्। आकाशशब्द आकाशत आकाशयतीति वा योगवशेन परमात्मपर एव। ननु 'सर्वाणि ह वा इमानि भूतानि' [ छा०१।९।१] इति श्रुत्यैवाऽऽकाशस्य जगत्कारणत्वावेदनाद्यथाश्रुताकाशस्यैव जगत्कारणत्वमभ्युपेतव्यमिति चेन्न। 'सदेव सोम्येदमग्र आसीत्।' [ छा० ६। २। १। ] 'आत्मा वा इदमेक एवाग्र आसीत्।' [ ऐ०१। १। ] एको ह वै नारायण आसीदित्यादियोग्यार्थानुवादरूपबहुवाक्यविरोध एकस्यानुवादरूपस्यायोग्यार्थस्यास्य वाक्यस्य दुर्बलत्वेन स्वार्थप्रतिपादनसामर्थ्याभावात्। अत आकाशशब्दो यौगिक्या वृत्त्या ब्रह्मपर एव। यत्त्वत्र व्यासार्यैरर्थाविरोध एव रूढिप्राबल्यमित्यपशूद्राधिकरणनयोपजीवनेनावयवशक्त्या निर्वाहो भाष्य उक्तः। रूढ्यपरित्यागेनापर्यवसानवृत्त्याऽऽकाशशब्दस्याऽऽकाशशरीरकपरमात्मपरतया निर्वाहोऽप्यभिमत इत्युक्तम्। तदुपायान्तरसंभवप्रदर्शनमात्रपरं न तु प्रकृताभिप्रायम्।

अनन्यथासिद्धभूताकाशलिङ्गसत्त्व एव ‘ जीवमुख्यप्राणलिङ्गात् । ’ [ ब्र० सू० १ । ४ । १७ । ] इति सूत्रोक्तन्यायावतारात् ।

परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥

इत्याचार्योक्तेर्भूताकाशशरीरकाद्ब्रह्मणः सकलचेतनाचेतनवर्गोत्पत्त्यभावेन ‘ सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ’ [ छा० १ । ९ । १ । ] इत्यत्राऽऽकाशशब्दस्य भूताकाशशरीरकब्रह्मप्रतिपादकत्वासंभवाच्चेति द्रष्टव्यमिति स्थितम् । प्रकृतमनुसरामः ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां प्रथमप्रपा
ठकस्य नवमः खण्डः ॥ ९ ॥

---

प्रस्तावोद्गीथप्रतिहारभक्तित्रयविषयकोपासनानि विधातुमाख्यायिकामाह—

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह
चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥

चक्रस्य सुत उषस्तिनामा कश्चनर्षिर्मटचीशब्दवाच्याशनिवृष्टिकृतदुर्भिक्षदूषितेषु कुरुषु देशेष्वाटिक्याऽनुपजातपयोधरादिव्यञ्जनया भार्यया सहेभ्यानां गजारोहाणां ग्रामे प्रद्राणकोऽनशनेन कुत्सितां गतिमापन्नो ब्रह्मविद्याया निष्पत्तये प्राणानामनवसादं काङ्क्षन्नुवास । द्रा कुत्सायां गताविति हि धातुः । चक्रस्य गोत्रापत्यमित्यर्थेऽश्वादित्वात्फञि चाक्रायण इति रूपम् ॥ १ ॥

स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे ।

सोऽन्नार्थ्यटन्कुत्सितान्माषान्खादन्तमिभ्यं याचितवान् । कुल्माषादत्रीति निर्देशात्कुत्सितमाषार्थे कुल्माषशब्दस्य साधुत्वम् ।

तꣳ होवाच । नेतोऽन्ये विद्यन्ते यच्च-
ये म इम उपनिहिता इति ॥ २ ॥

इतो मया भक्ष्यमाणादुच्छिष्टराशेः कुल्माषा अन्ये न विद्यन्ते । यद्यस्माद्धेतोरिमे कुल्माषा मे चये मदीये भक्ष्यचय उच्छिष्टराशावुपनिहिताः प्रक्षिप्ता अतः किं करोमीत्युषस्तिमिभ्य उवाचेत्यर्थः ॥ २ ॥

एतेषां मे देहीति होवाच ।

उच्छिष्टानामपि मध्ये मह्यमपि किंचिद्देहीति प्रार्थितवानित्यर्थः ।

तानस्मै प्रददौ ।

तान्कुल्माषानुषस्तये दत्तवानित्यर्थः ।

हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच ॥ ३॥

अथ समीपस्थमुदकं गृहीत्वा गृहाणानुपानमितीभ्येनोक्तस्तदुदकपानेनोच्छिष्टोदकपानं मे स्यादिति प्रत्युवाचेत्यर्थः ॥ ३ ॥

न स्विदेतेऽप्युच्छिष्टा इति न वा
अजीविष्यमिमानखादन्निति होवाच
कामो म उदकपानमिति ॥ ४ ॥

किमेत इदानीं त्वया मत्तो गृहीताः कुल्माषा अनुच्छिष्टा इतीभ्येन पर्यनुयुक्तः कुल्माषाखादने स्वस्य जीवनहानिर्भवति। तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यादित्युवाचेत्यर्थः ॥ ४ ॥

स ह खादित्वाऽतिशेषाञ्जायाया आजहार ।

स होषस्तिस्तान्भक्षयित्वाऽतिशिष्टाञ्जायायै दत्तवानित्यर्थः ।

साऽग्र एव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ ॥ ५ ॥

सा जाया प्रागेव लब्धान्ना बभूव तथाऽपि स्त्रीस्वभावादनवज्ञाय तान्कुल्माषान्पत्युर्हस्तात्प्रतिगृह्य निक्षिप्तवती ॥ ५ ॥

स ह प्रातः संजिहान उवाच यद्बता-
न्नस्य लभेमहि लभेमहि धनमात्राम् ।

स होषस्तिः शयनं परित्यजन्नेव पत्न्यां शृण्वत्यामिदमुवाच । किं तत् । यद्यन्नस्य स्तोकमपि लभेमहि तेन प्राणान्धृत्वाऽल्पधनं लभेमहीत्यर्थः ।

कथं धनमात्रा लभ्यत इत्यत्राऽऽह—

राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥६॥

राजाऽसौ नातिदूरे यजते स मां दृष्ट्वा सर्वाण्यार्त्विज्यानि त्वया कारयितव्यानीति प्रार्थयेतेत्युवाचेत्यर्थः ॥ ६ ॥

तं जायोवाच हन्त पत इम एव कुल्माषा इति ।

हे पते ये मद्धस्तनिक्षिप्तास्त्वया कुल्माषास्त इम एव । एतान्गृहाणेत्युक्तवतीत्यर्थः ।

तान्खादित्वाऽमुं यज्ञं विततमेयाय ॥ ७ ॥

तानेव पर्युषितोच्छिष्टान्कुल्माषान्भक्षयित्वा विस्तीर्णं यज्ञं गतवानित्यर्थः ॥ ७ ॥

तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश ।

आस्तुवन्त्यस्मिन्नित्यास्तावः स्तोत्रस्थानम् । सदसि स्तोतुं प्रवृत्तानामुद्गातृप्रस्तोतृप्रतिहर्तॄणां समीप उपविष्टवानित्यर्थः ।

स ह प्रस्तोतारमुवाच ॥ ८ ॥

प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्
प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥ ९ ॥

हे प्रस्तोतः प्रस्तावभक्तावध्यस्य या देवतोपास्या तामविदित्वा यदि विदुषो मम समीपे प्रस्तोष्यसि मूर्धा ते विपतिष्यतीत्यर्थः । यद्यपि 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' [छा०१।१।१०] इत्यविदुषोऽप्यार्त्विज्याधिकारोऽस्ति तथाऽपि विद्वत्संनिधाववितुषः कर्माधिकारो नास्तीति भावः ॥ ९ ॥

एवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां
चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति ॥१०॥

एवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देव-
ता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्र-
तिहरिष्यसि मूर्धा ते विपतिष्यतीति ।

स्पष्टोऽर्थः ।

ते ह समारतास्तूष्णीमासांचक्रिरे ॥ ११ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

ते ह प्रस्तोत्रादय उपरताः सन्तो मूर्धपातभयात्तूष्णीमेव स्थिता इत्यर्थः ॥ ११ ॥

इति छान्दोग्योपनिषत्प्रकाशिकायां प्रथमप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीति ।

को भवानिति भवन्तं ज्ञातुमिच्छामीत्युषस्तिं यजमान उक्तवानित्यर्थः ।

उषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमविद्याऽन्यानवृषि ॥ २ ॥

भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति ।

भगवन्तं सर्वगुणोपेतं श्रुत्वा सर्वाण्यार्त्विज्यानि भगवदधीनानि कर्तुं भगवतोऽन्वेषणं कृतवानस्मि । भगवत अविद्या विदिर्लाभो नु विविरविदिः । इकृष्यादिभ्य इतीक् । अविद्याऽलाभेनेमानृत्विजो वृतवानस्मि । इतः परमपि भगवानेव सर्वैर्ऋत्विक्कर्मभिर्वृत इत्युवाचेत्यर्थः । सर्वार्त्विज्यार्थं वृत इति यावत् ।

तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति ।

तथेत्यभ्युपगम्य त्वया पूर्वं वृता एत एव मया सम्यक्प्रसन्नेनानुज्ञाता उपदिष्टदेवताः सन्तः स्तुवतां स्तुवन्तु एभ्यो यावद्धनं प्रयच्छसि तावन्मम दद्या इत्युक्तवान् ।

तथेति ह यजमान उवाच ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

अथ हैनं प्रस्तोतोपससाद ।

उषस्तिवचनं श्रुत्वा प्रस्तोता विनयेन तत्समीपमागतवानित्यर्थः ।

प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेद-
विद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति
मा भगवानवोचत्कतमा सा देवतेति ॥ ४ ॥

भगवान्मां प्रति प्रस्तोतर्या देवतेत्यादिना यां देवतामुक्तवान्सा देवता केति पप्रच्छेत्यर्थः ॥ ४ ॥

प्राण इति होवाच ।

प्राण एव प्रस्तावमन्वायत्ता देवतेत्युपास्तिरुवाचेत्यर्थः । अत्र प्राणयितृत्वगुणयोगात्प्राणशब्देन परमात्मोच्यते । प्राणशब्दस्य मुख्यप्राणपरत्वं व्यावर्तयति—

सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति
प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता ।

प्राणमभिलक्ष्य संविशन्ति समित्येकीकार ऐक्येन विशन्ति लीयन्त इत्यर्थः । प्राणमभ्युज्जिहते प्राणादेवोद्गच्छन्तीत्यर्थः । सर्वभूतलयोत्पत्तिस्थानत्वेन वेदान्तेषु प्रसिद्धा प्राणरूपा देवता प्रस्तावभक्त्यनुगता प्रस्तावभक्ताववध्यस्योपास्येत्यर्थः ।

तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यप-
तिष्यत्तथोक्तस्य मयेति ॥ ५ ॥

तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मदुक्त्यनन्तरमपि मदुक्तिमनादृत्य तद्देवतामनभिज्ञाय यदि प्रास्तोष्यस्तदा मूर्धा ते व्यपतिष्यदेव । अतः साधुकृतं त्वया मत्समीपमागत्य विनयेन पृच्छतेति भावः । अत्र मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेत्युक्त्या विदुषैवमुक्तस्याविदुषस्तदनादरेण कर्मकरणे प्रत्यवायो न तु विदुषाऽनुमतस्याप्यविदुष इति भावः । व्यासार्यैस्तु मूर्धा ते व्यपतिष्यदित्यस्याऽऽत्मसत्ता न लभ्येतेत्यर्थ इत्यात्मसत्ताहानिपर्यन्तः प्रत्यवायो वर्णितः ॥ ५ ॥

अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वा-
यत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्य-

तीति मा भगवानवोचत्कतमा सा देवतेति ॥ ६ ॥

पूर्ववदर्थः ॥ ६ ॥

आदित्य इति होवाच ।

उद्गीथेऽध्यस्योपास्य आदित्य इत्यर्थः ।

सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥७॥

उच्चैः सन्तमुच्चैः स्थितमधःस्थितानि भूतानि गायन्तीत्यर्थः । प्रस्तावप्राणयोः प्रशब्दवत्त्वेन साम्यवदुद्गीथोच्चैःस्थितादित्ययोरुच्छब्दवत्त्वेन साम्यमिति भावः । शिष्टं पूर्ववत् ॥ ७ ॥

अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ८ ॥ अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ९ ॥

पूर्ववत् ॥ ८ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्यैकादशः खण्डः ॥ ११ ॥

---

प्रतिहारभक्तौ अन्नमध्यस्योपास्यमित्यर्थः ।

प्रतिहरमाणानि भक्षयन्तीत्यर्थः । सन्तीति शेषः । अत्र प्रतिशब्दवत्त्वेनान्नप्रतिहारयोः साम्यात्प्रतिहारेऽन्नाभिमानिदेवताध्यासः । ततश्च प्रस्तावोद्गीथप्रतिहारभक्तिषु क्रमेण प्राणादित्यान्नदृष्टिः कर्तव्येत्यर्थः । द्विरुक्तिर्वि-

द्यासमाप्त्यर्था। एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते समन्वयाध्याये प्रथमे पादे प्राणस्य भूतजातिस्थितिप्रवृत्तिहेतुत्वसंभवात्प्राणशब्देन मुख्यप्राण एवाभिधीयतामिति पूर्वपक्षे प्राप्ते शिलाकाष्ठाद्यचेतनस्वरूपस्य शुद्धस्य जीवस्वरूपस्य च मुख्यप्राणाधीनास्थितित्वासंभवात्प्रसिद्धवन्निर्दिष्टसकलचेतनोत्पत्तिलयहेतुत्वस्य परमात्मव्यतिरिक्तेऽसंभवाच्चेतनवाचिदेवताशब्दस्याप्यचेतने मुख्यप्राणेऽसंभवाच्च परमात्मैव प्राणयितृत्वादियोगवशेनाभिधीयत इति 'अत एव प्राणः' [ब्र०सू० १।१।२३] इति सूत्रेण सिद्धान्तितम्। ननु प्रस्तावोद्गीथप्रतिहारभक्त्यनुगतत्वेन देवतात्वेन च निर्दिष्टेषु प्राणादित्यान्नेषु प्राणस्यैव परमात्मत्वमादित्यान्नयोस्तु न तथात्वमित्यत्र किं विनिगमकम्। चेतनवाचिदेवताशब्दस्त्रिष्वपि समानः। प्राणवाक्यशेषे प्रसिद्धप्राणासंभाविताऽसंकुचितसर्वभूतसंवेशनोद्गमनाधारत्वश्रवणवदादित्यान्नवाक्यशेषयोरप्यसंकुचितसर्वभूतगेयत्वसर्वभूतोपजीव्यत्वयोः प्रसिद्धादित्यान्नासंभावितयोः श्रवणाविशेषात्। यदि चाऽऽदित्यवाक्ये सर्वभूतशब्द आदित्यगानयोग्यचेतनविशेषपरतयाऽन्नवाक्यशेषेऽन्नोपजीवनयोग्यचेतनविशेषपरतया संकोच्यते। देवताशब्दश्च 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' [ब्र० सू० २।१।५] इति सूत्रोक्तन्यायेनाभिमानिदेवतापरतया योज्यते तर्हि प्राणोऽपि तथाऽस्तु विशेषाभावादिति चेदुच्यते—प्राणशब्दस्य 'प्राणस्य प्राणम्'। [बृ० ४।४।१८] 'यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्, [क०६।२] इत्यादिषु परमात्मन्यपि निरूढत्वात्। 'सर्वाणि ह वा इमानि भूतानि' [छा० १।११।५] इत्यादिवाक्यशेषस्वारस्याच्च परमात्मपरत्वमाश्रितम्। अन्नादित्यशब्दयोरतथात्वाच्चेतनवाचिदेवताशब्दस्य केवलादित्यमण्डलान्नयोरभावात्तदभिमानिदेवतापरत्वम्। अन्नाभिमानिदेवतायाश्च भूतभक्ष्यत्वं तदधिष्ठेयान्नाभेदारोपेणोपपद्यते। 'सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति' [छा० १।११।७] इति प्रतिपादितं सर्वभूतगेयत्वं परमात्मनोऽपि न संभवति। भूतशब्दो हि प्राणिनिकाये महाभूतेषु च रूढः। महाभूतस्य गातृत्वप्रसक्तेरेवाभावात्प्राणिनिकायपरत्वं वक्तव्यं तदपि न संभवति। न हि सर्वे प्राणिनः परमात्मानं गायन्ति स्थावरेषु पश्वादिषु चाभावात्। तस्माद्गानयोग्यप्राणिविशेषपरत्वेन संकोचः परमात्मपरत्वेऽप्यावश्यक इत्यादित्यशब्दस्य लोकव्युत्पत्तिविरुद्धपरमात्मपरत्वं नाऽऽश्रयणीयम्। एवमन्नवाक्यशेषेऽपि प्रतिहर-

माणानीति मक्ष्यमाणत्वं न परमात्मनि मुख्यम् । अत आदित्यान्नशब्द-योर्ब्रह्मपरत्वाभावेऽपि प्राणशब्दस्य ब्रह्मपरत्वं सिद्धमिति द्रष्टव्यम् । प्रकृतमनुसराम: ॥ ९ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां प्रथमप्रपाठक-
स्यैकादश: खण्ड: ॥ ११ ॥

---

अतीतखण्डेऽन्नाप्राप्तिनिमित्तोच्छिष्टपर्युषितभक्षणलक्षणा कष्टाव-स्थोक्ता । अनन्तरमन्नलाभाय श्वदृष्ट उद्गीथ: प्रस्तूयते—

अथात: शौव उद्गीथ: ।

शौव: श्वदृष्ट उद्गीथ: प्रस्तूयत इति शेष: । शौव इति टिलोप-श्छान्दस: ।

तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेय: स्वाध्यायमुद्व्राज ॥ १ ॥

उद्व्राज अत्र वाशब्दश्चार्थे । बकग्लावनामद्वययुक्तो दल्भसुतो मित्रासुतश्च स्वाध्यायं कर्तुं ग्रामान्निर्गतवानित्यर्थ: ॥ १ ॥

तस्मै श्वा श्वेत: प्रादुर्बभूव ।

तत्स्वाध्यायेन तोषित: कश्चनर्षि: श्वेतशुनकरूपतया प्रादुर्बभूवेत्यर्थ: ।

तमन्ये श्वान उपसमेत्योचु: ।

तं श्वेतं श्वानं क्षुल्लका: श्वान उपसमेत्योक्तवन्त: ।

उक्तिमेवाह— अन्नं नो भगवानागायत्वशनायाम वा इति ॥ २ ॥

वैशब्दोऽवधारणे वयं अशनायाम बुभुक्षिता: स्म: । अस्माकं गानेनान्नं भगवा-न्संपादयत्वित्यूचुरित्यर्थ: ॥ २ ॥

तान्होवाचेहैव मा प्रातरुपसमीयातेति ।

श्व: प्रात:कालेऽस्मिन्नेव देशे मा मामुपगच्छतेति क्षुल्लकाञ्शुन: श्वेत: श्वोवाचेत्यर्थ: ।

तद्ध बको दाल्भ्यो ग्लावो वा
मैत्रेय: प्रतिपालयांचकार ॥ ३ ॥

तत्संवादं श्रुत्वा बकग्लावनामर्षि: श्वेतश्वाद्यागमनं प्रतीक्ष्य स्थितवानित्यर्थ: ॥ ३ ॥

ते ह यथैवेदं बहिष्पवमानेन स्तोष्य-
माणाः सꣳरब्धाः सर्पन्तीत्येवमाससृपुः।

ते श्वेतश्वादयस्तत्रैव प्रातरागत्य बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा उद्गातृपुरुषा अन्योन्यस्पृष्टा गच्छन्तीत्येतद्यथा, एवमन्योन्यस्य पुच्छं मुखे गृहीत्वोपसर्पणं कृतवन्तः।

ते ह समुपविश्य हिं चक्रुः ॥ ४ ॥

हिंचक्रुर्हिंकारं कृतवन्तः ॥ ४ ॥

ओ३मदा३मों३ पिबा३म।

ओमिति गानोपक्रमेऽदाम भक्षयेम। पिबाम च।

ओं३देवो वरुणः प्रजापतिः सविता२ऽऽन्नमिहा२ऽऽहरत्।

द्योतमानत्वाद्देवः, व्रियमाणत्वाद्वरुणः प्रजानां पालनात्प्रजापतिः। एवंभूतः सविताऽन्नमाहरत्विस्यर्थः।

अन्नपते३ऽन्नमिहा२ऽऽहरा२ऽऽहरो३मिति ॥ ५॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

अन्नपत इत्यादित्यस्य संबोधनम्। आहराहरेति द्विरुक्तिः प्रार्थनायाम्। इति गीतवन्त इत्यर्थः। अन्नपत इति मन्त्रकरणकादित्याध्यासविशिष्टोद्गीथोपासनमन्नफलकमिति भावः ॥ ५॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां प्रथमप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

सामावयवान्तर्गतस्तोभाक्षरविषयाण्युपासनान्तराण्युपदिश्यन्ते—

अयं वाव लोको हाउकारः।

हाउ इत्येवंलक्षणो यः सामसु स्तोभः सोऽयं लोक एतल्लोकत्वेनोपास्य इत्यर्थः। एवमुत्तरत्रापि स्तोभशब्दोऽध्याहर्तव्यः। अयं स्तोमो रथन्तरसाम्नि प्रसिद्धः।

वायुर्हाइकारः ।

हा इति स्तोभो वामदेव्यसाम्नि प्रसिद्धः ।

चन्द्रमा अथकारः । आत्मेहकारोऽग्निरी-
कारः॥१॥ आदित्य उकारो निहव एकारः।

आह्वानमित्यर्थः। ह्वः संप्रसारणं च न्यभ्युपविष्विति ह्वेञोऽप्संप्रसारणयोर्निहव इति रूपम् ।

विश्वे देवा औहोयिकारः प्रजा-
पतिर्हिंकारः प्राणः स्वरः ।

स्वर इति स्तोभः प्राण इत्यर्थः ।

अन्नं या ।

या इति स्तोभोऽन्नमित्यर्थः ।

वाग्विराट् ॥ २ ॥

वागिति स्तोभो विराडन्नमित्यर्थो विराट्पुरुषो वा ॥ १ ॥ २ ॥

अनिरुक्तस्त्रयोदशः स्तोभः संचरो हुंकारः ॥ ३ ॥

हाउकारादिभ्यो द्वादशभ्यः पूर्वोक्तेभ्योऽधिको हुमिति त्रयोदशो यः स्तोभः स इदमिति निर्वक्तुमशक्यतयाऽनिरुक्तत्वात्संचरो दोलायितः। ततश्च तत्र संचरत्वदृष्टिः कार्येत्यर्थः । ततश्च हाउकारादिषु त्रयोदशसूक्तपृथिवीलोकादिदृष्टिः कर्तव्येति स्थितम् ॥ ३ ॥

तस्य फलमाह—

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति ।

उक्तोऽर्थः ।

य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद ॥ ४ ॥

इति च्छान्दोग्योपनिषदि प्रथमप्रपाठकस्य त्रयोदशः
खण्डः ॥ १३ ॥

प्रथमप्रपाठकः समाप्तः ।

---

सामावयवस्तोमाक्षरोपासनं यो वेदेत्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां प्रथमप्रपाठकस्य त्रयोदशः खण्डः ॥ १३ ॥

प्रथमप्रपाठकः समाप्तः ।

---

सामावयवोपासनं प्राङ्निर्दिश्य समस्तस्य साम्न उपासनं तस्य प्रस्तौति—

ॐ समस्तस्य खलु साम्न उपासनꣳ साधु ।

समस्तस्य पाञ्चविध्ययुक्तस्य साप्तविध्ययुक्तस्य वा समस्तस्य साम्नः साधुत्वेनोपासनं कार्यमित्यर्थः ।

तत्रोपपत्तिमाह—

यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥

साध्वसाधुकर्मणी सामासामत्वेन व्यवहरन्तीत्यर्थः ॥ १ ॥

तदुताप्याहुः ।

तत्तस्मिन्विषयेऽन्यदप्याहुः । किं तदित्यत्राऽऽह—

साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः॥ २ ॥

सामासामोपायाभ्यामागतं प्रत्यर्थिनं साध्वसाधुभ्यामागतं व्यवहरन्तीत्यर्थः ॥ २ ॥

अथोताप्याहुः साम नो बतेति यत्साधु भवति ।

अथोताप्याहुः। अन्मिन्नेवार्थे जना अन्यदप्याहुरित्यर्थः ।

यत्कर्म साधु भवति तन्नोऽस्माकं साम बतेति सानुमोदाः प्रवदन्ति लोकाः ।

साधु बतेत्येव तदाहुः ।

साम नो बतेत्युक्त एव विषये साधुबतेति लोकाः प्रवदन्ति । ततः सामसाधुशब्दावेकत्र प्रयुज्यमानौ दृश्येते इत्यर्थः । एवमुत्तरत्रापि ।

असाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥

अतः सामसाधुशब्दयोरेकार्थप्रयोगात्समस्तस्य साम्नः साधुत्वेनोपासनं कर्तव्यमित्यर्थः ॥ ३ ॥

स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

एवं साधुत्वेन समस्तसामोपासकं ह प्रसिद्धमभ्याशः क्षिप्रं साधुधर्माः सर्व आगच्छेयुश्च भोग्येत्वेनोपनताश्च भवेयुरित्यर्थः । 'रमणीयचरणा अभ्याशो ह' [छा० ५ । १० । ७ ।] इत्यत्राभ्याशोऽभ्यागन्तार इति व्यासार्यैर्व्याख्यातत्वादिहाप्यभ्याश आगन्तारः साधवो धर्मा अभ्यागमनयोग्याः साधवो धर्मा अभ्यागच्छेयुरिति वाऽर्थः । उपनमेयुश्च भोग्यतां भजेयुरित्यर्थः ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

लोकेषु पञ्चविधꣳ सामोपासीत ।

हिंकारप्रस्तावोद्गीथप्रतिहारनिधनलक्षणपाञ्चविध्ययुक्तं क्रत्वङ्गभूतं सामोपासीत । पञ्चविधसामकर्मकमुपासनं लोकेषु लोकविषयकं कुर्यादित्यर्थः । 'आदित्यादिमतयश्चाङ्ग उपपत्तेः' [ब्र० सू० । ४ । १ । ६ ] इत्यधिकरणेऽङ्गानङ्गसमभिव्याहारयुक्तोपासनेष्वङ्गेष्वनङ्गदृष्टिरूपत्वस्य समर्थितत्वादङ्गभूते साम्न्यनङ्गलोकदृष्टिः कर्तव्येत्यर्थः ।

तत्प्रकारमेव दर्शयति—

पृथिवी हिंकारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥

अथाऽऽवृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥

पृथिव्यादिषु द्युपर्यन्तेषूर्ध्वेषु द्युप्रभृतिषु पृथिवीपर्यन्तेष्वावृत्तेषु चोक्तरीत्या हिंकारादिदृष्टिः कर्तव्येत्यर्थः ॥ १ ॥ २ ॥ अन्य

हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनेषु क्रमेण पृथिव्यन्तरिक्षादित्यद्युलो[illegible] दृष्टिः ऊर्ध्वक्रमेण कर्तव्येत्यर्थः ॥१॥ तथा आवृत्तक्रमेण तेष्वेव द्युलोकादि[illegible]न्तरिक्षादित्यपृथिवी दृष्टिः कर्तव्येत्यर्थः ॥२॥

तत्फलमाह—

कल्प्यन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च य एत-
देवं विद्वाꣳल्लोकेषु पञ्चविधं सामोपास्ते ॥ ३ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
द्वितीयः खण्डः ॥ २ ॥

---

अस्मै अस्य लोकाः कल्पन्त उपासकभोगनिष्पादनसमर्था भवन्तीत्यर्थः ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
द्वितीयः खण्डः ॥ २ ॥

---

वृष्टौ पञ्चविधꣳ सामोपासीत ।

पूर्ववदेवात्र पञ्चविधे साम्नि वृष्टिदृष्टिः कर्तव्येत्यर्थः ।

पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति
स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥

उद्गृह्णाति तन्निधनम् । उद्ग्रहणं जलस्योद्ग्रहणं वर्षसमाप्तिः ॥१॥

वर्षति हास्मै ।

इच्छत इति शेषः । अस्येच्छायां सत्यां वर्षतीति यावत् ।

वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते॥२॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

---

॥ १ ॥ २ ॥

अद्यापि य एवमुपास्ते स इच्छायां सत्यां वर्षयति वर्षं कारयतीत्यर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

---

सर्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो यत्संप्लवते स हिंकारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथः ।

आप इति शेषः ।

याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥ १ ॥

न हाप्सु प्रैति ।

न प्रैति न म्रियत इत्यर्थः ।

अप्सुमान्भवति ।

प्रभूतोदकसंपन्नो भवति । अपो योनियन्मतुब्ष्वित्यलुक् ।

य एतदेवं विद्वान्सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य चतुर्थः खण्डः ॥ ४ ॥

---

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य चतुर्थः खण्डः ॥ ४ ॥

---

ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनम् ॥ १ ॥

कल्पन्ते हास्मा ऋतवः ।

कल्पन्त उपासकस्य भोग्यनिष्पादनसमर्था भवन्तीत्यर्थः ।

ऋतुमान्भवति ।

वसन्ताद्यृतुफलभोगशाली भवति ।

य एतदेवं विद्वानृतुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य पञ्चमः खण्डः ॥ ५ ॥

---

॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य पञ्चमः खण्डः ॥ ५ ॥

---

पशुषु पञ्चविधꣳ सामोपासीताजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम् ॥१॥ भवन्ति हास्य पशवः पशुमान्भवति य एतदेवं विद्वान्पशुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य षष्ठः खण्डः ॥ ६ ॥

स्पष्टम् ॥१॥ अस्योपासकस्य भोगसम्पादनक्षमा भवन्तीत्यर्थः। पशुमान् भवति प्रभूतपशुमान्भवतीत्यर्थः। अयमुपासक इति शेषः। शिष्टं स्पष्टम् ॥ २॥

स्पष्टोऽर्थः ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य षष्ठः खण्डः ॥ ६ ॥

---

प्राणेषु पञ्चविधꣳ परोवरीयः सामोपासीत । परःशब्दः सान्त

वरीयस्त्वं ज्येष्ठत्वं परस्त्वं श्रेष्ठत्वं परस्त्वे सति वरीयस्त्वं परोवरीयस्त्वं परोवरीयस्त्वगुणकप्राणदृष्ट्या पञ्चविधं सामोपासनं कर्तव्यमित्यर्थः ।

तदेवाह— प्राणो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयाꣳसि वा एतानि ॥१॥

एतानि प्राणादीनि परोवरीयांसि ॥ १ ॥ परोवरीयस्त्वगुणकानीत्यर्थः ।

परोवरीयो हास्य भवति ।

उपासकस्य जीवनं श्रेष्ठं भवतीत्यर्थः ।

परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधꣳ परोवरीयः सामोपास्ते इति तु पञ्चविधस्य ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

साम्न उपासनमुक्तं भवतीत्यर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

अथ सप्तविधस्य ।

सप्तविधस्य

साम्न उपासनं प्रस्तूयत इत्यर्थः ।

वाचि सप्तविधꣳ सामोपासीत ।

हिंकारप्रस्तावोंकारोद्गीथप्रतिहारोपद्रवनिधनाख्यसप्तविधायुक्ते साम्नि वक्ष्यमाणप्रकारेण वाक्छब्दितशब्ददृष्टिः कर्तव्येत्यर्थः ।

यत्किंच वाचो हिमिति स हिंकारः ।

वाचःशब्दस्यावयवभूतो हिमिति यः शब्दः स हिंकारो हिंकारस्य हिंशब्दवत्त्वसादृश्यात् । ततश्च हिंकारे लोके हिंशब्दा यावन्तस्तद्बुद्धिः कर्तव्येत्यर्थः । एवमुत्तरत्रापि ।

यत्प्रेति स प्रस्तावो यदेति स आदिः ॥ १ ॥

प्रस्तावे सर्वप्रशब्दत्वबुद्धिः कर्तव्या । उद्गीथस्याद्यावयवभूत ओंकारे अ इति शब्दबुद्धिः कर्तव्येत्यर्थः ॥ १ ॥

यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम् ॥ २ ॥ दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति ।

उपासनाफलमाह— दुग्धेऽस्मा इत्यादि

वाक्संबन्धी यो दोहोऽस्ति वाक्साध्यं यत्फलं तत्फलमुपास्यमाना वागस्मा उपासकाय दुग्धे प्रयच्छति ॥ २ ॥

य एतदेवं विद्वान्वाचि सप्तविधꣳ सामोपास्ते ॥ ३ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्याष्टमः खण्डः ॥ ८ ॥

---

॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां प्रथमप्रपाठकस्याष्टमः खण्डः ॥ ८ ॥

---

अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत ।

सप्तविधे साम्न्यादित्यबुद्धिः कर्तव्येत्यर्थः ।

सामादित्ययोरैक्याध्यासहेतुमाह—

सर्वदा समस्तेन साम ।

आदित्यस्य सर्वदा समपरिमाणत्वेन समत्वात्सामत्वम् ।

मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥

लोके ह्यादित्यो मां प्रति समोऽभिमुखो मां प्रति सम इति प्रतीयते पुरुषविशेषं प्रत्याभिमुखस्य पुरुषविशेषं प्रत्यनाभिमुख्यस्य वाऽभावात् । अतः सर्वं प्रति समत्वादपि सामत्वम् ॥ १ ॥

तस्मिन्निमानि सर्वाणि भूता-
न्यन्वायत्तानीति विद्यात् ।

सर्वभूतोपजीव्यतयाऽऽदित्यमुपासीतेत्यर्थः ।

भूतानामुपजीवनप्रकारं कालभेदेन दर्शयति—

तस्य यत्पुरोदयात्स हिंकारस्तदस्य पशवोऽन्वायत्तास्त-
स्मात्ते हिं कुर्वन्ति हिंकारभाजिनो ह्येतस्य साम्नः ॥ २ ॥

तस्याऽऽदित्यस्योदयात्पूर्वं (राष्ट्र) यद्रूपं स हिंकारः । हिंकारे तद्रूपदृष्टिः कर्तव्येत्यर्थः । एवमग्रेऽपि । अस्याऽऽदित्यस्य हिंकाराख्यं तद्रूपं पशव उपजीवन्ति । हि यत एव त एतस्य साम्नः सामरूपस्याऽऽदित्यस्य संबन्धिहिंकारलक्षणरूपोपजीविनस्तस्मात्ते हिंकुर्वन्ति अत एव पशवो हिमिति शब्दं कुर्वन्तीत्यर्थः ॥ २ ॥

अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या
अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशꣳसा-
कामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

प्रथमोदयकालावच्छिन्न आदित्यः प्रस्तावः । अस्य तथाविधं रूपं मनुष्या उपजीवन्ति यतस्ते प्रस्तावाख्यप्रथमोदितादित्यरूपोपजीवनः । अत एव मनुष्याः प्रस्तुतिकामा भवन्ति । प्रस्तुतिकामा इत्यस्य विवरणं प्रशंसाकामा इति ॥ ३ ॥

अथ यत्सङ्गववेलायाᳬं स आदिस्तदस्य वयाᳬंस्यन्वा-
यत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायाऽऽ-
त्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥

तानि वयांसि पक्षिणोऽनारम्बणान्यालम्बनान्तरशून्यान्येवाऽऽत्मानमेवावलम्बनत्वेनाऽऽदायाऽऽकाशे परिपतन्ति । संङ्गवकालादित्यसंबन्ध्यादिशब्दितोंकाररूपोपजीवित्वादेवाऽऽदाय परिपतनं पक्षिणामित्यर्थः । आदिशब्दादायशब्दयोराकारदकारवत्त्वसाम्यमिहाभिप्रेतम् ॥४॥

अथ यत्संप्रति मध्यंदिने स उद्गीथस्तदस्य
देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्या-
नामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥

संप्रति मध्यंदिन ऋजुमध्यंदिन इत्यर्थः । प्राजापत्यानां मध्ये ते सत्तमा उत्तमा इत्यर्थः । उद्गीथसत्तमशब्दयोः संयुक्ततकारश्रुतिमत्त्वसाम्याद्‌उपजीव्योपजीवकभावोक्तिर्द्रष्टव्या ॥ ५ ॥

अथ यदूर्ध्वं मध्यंदिनात्प्रागपराह्णात्स प्रतिहार-
स्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता
नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥

सवितुः प्रतिहारभक्तिरूपोपजीवित्वादेवोर्ध्वं प्रतिहृताः सन्तो गर्भा नावपद्यन्ते द्वारे सत्यपि नाधःपतन्तीत्यर्थः ॥ ६ ॥

अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्समुपद्रवस्तदस्याऽऽ-
रण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षᳬं श्वभ्र-
मित्युपद्रवन्त्युपद्रव भाजिनो ह्येतस्य साम्नः ॥ ७ ॥

आदित्यसंबन्ध्युपद्रवभक्त्युपजीवित्वादेव पुरुषदर्शनभीतानामारण्यानां कक्षश्वभ्रादिषूपद्रवणमित्यर्थः ॥ ७ ॥

अथ यत्प्रथमास्तमिते तन्निधनं तदस्य
पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधन-

भाजिनो ह्येतस्य साम्न एवं खल्वमुमा-
दित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ८ ॥

इति छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
नवमः खण्डः ॥ ९ ॥

---

श्राद्धकर्तारो हि दर्भेषु पितॄन्निक्षिपन्ति तदर्थान्पिण्डान्वेत्यर्थः । उक्तमुपासनमुपसंहरत्येवं खल्वमुमित्यादिना ॥ ८ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
नवमः खण्डः ॥ ९ ॥

---

अथ खल्वात्मसंमितमतिमृत्यु सप्तविधꣳ
सामोपासीत हिंकार इति त्र्यक्षरं
प्रस्ताव इति त्र्यक्षरं तत्समम् ॥ १ ॥

अथाध्यस्तादित्यभावसप्तविधसामोपासनोपदेशानन्तरमतिक्रान्तादित्यसप्तविधसामोपासनमुपदिश्यत इत्यर्थः । अत्र मृत्युशब्देनाऽऽदित्योऽभिधीयते । आदित्यस्याहोरात्रकालावर्तनेन जगन्नाशहेतुत्वान्मृत्युत्वम् । आत्मसंमितमात्मना स्वेषामेषामेव त्र्यक्षरत्वेन परस्परसंमितत्वकथनादात्मसंमितत्वम् । द्वाविंशत्यक्षरात्मकस्य सप्तविधसामभक्तिविशेषस्यैकविंशतिलक्षणादित्यसंख्यातिरेकित्वादतिमृत्युत्वम् । आत्मसंमितत्वातिमृत्युत्वप्रकारमेव दर्शयति हिंकार इतीत्यादि । अतश्चैतयोरुभयोः समत्वादेवाऽऽवापोद्वापौ न कर्तव्यावित्यर्थः ॥ १ ॥

आदिरिति द्व्यक्षरं प्रतिहार इति चतु-
रक्षरं तत इहैकं तत्समम् ॥ २ ॥

चतुरक्षरादेकमक्षरं गृहीत्वा द्व्यक्षरे निवेशिते समं भवतीत्यर्थः ॥ २ ॥

उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुर-
क्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरम-

तिशिष्यते त्र्यक्षरं तत्समम् ॥ ३ ॥

उपद्रव इति चतुरक्षर एकस्मिन्नक्षरे पृथक्कृते सत्यवशिष्टं त्र्यक्षरं सममेव भवतीत्यर्थः ॥ ३ ॥

उपसंहरति–तानीत्यादि।

निधनमिति त्र्यक्षरं तत्सममेव भवति तानि
ह वा एतानि द्वाविꣳशतिरक्षराणि ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

एकविꣳशत्याऽऽदित्यमाप्नोत्येक-
विꣳशो वा इतोऽसावादित्यः ।

'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳशः' इति श्रुतेः । यत आदित्यस्यैकविंशत्वमतः सप्तविधभक्तीनामाक्षरगतैकविंशतिसंख्ययैकविंशतिसंख्याकमादित्यं प्राप्नोति । आदित्यसालोक्यं प्राप्नोतीत्यर्थः ।

द्वाविꣳशेन परमादित्याज्जयति
तन्नाकं तद्विशोकम् ॥ ५ ॥

अवशिष्टेन द्वाविंशेनाक्षरेणाऽऽदित्यात्परं दुःखासंभिन्नं लोकं प्राप्नोतीत्यर्थः ॥ ५ ॥

अप्नोति हाऽऽदित्यस्य जयम् ।

इह लोक आदित्यजयं प्राप्नोतीत्यर्थः ।

परो हास्याऽऽदित्यजयाज्जयो भवति य
एतदेवं विद्वानात्मसंमितमतिमृत्यु सप्त-
विधꣳ सामोपास्ते सामोपास्ते ॥ ६ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

य एव मुपास्ते तस्याऽऽदित्यजयात्सर्वोत्कर्षो भवतीत्यर्थः ॥६॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

अथ गायत्ररथंतरादिसामोपासनं प्रस्तूयते—

मनो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनम् ।

(१) हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्यपञ्चविधभक्तिषु मनोवाक्चक्षुःश्रोत्रप्राणदृष्टिः कर्तव्येत्यर्थः। इति ग्रन्थाक्षरार्थः

गायत्र्याख्यस्य साम्नो हिंकारादिपञ्चविधभक्तिषु मनआदिदृष्टिः कर्तव्येत्यर्थः ।

एतद्गायत्रं प्राणेषु प्रोतम् ॥ १ ॥

अनेनाऽऽकारेण गायत्र्याख्यसाम्नो मनआदिप्राणानां चाध्यासाधिष्ठानभावलक्षणसंबन्धेन परस्परसंबद्धमित्यर्थः ॥ तत्फलमाह—

स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या महामनाः स्यात्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्यैकादशः खण्डः ॥ ११ ॥

प्राणीभवति अविकलेन्द्रियो भवतीत्यर्थः। ज्योग्जीवति

महामनस्कत्वं वदान्यमनस्कत्वं ज्योगुज्ज्वलो व्याध्यादिभिरनुपहत इत्यर्थः। शिष्टं स्पष्टम् ॥ २ ॥

महामनाः स्यात् वदान्यमनस्को भवेदित्यर्थः। तद्व्रतम् महामनस्त्वमेतदुपासनाङ्गमित्यर्थः। एवमग्रेऽपि ज्ञेयम्॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्यैकादशः खण्डः ॥ ११ ॥

---

अभिमन्थति स हिंकारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ संशाम्यति तन्निधनम् ।

उपशमः सावशेषः शमो निःशेषोपशमः संशमः ।

एतद्रथंतरमग्नौ प्रोतम् ॥ १ ॥

स य एवमेतद्रथंतरमग्नौ प्रोतं वेद ब्रह्म-
वर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जी-
वति महान्प्रजया पशुभिर्भवति महान्कीर्त्या
न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥२॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

नाचामेत् न निष्ठीवेत्

अग्नेरभिमुखो न भक्षयेत्, श्लेष्मादिनिरसनं च न कुर्यादित्यर्थः ॥२॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

उपमन्त्रयते स हिंकारो ज्ञपयते स प्रस्तावः ।

उपमन्त्रणं संकेतकरणं ज्ञपनं तोषणं मारणतोषणनिशामनेषु मित्वा-ज्ज्ञाधातोर्ह्रस्वः ।

स्त्रिया सह शेते स उद्गीथः ।

एकपर्यङ्कोपवेशनं सह शयनम् ।

प्रति स्त्रीं सह शेते स प्रतिहारः ।

स्त्रिया आभिमुख्येन शयनमित्यर्थः ।

कालं गच्छति तन्निधनं पारं गच्छति तन्निधनम् ।

मैथुननिवृत्तिरित्यर्थः ।

एतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ॥

फलमाह—

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनी भवति ।

सर्वदा स्त्रिया अवियुक्तो भवतीत्यर्थः ।

मिथुनान्मिथुनात्प्रजायते ।

अमोघरेता भवतीत्यर्थः ।

सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभि-
र्भवति महान्कीर्त्या न कांचन परिहरेत्तद्व्रतम् ॥२॥
इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

---

प्रार्थयमानामिति शेषः । प्रार्थयमानसर्वयोषिद्गमनस्य वामदेव्योपासनाङ्गत्वेन विधानात्परदारगमनप्रतिषेधवचनानि तदतिरिक्तविषयाणि द्रष्टव्यानि ।

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

---

उद्यन्हिंकार उदितः प्रस्तावो मध्यंदिन उद्गीथः ।

मध्यंदिनकालावच्छिन्न आदित्य उद्गीथ इत्यर्थः ।

अपराह्णः प्रतिहारः ।

अपराह्णकालावच्छिन्न आदित्यः प्रतिहारः ।

अस्तं यन्निधनम् ।

यन्गच्छन्नित्यर्थः ।

एतद्बृहदादित्ये प्रोतम् ॥ १ ॥

स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो
भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशु-
भिर्भवति महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतम् ॥ २ ॥
इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
चतुर्दशः खण्डः ॥ १४ ॥

---

तपन्तमादित्यं न निन्देदित्यर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
चतुर्दशः खण्डः ॥ १४ ॥

---

अभ्राणि संप्लवन्ते स हिंकारः ।

संप्लवः संचारः ।

मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥

वैरूपाख्यं सामेत्यर्थः ॥ १ ॥

स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपाꣳश्च सुरूपाꣳश्च पशूनवरुन्धे ।

विरूपान्विरुद्धनानारूपान्सुरूपाञ्शोभनरूपानवरुन्धे प्राप्नोतीत्यर्थः ।

सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥ १२ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य पञ्चदशः खण्डः ॥ १५ ॥

॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य पञ्चदशः खण्डः ॥ १५ ॥

---

वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम् ॥ १ ॥

वैराजाख्यं सामेत्यर्थः ॥ १ ॥

स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्यर्तून्न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
षोडशः खण्डः ॥ १६ ॥

॥ २ ॥
इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
षोडशः खण्डः ॥ १६ ॥

पृथिवी हिंकारोऽन्तरिक्षं प्रस्तावो द्यौरु-
द्गीथो दिशः प्रतिहारः समुद्रो निधन-
मेताः शक्वर्यो लोकेषु प्रोताः ॥ १ ॥

शक्वर्यः
शक्वर्याख्यं सामेत्यर्थः । शक्वर्य इति नित्यं बहुवचनम् ॥ १ ॥

स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकी
भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशु-
भिर्भवति महान्कीर्त्या लोकान्न निन्देत्तद्व्रतम्॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
सप्तदशः खण्डः ॥ १७ ॥

लोकी भवति उत्तमलोकप्राप्तो भवतीत्यर्थः । शिष्टं स्पष्टम् ।
॥ २ ॥
इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
सप्तदशः खण्डः ॥ १७ ॥

अजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः
प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥१॥

रेवत्य इत्यपि शक्वर्य इतिवन्नित्यं बहुवचनम् ॥ १ ॥ सामविशेषनाम

स य एवमेता रेवत्यः पशुषु प्रोता वेद पशु-
मान्भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया
पशुभिर्भवति महान्कीर्त्या पशून्न निन्देत्तद्व्रतम् ॥२॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्याष्टादशः खण्डः ॥ १८ ॥

---

॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्याष्टादशः खण्डः ॥ १८ ॥

---

लोम हिंकारस्त्वक्प्रस्तावो मा॰ंसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥

स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति ।

समग्राङ्गयुक्तो भवतीत्यर्थः ।

नाङ्गेन विहूर्छति ।

अङ्गेन हस्तपादादिना कुटिलो न भवतीत्यर्थः । हुर्छा कौटिल्य इति हि धातुः ।

सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतम् ।

मज्जाख्यमांसविशेषानित्यर्थः ।

मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्यैकोनविंशः खण्डः ॥ १९ ॥

---

सर्वदेति शेषः ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्यैकोनविंशः खण्डः ॥ १९ ॥

---

अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम् ॥ १ ॥

राजनाख्यं सामेत्यर्थः ॥ १ ॥

स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासा-
मेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सा-
युज्यं गच्छति सर्वमायुरेति ज्योग्जीवति।

सार्ष्टिता समानार्धित्वं सायुज्यं समानभोग्यत्वम्।

महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्राह्मणान्न निन्देत्तद्व्रतम्॥ २॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य विंशः खण्डः॥ २०॥

---

'एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा इति श्रुतेर्ब्राह्मण[redacted]नि दैवतानि-न निन्दे[redacted]ति भावः॥ २॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य विंशः खण्डः॥ २०॥

---

त्रयी विद्या हिंकारस्त्रय इमे लोकाः स प्रस्तावोऽ-
ग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि
मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्त-
न्निधनमेतत्साम सर्वस्मिन्प्रोतम्॥ १॥

अत्र सामविशेषानिर्देशात्सामशब्दः सामसामान्यपरः॥ १॥

स य एवमेतत्साम सर्वस्मिन्प्रोतं वेद सर्वꣳ ह भवति॥ २॥

काम्यमानं सर्वमाप्नोतीत्यर्थः॥ २॥

तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि
तेभ्यो न ज्यायः परमन्यदस्ति॥ ३॥

त्रीणि त्रयी विद्या हिंकारस्त्रय इमे लोका इत्युक्तानि यानि त्रीणि हिंकारादिरूपेण पञ्चधा भवन्ति। अतः परमुत्कृष्टं श्रेयः किमपि नास्ति॥ ३॥

यस्तद्वेद स वेद सर्वम् ।

एतदुपासकः सर्वज्ञो भवतीत्यर्थः ।

सर्वा दिशो बलिमस्मै हरन्ति ।

सर्वदिग्वर्तिनोऽपि वशीकृता अस्मा उपासकायोपहारान्समर्पयन्ति ।

सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतम् ॥ ४ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्यैकविंशः खण्डः ॥ २१ ॥

तद्व्रतं तद्व्रतम् तस्य तदेव व्रतम्। नान्यद्व्रतमस्तीत्यर्थः

---

सामसामान्य उक्तरीत्या सर्वत्वाऽऽश्रयत्वेन स्वाभिन्नत्वेन चोपासना कर्तव्येत्यर्थः । द्विरुक्तिः सामोपासनसमाप्त्यर्था ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्यैकविंशः खण्डः ॥ २१ ॥

---

एवं सामोपासनं समाप्य गानविशेषानुद्गातुरुपदिशति—

ऋषभकूजितसमः विनर्दि साम्नो वृणे पशव्यमिति ।

विशिष्टो नर्दः स्वरविशेषः सोऽस्यास्तीति विनर्दि । गानमिति वाक्यशेषः । साम्नः सामसंबन्धि पशव्यं पशुहितम् । उगवादिभ्यो यदिति यत् । सामसंबन्धि विनर्दि गानं वृणे प्रार्थयेत । पुरुषव्यत्ययश्छान्दसः ।

अग्नेरुद्गीथोऽनिरुक्तः ।

अग्निदैवत्यमुद्गानमनिरुक्तोऽस्पष्टं भवति । अस्पष्टो गानविशेषोऽग्निप्रीतिहेतुर्भवतीत्यर्थः ।

प्रजापतेर्निरुक्तः ।

निरुक्तः स्पष्टो गानविशेषः प्रजापतिदैवत्यः प्रजापतिप्रीतिहेतुरित्यर्थः ।

सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य ।

बलवदिन्द्रस्य बलवत् बलवत्प्रयत्नोपेतमित्यर्थः ।

क्रौञ्चं बृहस्पतेः ।

क्रौञ्चपक्षिनादसमं बार्हस्पत्यं गानमित्यर्थः ।

अपध्वान्तं वरुणस्य ।

भिन्नकांस्यरवसमं वारुणगानमित्यर्थः ।

तान्सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत् ।

अपध्वान्तगानव्यतिरिक्तान्सर्वानुद्गीथानुपसेवेतेत्यर्थः ॥ १ ॥

अमृतत्वं देवेभ्य आगायानीत्यागायेत् ।

अमृतत्वप्राप्तिमागायानि गानेन साधयानीति गानं कुर्यादित्यर्थः । यथाप्रार्थनं फलं भवतीति भावः ।

स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥

एतानि देवामृतत्वादीनि फलानि मनसा ध्यायन्स्वरादिष्वप्रमत्तः सन् स्तोत्रं कुर्यादित्यर्थः ॥ २ ॥

सर्वे स्वरा इन्द्रस्याऽऽत्मानः ।

अचः स्वरा आत्मानोऽवयवसदृशाः ।

सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानः ।

कादयो मावसानाः स्पर्शाः ।

तं यदि स्वरेषूपालभेत ।

एवंविदमुद्गातारं यदि कश्चिदागत्य त्वया दुष्टः स्वरः प्रयुक्त इत्युपालम्भं कुर्यात् ।

इन्द्रꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रति वक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥

इन्द्र एव तव प्रत्युत्तरं दास्यतीत्यर्थः ॥ ३ ॥

अथ यद्येनमूष्मसूपालभेत प्रजापतिꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रति पेक्ष्यतीत्येनं ब्रूयात् ।

त्वा प्रति त्वां प्रति पेक्ष्यति चूर्णयिष्यतीत्यर्थः । पिष्ल संचूर्णन इति धातुः ।

४१

अथ यद्येनꣳ स्पर्शेषूपालभेत मृत्युꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥

धक्ष्यति भस्मी करिष्यतीत्यर्थः। दह भस्मीकरण इति हि धातुः॥४॥

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति।

घोषवत्तया बलवत्तयोच्चारणमिन्द्रस्य बलाधायकमित्यर्थः।

सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः।

अग्रस्ता अभ्यन्तरप्रवेशिताः। अनिरस्ता बहिरक्षिप्ताः। ^ निरस्तं त्वरितोदितमित्यमरः। विवृता विवृतप्रयत्नोपेताः।

प्रजापतेरात्मानं परिददानीति।

ऊष्मणां प्रजापत्यात्मकत्वादग्रस्तत्वादियुक्तोष्मोच्चारणे प्रजापतेरात्मलाभो भवतीत्यर्थः।

सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्याः।

लेशेनाल्पशोऽनभिनिहिता अनभिक्षिप्ता अद्रुतोच्चारिता इति यावत्।

मृत्योरात्मानं परिहराणीति ॥ ५ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य द्वाविंशः खण्डः ॥ २२ ॥

---

सर्वेषां स्पर्शानां मृत्य्वात्मकत्वात्स्पर्शानां तेषां दोषेभ्यः परिहृत्योच्चारणे मृत्योरात्मैव दोषेभ्यः परिहृतो भवतीति भावः।

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य द्वाविंशः खण्डः ॥ २२ ॥

---

ओंकारेण ब्रह्मोपासनं विधातुं प्रस्तौति—

त्रयो धर्मस्कन्धाः।

^ धर्मसाधका मार्गाः।

यज्ञोऽध्ययनं दानमिति प्रथमः।

यज्ञाध्ययनदानशब्दैर्गृहस्थाश्रम उच्यते । अध्ययनशब्दो वेदाभ्यासपरः ।

तप एव द्वितीयः ।

तपःशब्देन वैखानसपारिव्राज्ययोर्ग्रहणमुभयोस्तपःप्रधानत्वात् । तपःशब्दो हि कायक्लेशे रूढः स च द्वयोरपि समानः ।

ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् ।

अत्यन्तमाचार्यकुले नियमैर्देहं क्षपयंस्तृतीय आश्रम इत्यर्थः ।

सर्व एते पुण्यलोका भवन्ति ब्रह्मसꣳस्थोऽमृतत्वमेति ॥ १ ॥

एवं त्रित्वेन संगृहीतानां चतुर्णामाश्रमाणां मध्ये यो ब्रह्मनिष्ठः स मुक्तिभाग्भवति । ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजो भवन्तीत्यर्थः । एवमेव हि 'अनुष्ठेयं बादरायणः साम्यश्रुतेः' [ ब्र० सू० ३ । ४ । १९ ] इत्यत्र साधितम् । न चात्र ब्रह्मसंस्थशब्दात्संन्यासाश्रमप्रतिपत्तिरिति शङ्क्यम् । ब्रह्मसंस्थशब्दस्य प्रोक्षणीन्यायेन योगेनैव वृत्त्युपपत्तौ संन्यासे रूढेरनवगन्तव्यत्वात्, योगमात्रस्य चाऽऽश्रमान्तरसाधारणत्वान्न ब्रह्मसंस्थशब्देन संन्यासाश्रमग्रहणे प्रमाणं पश्यामः । न च संपूर्वस्य तिष्ठतेः समाप्तिवाचकत्वादनन्यव्यापारत्वलक्षणाया ब्रह्मणि समाप्तेः संन्यासिष्विवाग्निहोत्रादिकर्मान्तरव्यग्राश्रमान्तरेष्वसंभवाद्ब्रह्मसंस्थशब्देन परिव्राडेवोच्यत इति वाच्यम् । स्वाश्रमोचितकर्मव्यग्रताया संन्यासिष्वप्यविशिष्टत्वात्, तदतिरिक्तव्यापारराहित्यस्य सर्वाश्रमेष्वपि संभवात्, न ब्रह्मसंस्थशब्देन चतुर्थाश्रमपरामर्शहेतुं पश्यामः ॥ १ ॥

एवं ब्रह्मसंस्थोऽमृतत्वमेतीत्यमृतत्वसाधनं ब्रह्मोपासनमुक्त्वा तत्प्रणवाङ्गकमिति वक्तुं प्रणवं स्तौति—

प्रजापतिर्लोकानभ्यतपत् ।

सारनिष्कर्षाय लोकान्पर्यालोचयदित्यर्थः ।

तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत् ।

त्रयी विद्या सारत्वेन निष्पन्नाऽभवदित्यर्थः ।

तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति ॥ २ ॥

तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ॐकारः
संप्रास्रवत्तद्यथा शङ्कुना सर्वाणि पर्णानि
संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णोंकार
एवेदꣳ सर्वमोंकार एवेदꣳ सर्वम् ॥ ३ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
त्रयोविंशः खण्डः ॥ २३ ॥

शङ्कुना संतृण्णानि

यथा सर्वाणि पत्रजातानि पर्णनालेन व्याप्तानि भवन्त्येवमोंकारो वै सर्वा वागिति श्रुतेरोंकारेणैव सर्वा वाग्व्याप्ता। अत ॐकार एव सर्वं वाङ्मयम्। अत ओंकारेण ब्रह्मोपासनं कर्तव्यमिति पर्यवसितोऽर्थः॥ ३ ॥ द्विरुक्तिर्विद्यासमाप्त्यर्था।

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य
त्रयोविंशः खण्डः ॥ २३ ॥

---

प्रसङ्गात्कर्माङ्गाणि कानिचिद्विधातुं प्रस्तौति—

ब्रह्मवादिनो वेदवेत्तार इत्यर्थः। ते किं वदन्तीत्यत्राह— यद्वसूनामित्यादि।

ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣳ
रुद्राणां माध्यंदिनꣳ सवनमादित्यानां च
विश्वेषां च देवानां तृतीयसवनम् ॥ १ ॥

क्व तर्हि यजमानस्य लोक इति। तत्तत्सवनफलभूत

वशीकृता इत्यर्थः॥१॥ स्वं तैलो

प्रातःसवनमाध्यंदिनसवनतृतीयसवनेश्वरैर्वसुरुद्रादित्यविश्वदेवैः पृथव्यन्तरिक्षस्वर्लोकानां वशीकृततयाऽवशिष्टस्य यजमानप्राप्य लोकस्याभावाद्यजमानस्य लोकः क्वास्तीति वेदितव्यमित्यर्थः।

स यस्तं न विद्यात्कथं कुर्यात्।

यस्य यजमानप्राप्यलोकस्थानज्ञानं नास्ति सोऽज्ञः कथं कुर्यात्।

अथ विद्वान्कुर्यात् ॥ २ ॥

तस्माल्लोकस्वीकरणोपायभूतं वक्ष्यमाणं सामगानहोममन्त्रोत्थानलक्षणं ज्ञात्वैव कुर्यादित्यर्थः ॥ १ ॥ २ ॥

तदेवाऽऽह—

पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्यो-
दङ्मुख उपविश्य स वासवꣳ सामाभिगायति ॥ ३ ॥

प्रातरनुवाकारम्भात्प्राग्गार्हपत्यस्य पश्चादुदङ्मुख उपविश्य वसुदैवत्यं साम गायेदित्यर्थः ॥ ३ ॥

तदेव सामाऽऽह—

लो३कद्वारमपावा३र्णू३३पश्येम त्वा
वयꣳ रा३३३३३ । हु३म् आ३३ ज्या-
३ यो ३ आ ३२१११ इति ॥ ४ ॥

हेऽग्ने पृथिवीलोकप्राप्तये द्वारमपावृणु तेनापावृतद्वारेण त्वां राज्याय फलाय पश्येमेत्यर्थः ॥ ४ ॥

अथ जुहोति ।

अथानन्तरमनेन मन्त्रेण जुहोतीत्यर्थः ।

होममन्त्रमेवाऽऽह—

नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमा-
नाय विन्दैष वै यजमानस्य लोक एताऽस्मि ॥ ५ ॥

अत्र यजमानः परस्तादायुषः स्वा-
हाऽपजहि परिघमित्युक्त्वोत्तिष्ठति ।

पृथिवीक्षिते पृथिवीनिवासाय लोकनिवासायाग्नये नमः । मह्यं यजमानाय लोकं विन्द लम्भयस्व । एष वै मम यजमानस्य लोकोऽस्मिँलोक आयुषः परस्तान्मरणादूर्ध्वमेताऽस्म्यागन्ताऽस्मि । स्वाहेति जुहोति । परिघं लोकद्वारार्गलमपजह्यपनय, इत्येतं मन्त्रमुक्त्वोत्तिष्ठतीत्यर्थः ।

तस्मै वसवः प्रातःसवनꣳ संप्रयच्छन्ति ॥ ६ ॥

प्रातःसवनसंबन्धिलोकं पृथिवीलोकं प्रयच्छन्तीत्यर्थः ॥ ६ ॥

पुरा माध्यंदिनस्य सवनस्योपाकरणा-
ज्जघनेनाऽऽग्नीध्रीयस्योदङ्मुख उपविश्य ।

आग्नीध्रीयस्याग्नेरित्यर्थः ।

स रौद्रꣳ सामाभिगायति ॥ ७ ॥ रौद्रं रुद्रदेवताकमित्यर्थः ॥७॥

लो३कद्वारमपावा३ र्णू३३ पश्येम त्वा वयं वैरा३३३३३ हु३म् आ३३ ज्या ३यो ३ आ३२१११इति ॥८॥

वैराज्यायान्तरिक्षलोकफलप्राप्तय इत्यर्थः ॥ ७ ॥ ८ ॥

अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्मि ॥ ९ ॥

अथ नमो वायव इति मन्त्रेण जुहोतीत्यर्थः । अन्तरिक्षक्षितेऽन्तरिक्षनिवासायेत्यादि पूर्ववदुन्नेयम् ॥ ९ ॥

अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यंदिनꣳ सवनꣳ संप्रयच्छन्ति ॥१०॥

माध्यंदिनं सवनं माध्यंदिनसवनसंबन्धिलोकम् ॥ १० ॥

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाऽऽहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति ॥ ११ ॥

आहवनीयस्याग्नेरित्यर्थः । आदित्यमादित्यदैवत्यं वैश्वदेवं विश्वेदेवदैवत्यमित्यर्थः ॥ ११ ॥

तत्राऽऽदित्यं सामाऽऽह—

लो३कद्वारमपावा३र्णू ३३ पश्येम त्वा वयꣳ स्वारा३३३३३ हु३म् आ३३ ज्या३ यो ३ आ ३२१११ इत्यादित्यम् ॥१२॥

स्वाराज्याय स्वर्गलोकायेत्यर्थः ॥ १२ ॥ सामोक्तमिति शेषः ।

अथ वैश्वदेवम् ।

सामोच्यत इति शेषः ।

लो३कद्वारमपावा३र्णू३ ३पश्येम त्वा वयꣳ
साम्रा३३३३३हु३म् आ३३ ज्या-
३ यो३आ ३२१११ इति ॥ १३ ॥

साम्राज्यायोत्तमस्वर्गफलायेत्यर्थः ॥ १३ ॥

अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च
देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं
मे यजमानाय विन्दत ॥ १४ ॥
एष वै यजमानस्य लोक एताऽस्म्यत्र
यजमानः परस्तादायुषः स्वाहाऽप-
हत परिघमित्युक्त्वोत्तिष्ठति ॥ १५ ॥

सर्वं पूर्ववद्द्रष्टव्यम् । आदित्यानां विश्वदेवानां च बहुत्वाद्विन्दतापहतेति बहुवचनम् ॥ १४ ॥ १५ ॥

तस्मा आदित्याश्च विश्वे च दे-
वास्तृतीयसवनꣳ संप्रयच्छन्ति ।

तृतीयसवनं तत्फलं स्वर्गमित्यर्थः ।

एष ह वै यज्ञस्य मात्रां वेद ।

मात्रां याथात्म्यमित्यर्थः ।

य एवं वेद य एवं वेद ॥ १६ ॥

इति च्छान्दोग्योपनिषदि द्वितीयप्रपाठकस्य
चतुर्विंशः खण्डः ॥ २४ ॥

---

इति द्वितीयः प्रपाठकः समाप्तः ॥ २ ॥

---

य एवं कर्तुं वेदेत्यर्थः । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ १६ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयप्रपाठकस्य चतुर्विंशः खण्डः ॥ २४ ॥

---

इति द्वितीयः प्रपाठकः समाप्तः ॥ २ ॥

---

मधुविद्या प्रस्तूयते—

असौ वा आदित्यो देवमधु ।

असावादित्यो वस्वादीनां देवानां मोदहेतुत्वान्मधु। अत्र मधुत्वदृष्टिः कर्तव्येत्यर्थः ।

मधुत्वोपयोगीनि संपादयति—

तस्य द्यौरेव तिरश्चीनवंशः ।

द्विस्याख्य

तस्या मधुनो द्युलोक एवाऽऽधारभूतस्तिर्यक्प्रसारितो वंशः ।

अन्तरिक्षमपूपः ।

पूपा

अन्तरिक्षं मध्वपूपः । मध्वाश्रयोऽहि तिरश्चीनवंशलग्नः सलँम्बत एवमन्तरिक्षमपि द्युलोकलग्नं लम्बत इव भातीत्यतो मध्वपूपत्वम् ।

मरीचयः पुत्राः ॥ १ ॥

मरीचिशब्देन मरीचिस्थाः सवित्राकृष्टा भौम्य आप उच्यन्ते । ताः पुत्रा इव पुत्रा भ्रमरबीजभूता मध्वपूपच्छिद्रस्थाः सूक्ष्मकीटा इत्यर्थः ॥ १ ॥

तस्य ये प्राञ्चो रश्मयः ।

तस्याऽऽदित्यस्य ये प्राञ्चो रश्मयः ।

ता एवास्य प्राच्यो मधुनाड्यः ।

ता एव प्राग्दिगवच्छिन्ना मधुनाड्यो मधुच्छिद्राणि ।

ऋच एव मधुकृतः ।

ऋङ्मन्त्रा एव भ्रमराः ।

ऋग्वेद एव पुष्पम् ।

ऋग्वेदविहितं कर्म पुष्पस्थानीयम् ।

ता अमृता आपः ।

अस्मिन् पुष्पस्थानीये ऋग्वेदविहिते कर्मणि मधुकरस्थानीयैः ऋङ्मन्त्रैराकृष्य मधुत्वेन निर्वर्त्यमानो रसः क उच्यते—

ताः कर्मणि प्रयुक्ताः सोमाज्यपयोरूपा आपोऽग्नौ प्रक्षिप्ताः पाकाभिनिर्वृत्ता अमृता अत्यन्तरसवत्यो भवन्ति, इत्यर्थः ॥

ता वा एता ऋचः ॥ २ ॥

एतमृग्वेदमभ्यतपन् ।

(ऋङ्मन्त्राः) ता वा एता ऋचो भ्रमरस्थानीयाः पुष्पेभ्यो रसमाददाना भ्रमरा इवैतदृग्वेदविहितं कर्म पुष्पस्थानीयमभ्यतपन्नभितापं कृतवत्य इव ।

तस्याभितप्तस्य यशस्तेज इन्द्रियं
वीर्यमन्नाद्यꣳ रसोऽजायत ॥ ३ ॥

(१) यशस्तेजइन्द्रियवीर्यान्नाद्यलक्षणो रसोऽजायतेत्यर्थः । ऋग्भिर्मन्त्रैः स्तोत्रशस्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म मधुनिर्वर्तकं सोमाज्यादिरसं मुञ्चति पुष्पमिव भ्रमरैराचूष्यमाणं, तेन च यशस्तेजइन्द्रियवीर्यादिलक्षणं फलमुत्पन्नं भवति, इत्यर्थः ॥ २ ॥ ३ ॥

(१) यशो विश्रुतत्वं, तेजो देहगता दीप्तिः, इन्द्रियं सामर्थ्योपेतैरिन्द्रियैरवैकल्यं, वीर्यं सामर्थ्यं बलमित्यर्थः, अन्नाद्यमन्नञ्च तदाद्यञ्च येनोपभुज्यमानेनाहन्यहनि देवानां स्थितिः स्यात्तदन्नाद्यमेष रसोऽजायत यागादिलक्षणात्कर्मणः — इति शङ्कराचार्याः ॥

तद्व्यक्षरत् ।

(व्यक्षरत्) तद्यशआदिलक्षणं फलं विशेषेणागमत् ।

तदादित्यमभितोऽश्रयत् ।

गत्वा चाऽऽदित्यमभित आश्रितवदित्यर्थः ।

तद्वा एतद्यदेतदादित्यस्य रोहितꣳ रूपम् ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

आदित्ये प्रत्यक्षतः परिदृश्यमानं यद्रोहितरूपं तत्कर्मनिर्वर्त्यं यशस्तेजआदिलक्षणफलरूपमित्यर्थः । रोहितरूपे तद्बुद्धिः कर्तव्येति यावत् ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य
दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो

अथ येऽस्य दक्षिणा रश्मयः इत्यादि। सर्वं पूर्ववन्नेयम् ॥

यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥

तानि वा एतानि यजूꣳष्येतं यजुर्वेद-
मभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज
इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा
एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ ३ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य-
द्वितीयः खण्डः ॥ २ ॥

---

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य
द्वितीयः खण्डः ॥ २ ॥

---

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य
प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः
सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥

तानि वा एतानि सामान्येतꣳ सामवेदमभ्य-
तपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं
वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्य-
देतदादित्यस्य कृष्णꣳ रूपम् ॥ ३ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

०अथ येऽस्य प्रत्यञ्चो रश्मय इत्यादि। पूर्ववदेव ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

---

अथ येऽस्योदञ्चो रश्मयस्ता एवास्यो-
दीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृतः।

अथर्वणाऽङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः।

इतिहासपुराणं पुष्पम्।

इतिहासपुराणविहितकर्मस्वथर्वाङ्गिरसां विनियोगादृग्वेदादिवत्पुष्पत्वोक्तिर्द्रष्टव्यम्।

ता अमृता आपः ॥ १ ॥

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभि-
तप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदे-
तदादित्यस्य परः कृष्णꣳ रूपम् ॥ ३ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य
चतुर्थः खण्डः ॥ ४ ॥

---

परः कृष्णं रूपमतिशयितं कृष्णरूपमित्यर्थः ॥ १ ॥ २ ॥ ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा
मधुनाड्यो गुह्या एवाऽऽदेशा मधुकृतः।

ब्रह्मविषयकौपनिषद्रहस्योपदेशा इत्यर्थः।

ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥

ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपꣳस्तस्याभितप्तस्य
यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्य-
देतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥

समाहितदृष्टिभिर्निरीक्ष्यमाणमादित्यमण्डलमध्ये चलतीव स्फुरतीत्यर्थः ॥ १ ॥ २ ॥ ३ ॥

ते वा एते रसानाꣳ रसा वेदा हि रसास्तेषा-
मेते रसास्तानि वा एतान्यमृतानाममृ-
तानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

---

लोकसारभूतऋग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यत्वाद्रोहितादिरूपाणामतिरसत्वम् । तथा वेदेभ्योऽपीष्टतत्साधनप्रतिपादकतया भोग्यभूततयाऽमृतेभ्यो रोहितादिरूपाणां तत्प्रतिपाद्यकर्मनिष्पाद्यानामतिभोग्यत्वादमृतादप्यमृतत्वमित्यर्थः । अयमत्र निर्गलितार्थः—प्रागाद्यूर्ध्वदिशावस्थितरश्मिनाडीतस्तत्तद्वेदोक्तकर्मकुसुमेभ्यस्तत्तद्वेदिकमन्त्रमधुकरैरादित्यमण्डलमानीतानि सोमाज्यपयःप्रभृतिद्रव्यनिष्पन्नानि यशस्तेजो वीर्यमिन्द्रियमित्येवमात्मकानि रोहितं शुक्लं कृष्णं परः कृष्णं मध्ये क्षोभत इवेत्युक्तानि रोहितादीनि पञ्चामृतान्यादित्यमध्याश्रितानीति ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

---

अग्निमुखा वसवो रोहितरूपलक्षणं प्रथमममृतमुपजीवन्तीत्यर्थः । उपजीवनं भक्षणमिति शङ्कां प्रतिषेधति— न वै देवा अश्नन्ति न पिबन्तीति ।

एषां पञ्चानाममृतानां वसुरुद्रादित्यमरुत्साध्यगणभोग्यत्वं तदुपासीनानां वसुत्वादिप्राप्तिपूर्वकब्रह्मप्राप्तिरिति प्रतिपादयति—

तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना
मुखेन न वै देवा अश्नन्ति न पिबन्ति ।

चन्द्रमिवेति भावः । पुनः कथमुपजीवनमित्यत्राऽऽह—

एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

यशस्तेजआदिलक्षणं रोहितं रूपं सर्वैः करणैरुपलभ्य तृप्यन्तीत्यर्थः ॥ १ ॥

त एतदेव रूपमभिसंविशन्ति ।

एतदेव रूपमभिलक्ष्यानुभूयेति यावत् । संविशन्ति भोगानन्तरमुदासीना भवन्तीत्यर्थः ।

एतस्माद्रूपादुद्यन्ति ॥ २ ॥

प्राप्ते भोगकाल इति शेषः । एतस्माद्रूपादिति ल्यब्लोपे पञ्चमी । एतद्रूपानुभवमुद्दिश्योद्यन्ति सोत्साहा भवन्तीत्यर्थः ॥ २ ॥

स य एतदेवममृतं वेद ।

एवं अनेन प्रकारेण वसुतृप्त्याधायकदर्शनगोचरत्वलक्षणवसूपजीव्यत्वादिना रोहितामृतं यो वेद सः —

वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

तत्क्रतुन्यायेन तदुपासीनोऽपि वसुत्वं प्राप्य तथैव भवतीत्यर्थः ॥ ३ ॥

कियन्तं कालमित्यत्राऽऽह—

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य षष्ठः खण्डः ॥ ६ ॥

---

आदित्यस्य प्राच्यां दिश्युदयः प्रतीच्यामस्तमयश्च यावन्तं कालमनुवर्तते तावन्तं कालं वसूनां यदाधिपत्यं यदप्रतिहतसंकल्पकत्वलक्षणं स्वाराज्यं च तत्पर्येता परितो गन्तेत्यर्थः ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य षष्ठः खण्डः ॥ ६ ॥

---

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति॥ १॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्ता-वद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

पुरस्तादुदयपश्चादस्तमयापेक्षया द्विगुणं कालं दक्षिणत उदयमुत्तरतोऽस्तमयं च कल्पयित्वा श्रुतिर्ब्रवीतीति नात्र कथंता कार्या ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेदाऽऽदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्याष्टमः खण्डः ॥ ८ ॥

सर्वं पूर्ववत् ...

सर्वं स्पष्टम् ॥ २ ॥ ...

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति
सोमेन मुखेन न वै देवा अश्नन्ति न
पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥
त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥
स य एतदेवममृतं वेद मरुतामेवैको भूत्वा
सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एत-
देव रूपमभिसंविशत्येतस्माद्रूपादुदेति॥ ३ ॥
स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्ता-
वदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुता-
मेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥
इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य
नवमः खण्डः ॥ ९ ॥
पूर्ववत्॥१॥२॥३॥४॥

---

अथ यत्पञ्चममममृतं तत्साध्या उपजीवन्ति
ब्रह्मणा मुखेन न वै देवा अश्नन्ति न
पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥
त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥
स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा
ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स
एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति॥ ३॥
स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्त-
मेता द्विस्तावदूर्ध्व उदेताऽर्वाङस्तमेता साध्या-
नामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता॥४॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य

दशमः खण्डः ॥ १० ॥

सर्वं समानम् ॥ १॥ २॥ ३॥ ४॥

एवं वसुरुद्रादित्यमरुत्साध्यगणभोग्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रयदेवमधुत्वरूपितज्योतिर्मण्डलाख्यरूपयुक्तस्योदयास्तमयादिकृत्यविशिष्टस्याऽऽदित्यनामकस्याऽऽदित्यशरीरककार्यावस्थब्रह्मण उपासनामुपदिश्य नामरूपकृत्यादिरहित(१)कार्यावस्थारहितादित्यजीवशरीरकब्रह्मोपासनं दर्शयति— (१) रहिताकार्यावस्थादित्यजीव— इति ग्रन्थाक्षरपाठः

अथ तत ऊर्ध्व उदेत्य ।

अथ ब्रह्मदिवसरूपस्य कल्पस्य समाप्त्यनन्तरं तत ऊर्ध्व उदेत्योदयास्तमयाभ्यां प्राण्यनुग्रहादूर्ध्व उदेत्योदयास्तमयकृत्यप्रयुक्तप्राण्यनुग्रहरहित इत्यर्थः ।

नैवोदेता नास्तमेतैकल एव मध्ये स्थाता ।

उदयास्तमयशून्य एकस्वभाव एवोदासीनतया वर्तत इत्यर्थः । अत्र हि भाष्ये कार्यकारणावस्थब्रह्मोपासनं विधीयते । असौ वा आदित्यो देवमध्वित्यारभ्याथ तत ऊर्ध्व उदेत्येत्यतः प्रागादित्यवस्वादिकार्यविशेषावस्थं ब्रह्मोपास्यमुपदिश्यते । अथ तत ऊर्ध्व उदेत्येत्यादिनाऽऽदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्मोपदिश्यत इत्युक्तम् । तत्राथ तत ऊर्ध्व उदेत्येत्यस्य मुक्तावस्थादित्यान्तर्यामिब्रह्मोपासनपरत्वेऽथशब्दादिस्वारस्यात्कारणावस्थमिति भाष्यस्याकार्यावस्थं मुक्त्यवस्थमित्यर्थ एवोचितो न त्वादित्यभावप्राप्तिपूर्वावस्था । व्यासार्यैस्तु भाष्यस्वारस्यमवलम्ब्याऽऽदित्यनामरूपभाक्त्वावस्थापूर्वभाव्यवस्थैवाथ तत ऊर्ध्व उदेत्येत्यादिना संदर्भेण प्रतिपाद्यत इति वर्णितं तेषामयमाशयः— अथशब्दो न निर्दिष्टानन्तर्यार्थोऽपि तूपासनान्तरप्रस्तावार्थः । 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' इत्यस्याप्युदयास्तमयतत्कार्यशून्यत्वमर्थः । तच्चाऽऽदित्यभावपूर्वावस्थायां कल्पादौ संभवतीति ।

तदेष श्लोकः ॥ १ ॥

---

१ महिशूरमुद्रितपुस्तके— 'दिवसांतः' इति पाठः ।

तस्मिन्विषये देवान्प्रति केनचिद्योगिना गीतः श्लोकः ॥ १ ॥

न वै तत्र न निम्लोच नोदियाय कदाचन। देवास्ते-
नाहꣳ सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥

हे देवास्तत्र तस्मिन्नादित्यभावमुक्तिकाले स मुक्तादित्यान्तर्यामी परमात्मा नास्तमितो नोदितश्च तेन तादृशेन सत्येन निर्विकारेण ब्रह्मणाऽहं मा विराधिषि विरोधं न गच्छामीति यावत् । निम्लोचेति च्छान्दसो द्विर्वचनाभावः ॥ २ ॥

न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा
हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥

एतां मधुविद्यारूपां ब्रह्मोपनिषदं ब्रह्मविद्यां वेदानुतिष्ठत्यस्मै ब्रह्मविद आदित्यो नोदेति नास्तमेति । आदित्योदयप्रकाशाभ्यां न किंचिदस्य प्रयोजनमित्यर्थः । कुत इत्यत आह—सकृद्दिवा हैवेत्यादि । अस्मै ब्रह्मविदे सकृद्दिवैव भवति सकृदुदितमहरेव भवति सदैवाहर्वा भवतीत्यर्थः । संततं सर्वविषयसाक्षात्कारोऽस्य भवतीत्यर्थः ॥ ३ ॥

मधुविद्यासंप्रदायमाह—

तद्धैतद्ब्रह्मा प्रजापतय उवाच
प्रजापतिर्मनवे मनुः प्रजाभ्यः ।

तद्धैतन्मधुविज्ञानमित्यर्थः ।

तद्धैतदुद्दालकायाऽऽरुणये ज्येष्ठाय
पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥

तद्धैतद्ब्रह्मोद्दालकाय पिता प्रोक्तवान् ॥ ४ ॥

इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म
प्रब्रूयात्प्रणाय्याय वाऽन्तेवासिने ॥ ५ ॥

तस्माद्धेतोरिदं ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय वा प्रब्रूयात् । योग्याय शिष्याय वा ब्रूयात् । प्रणाय्योऽसंमताविति निष्कामार्थे प्रणाय्यशब्दस्य निपातितत्वात् ॥ ५ ॥

नान्यस्मै कस्मैचन ।

उक्तपुत्रशिष्यव्यतिरिक्ताय कस्मैचिदपि न ब्रूयादित्यन्वयः ।

यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ।

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्यैकादशः खण्डः ॥ ११ ॥

अद्भिः परिगृहीतां धनस्य पूर्णां

समुद्रावृतां भोगोपकरणैः पूर्णामिमां पृथिवीं यद्यप्यस्मा आचार्याय दद्यात्तदपेक्षयाऽप्येतद्विज्ञानमेवाधिकम् । नैतस्यानुरूपो निष्क्रयोऽस्तीत्यर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था । एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते समन्वयाध्याये—मधुविद्यायां वस्वादिगणभोग्यरोहितरूपादिपञ्चामृताश्रयादित्योपासनारूपतयाऽस्यां विद्यायां वस्वादीनां नाधिकारः संभवत्युपास्योपासकभावस्यैकस्मिन्नसंभवात् । न ह्येकस्यैव प्रीणनीयत्वं प्रीणयितृत्वं च संभवति । 'वसूनामेवैको भूत्वा' [छा० ३ । ६ । ३] इत्यादिना वसुत्वादिप्राप्तेरेव मधुविद्याफलत्वेन वस्वादीनामेव सतां वस्वादि(सुत्वा)प्राप्तिकामनाया असंभवाच्चार्थित्वाद्यसंभवाच्च । 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' [बृ० ४ । ४ । १६] इति परब्रह्मव्यतिरिक्तस्य देवोपास्यत्वनिषेधेन ज्योतिःशब्दिते ब्रह्मण्येवोपासनसद्भावावगमाच्च मधुविद्यादिषु नाधिकार इति 'मध्वादिष्वसंभवादनधिकारं जैमिनिः' [ब्र० सू० १।३।३१] । 'ज्योतिषि भावाच्च' [ब्र० सू० १ । ३ । ३२] इति सूत्राभ्यां पूर्वपक्षं कृत्वा 'भावं तु बादरायणोऽस्ति हि' [ब्र०सू० १ । ३ । ३३] इति सूत्रेण सिद्धान्तः कृतः। अस्यायमर्थः—अधिकारस्य सद्भावं बादरायण आचार्यो मन्यते । अस्ति हि तेषामप्यर्थित्वादिसंभव इति । अयमाशयः—न हीयं विद्या वस्वादित्यादिमात्रपर्यवसिताऽपि तु तच्छरीरकपरमात्मपर्यन्ता । वस्वादीनामेव सतां स्वान्तर्यामिपरमात्मोपासनं (सं)भवत्येव । न चोपास्यप्रतिपादकवस्वादिशब्दानां ब्रह्मपर्यन्तत्वे प्रमाणाभावः । उपसंहारे 'ब्रह्मोपनिषदं वेद' [छा० ३ । ११ । ३] इति श्रवणाद्वस्वादीनामेव सतां कल्पा-

मुत्वा
न्तरे वस्वादिप्राप्तिपूर्वकब्रह्मप्राप्तेरुद्देश्यत्वसंभवाच्च । लोके पुत्रिणामेव सतां जन्मान्तरेऽपि पुत्रितेप्सायां दर्शनात्। ननु वस्वादिपञ्चगणोपजीव्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रयादित्यमधूपासनत्वान्मधुविद्यायास्तस्यां च विद्यायामादित्यस्यैवोपास्यतयाऽऽदित्यस्य तद्विद्याधिकारासंभवेऽपि वस्वादीनां कथमनधिकारशङ्का। न ह्यस्यां विद्यायां वस्वादीनामुपास्यत्वमपि तु तद्भोग्यस्याऽऽदित्यस्यैव भाष्यकृता—"मधुविद्याया-मृग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याऽऽश्रयतया लब्धमधुव्यपदेशस्याऽऽदित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वमिति पूर्वपक्षे "वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते" इति सिद्धान्ते चोक्तत्वात् । न हि स्वोपासनवत्स्वोपजीव्यत्वेनान्यस्योपासनं विरुद्धं तथा सत्युपासनमात्रोच्छेदप्रसङ्गात् । सर्वेषूपासनेषूपास्यगतस्वोपजीव्यत्वस्यसेव्यत्वस्वाधारत्वस्वान्तर्यामित्वादीनामनुसंधेयत्वात् । ततश्च वसूनामेव सतां स्वोपजीव्यपञ्चामृताश्रयादित्यविषयमधुविद्यानुष्ठानसंभवात्कुतोऽनधिकारशङ्केति चेदुच्यते । वसूनामेवैको भूत्वेत्यादिना वसुत्वादिप्राप्तिफलत्वेन कीर्तनेन मधुविद्यायां तत्क्रतुन्यायेन वस्वादीनामुपास्यत्वस्याभ्युपगन्तव्यत्वात् । "अथ तत ऊर्ध्व उदेत्येत्यतः प्रागादित्यवस्वादिकार्यविशेषावस्थं ब्रह्मोपास्यमुपदिश्यते । अथ तत ऊर्ध्व उदेत्येत्यादिनाऽऽदित्यस्यान्तरात्मतयाऽवस्थितं कारणावस्थं ब्रह्मोपास्यमुपदिश्यते" इति कार्यावस्थोपासनदशायामादित्यवस्वादीनामविशेषेणोपास्यत्वस्य भाषितत्वात्। "अस्ति ह्यादित्यवस्वादीनामपि स्वात्मस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सासंभव" इत्यादित्यस्य वस्वादीनां च तुल्यत्वस्य भाषितत्वाच्च । मधुविद्याया आदित्योपासनत्वपञ्चामृतोपासनत्ववस्वाद्युपासनत्वरूपाकारत्रयवत्त्वान्न पूर्वपक्षोत्थित्यनुपपत्तिरिति द्रष्टव्यम् । ननु वस्ववस्थस्य ब्रह्मण उपास्यत्वसंभवेऽपि तद्वसव उपजीवन्तीति निर्दिष्टमुपजीवितृत्वलक्षणं भोक्तृत्वं न ब्रह्मणः संभवतीति चेन्न। उपजीवितृत्वस्यापि सद्वारकतया तत्र संभवात् । नन्वेवं तद्वसव उपजीवन्तीत्यत्र वसुशब्दस्य तदन्तर्यामिपरत्वे वसूनामेवैको भूत्वेत्यत्रापि वसुशब्दस्य ब्रह्मपरत्वं स्यात् । न च तद्युक्तम् । न ह्युपासकस्यापि जीवस्य कल्पान्तरे वसुत्वप्राप्तिलक्षणसंसारदशायां वस्ववस्थब्रह्मभावोक्तिः संगच्छत इति चेन्न । वसूनामेवैको भूत्वेत्यत्र यथाश्रुते बाधकाभावेन, ब्रह्मपरत्वे

(१) सर्वेषूपासनेषु—इति ग्र० पाठः।

बाधकसद्भावेन च यथाश्रुतार्थस्यैवोपपन्नत्वादित्यलमतिचर्चया । ननु 'वसूनामेवैको भूत्वा' 'सकृद्दिवा हैवास्मै भवति' इति वाक्यद्वयानुसारेणानया विद्यया कल्पान्तरे कंचित्कालं वसुभावं प्राप्य पश्चाद्ब्रह्म प्राप्नोतीत्यभ्युपगमो न युक्तः । तथा सतीदानीं मधुविद्योपासकानां प्रायणानन्तरं फलप्राप्तिर्न स्यात्कल्पान्तरभावित्वाद्वसुत्वस्य । न च स विलम्बः सोढव्य एवेति वाच्यम् । कल्पान्तरेऽपि वस्वादिभावप्रापकमधुविद्यानिष्ठानां तत्प्रापककर्मान्तरनिष्ठानां चानन्तानां संभवेन सर्वेषां च युगपद्वस्वादिभावे वसुगताष्टत्वसंख्याविरोधप्रसङ्गेन वसुत्वप्रापककर्मनिष्ठानामनन्तानां मध्ये विपाकानुसारेण केषांचिच्चिचतुरकल्पमध्ये वसुत्वादिप्राप्तिर्भवति केषांचिदनुष्ठितमधुविद्यानामपि सहस्रकल्पप्रतीक्षणमप्यस्तीत्यभ्युपगन्तव्यम् । न हीदृक्षः कश्चिन्मुमुक्षुर्भवति । सहस्रकल्पपर्यन्तविलम्बमभ्युपगच्छतः कथं मुमुक्षुता । हैरण्यगर्भान्तसकलभोगविरक्तिपूर्वकब्रह्मानन्दप्रेप्सालक्षणमुमुक्षाशाली हि ब्रह्मविद्यायामधिकरोति । ततश्च वस्वादिपदाभिलाषिणः कथं मुमुक्षुता कथं वा ब्रह्मविद्याधिकार इतिचेत्सत्यम्, ब्रह्मानन्दैकप्रेप्सुरेव मुमुक्षुः । अथापि यथा देहावसानकाले ब्रह्मानन्दैकप्रेप्सा मुमुक्षा, एवं वसुत्वावसाने ब्रह्मैव प्राप्नवानीति प्रेप्साऽपि ब्रह्मानन्दैकप्रेप्सा भवत्येव । शास्त्रवशाच्चेदृशविलम्बसहिष्णवोऽप्यधिकारिणः सन्तीत्यभ्युपगन्तव्यम् । तत्र च प्रारब्धवैचित्र्यमेव नियामकम् । अत एव 'याथातथ्यं स्वपरानियतं यच्चं वेद्यं पदं तत्काराकल्पं वपुरपि विदन्कस्तितिक्षेत बन्धम्' इत्युक्तरीत्या विवेकिनः कथं विलम्बसहिष्णुतेत्यप्यपास्तम् । प्रारब्धमहिम्ना सर्वस्याप्युपपत्तेः । वस्तुतस्तु भ्रातॄणां मध्ये त्वमेक इति लौकिकोक्तेर्भ्रातृभोगसाम्याभिप्रायत्ववद्वसूनामेवैको भूत्वेत्यस्य वाक्यस्य कंचित्कालमानुषङ्गिकवस्वादिभोगसाम्यमनुभूय तेन यथा परं ज्योतिरुपसंपद्यत इत्यभिप्रायत्वात्तस्य वाक्यस्य तादृशभोगसाम्यस्य च देहवियोगानन्तरमेव संभवान्नानुपपत्तिरित्याहुः । ननु वस्वादिदेवतानां विग्रहाभावेनोपासनसामर्थ्यासंभवात्कथमुपासनाधिकारः । न हि देवानां शरीरवत्त्वे प्रमाणमुपलभ्यते । न तावत्प्रत्यक्षानुमाने तस्य तदगोचरत्वात् । नापि वज्रहस्तः पुरंदरस्तेनेन्द्रो वज्रमुदयच्छादित्यादीनां प्रामाण्यम् । मन्त्रार्थवादानामनुष्ठेयस्मृतिस्तुतिप्रयोजनकतया

१ महिशूरमुद्रितपुस्तके 'च दिव्यं प॰' इति पाठः ।

विग्रहादौ तात्पर्याभावेन तात्पर्याविषये शब्दस्याप्रामाण्यात् । अन्यथा श्वेतवर्णरजककर्तृकवस्त्रशोधनतात्पर्येण प्रयुक्तस्य श्वेतो धावतीत्यस्य शुनकसमीपगमनप्रतीत्युत्पादकत्वसंभवमात्रेण तत्रापि प्रामाण्यप्रसङ्गात् । ननु रेवत्याधारवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टक्रतुविधायके रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति वाक्ये रेवतीषु वारवन्तीयमित्यंशस्य 'रेवतीर्नः सधमाद:' इत्यृक्त्रयाधारवारवन्तीयसामरूपाग्निष्टोमस्तोत्रविशेषणे तात्पर्याभावेऽपि प्रामाण्यं दृष्टम् । न हि तद्विशेषणं सोमेन यजेतेत्यादिविशिष्टविधिषु सोमलतादिविशेषणवल्लोकसिद्धम् । नापि विधिसिद्धं रेवतीषु रथंतरं गायेदितिवद्रेवतीषु वारवन्तीयं गायेदिति विध्यदर्शनात् । न चास्यैव विशिष्टगोचरस्य विधेर्विशेषणविधावपि तात्पर्यं वक्तुं शक्यं विध्यावृत्तिप्रसङ्गात् । न चाऽऽक्षेपाद्विशेषणप्रसिद्धिरन्योन्याश्रयात् । विशेषणप्रसिद्धौ सत्यां विशिष्टविधिः, विशिष्टविधिनैव विशेषणस्याऽऽक्षेप इति परस्पराश्रयापत्तेः । तस्माद्विशिष्टविधेर्विशेषणस्वरूपे तात्पर्याभावेऽपि रेवतीषु वारवन्तीयमिति पदद्वयसमभिव्याहारस्यैव प्रामाण्यमभ्युपगन्तव्यमिति चेन्नैवम् । रेवतीषु वारवन्तीयमिति पदद्वयसमभिव्याहारलभ्यां रेवत्याधारवारवन्तीयप्रतीतिमुपजीव्य प्रवृत्तेन विशिष्टविधिनाऽऽक्षिप्तस्य रेवतीषु वारवन्तीयं कुर्यादिति विशेषणविधेरेव तत्र प्रमाणत्वेन रेवतीषु वारवन्तीयमिति पदद्वयसमभिव्याहारस्याप्रमाणत्वात् । इयांस्तु विशेषः—सोमलतादिविशेषणं मानान्तरसिद्धं सोमपदात्प्रतीयते । इह तु मानान्तरासिद्धमेव पदसमभिव्याहारात्प्रतीयत इति । प्रतीयमानेऽपि विशेषणे विशिष्टविधेः प्रामाण्याभाव उभयत्राप्यविशिष्टः । ततश्च यथा सोमप्रत्यायकं सोमपदं न सोमस्वरूपे प्रमाणमेवं रेवतीषु वारवन्तीयमिति पदद्वयसमभिव्याहारो रेवतीवारवन्तीयरूपविशेषणरूपार्थप्रत्यायकोऽपि न तत्र प्रमाणम् । अयं चापरो विशेषः—सोमलताद्रव्यस्य लोकसिद्धत्वात्तत्र यागसंबन्धित्वेनैव विधिः कल्प्यः । इह तु विशेषणस्वरूपस्यापि मानान्तरासिद्धत्वात्प्रतीयमानेऽपि तस्मिन्विषये विशिष्टविधेः प्रामाण्याभावाच्च तत्सिद्ध्यर्थं स्वरूपेण स्तोत्रविशेषसंबन्धित्वेन च विधिद्वयं कल्प्यमिति । तस्मान्मन्त्रार्थवादानां स्वार्थे तात्पर्याभावान्न तेभ्यो देवताविग्रहसिद्धिः । ननु मन्त्रार्थवादानां विध्येकवाक्यतापन्नानां स्वस्वार्थेऽप्यवान्तरतात्पर्यं

संभवत्येव दर्शपूर्णमासादिप्रधानविध्येकवाक्यतापन्नप्रयाजादिविधिव-
दिति चेत्सत्यम् । मानान्तराविरोधे प्रतीयमानार्थे तात्पर्यं संभवति
न तु तद्विरुद्धे । अन्यथा यजमानः प्रस्तर इत्यत्रापि प्रतीयमानाभेदे
तात्पर्यप्रसङ्गात् । अस्ति च मन्त्रार्थवादवशेन देवताविग्रहाभ्युपगमे
मानान्तरविरोधः । देवताविग्रहाभ्युपगमे हि न्यायतौल्येन नानायागदेशे
युगपदाहूतानामागमनस्याग्निप्रक्षिप्तभस्मीभूतहविःस्वीकारादेरप्यभ्युपग-
मात्प्रत्यक्षोपपत्तिविरोधः । अतो न देवताविग्रहे तात्पर्यं संभवति ।
अतो विग्रहाभावादुपासनास्वनधिकार इति पूर्वपक्षे प्राप्त उच्यते ।
'तदुपर्यपि बादरायणः संभवात् ।' [ ब्र० सू० १ । ३ । २६ । ] तद्ब्र-
ह्मोपासनमुपरि मनुष्याणामुपरि देवादिष्वपि संभवतीति भगवान्बाद-
रायणो मन्यते तेषामप्यर्थित्वसामर्थ्ययोः संभवात् । अर्थित्वं ताव-
दाध्यात्मिकादिदुर्विषहदुःखाभितापात्परस्मिन्ब्रह्मणि च निरस्तनिखि-
लदोषगन्धेऽनवधिकातिशयासंख्येयकल्याणगुणगणे निरतिशयभोग्यत्वा-
दिज्ञानाच्च संभवति । सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया संभवति ।
देहेन्द्रियादिमत्त्वं च सर्वेषु सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना
चतुर्विधसृष्ट्याम्नानात्सिद्धम् । देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्र-
भृतिचतुर्दशलोकस्थभोगयोग्यदेहेन्द्रियादियोगायत्तः । तथा 'देवत्वं
गच्छन्ति य एता उपयन्ति' इति देवत्वप्राप्त्यर्थक्रतुविध्यन्यथाऽनुपप-
त्याऽपि देवताविग्रहवत्त्वसिद्धिः । ज्योतिष्टोमादिविध्यन्यथाऽनुपपत्त्या
देशान्तरदेहान्तरभोग्यैहिकसुखलक्षणस्वर्गशब्दोक्तसुखरूपतत्फलभोक्तृ-
कर्मदेवसिद्धेरभ्युपगतत्वाद्देवतासायुज्यसालोक्यादिफलकर्मविध्यन्यथा-
ऽनुपपत्त्या देवताविग्रहाणां तद्भोग्यभोगोपकरणानामभ्युपगन्तव्य-
त्वाच्च ।' विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ।' [ ब्र० सू० १ ।
३ । २७ । ] नन्वेवं मन्त्रार्थवादादिभिर्देवताया विग्रहाभ्युपगमे कर्मणि
विरोधः प्रसज्यते । बहुषु यागेषु युगपदेकस्येन्द्रस्य विग्रहवतः 'अग्नि-
मग्न आवह' 'इन्द्र आगच्छ' 'हरि व आगच्छ' इत्यादिनाऽऽहू-
तस्य संनिधानानुपपत्तेर्विरोधः प्रसज्यत इति चेन्न । अनेकप्रतिपत्तेर्दर्श-
नात् । दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः ।
'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ।' [ ब्र० सू० १ । ३ ।
२८ । ] मा भूत्कर्मणि विरोधो वैदिके तु शब्दे विरोधः प्रसज्यते । देव-
ताविग्रहाभ्युपगमे हि विग्रहस्य सावयवत्वेनानित्यत्वादिन्द्रादेरर्थस्य

विनाशादूर्ध्वं प्रागुत्पत्तेश्च तदर्थवाचिवैदिकशब्दानां सर्वे शब्दस्यार्थे-नौत्पत्तिकः संबन्धो न स्यात् । शब्दस्वरूपस्यापि नाशेऽनित्यत्वं स्यात् । ततश्च 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' [ जै० १ । १ । ५ ] इति सूत्रप्रतिपादितं शब्दार्थसंबन्धानां नित्यत्वं विरुध्येतेति चेन्न ।

'वेदेन नामरूपे व्याकरोत्सतासती प्रजापतिः ।'
नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवाऽऽदौ देवादीनां चकार सः ॥

इति प्रत्यक्षानुमानशब्दिताभ्यां श्रुतिस्मृतिभ्यामिन्द्राद्यर्थानां वेदप्रभवत्वावेदनात् । यथा शिल्पिना शिल्पशास्त्रोदितनामरूपाद्यनुसंधानपूर्वकं निर्मितं देवताप्रतिमादिकं पूर्वपूर्वसमानरूपमेवमिन्द्राद्यर्थोऽपि वेदोक्तनामरूपानुसंधानशालिना प्रजापतिनाऽऽदौ निर्मीयमाणः पूर्वपूर्वसमानरूपः एव संभवति । ततश्च समानरूपाभिव्यङ्ग्याकृतिवाचित्वादिन्द्रादिशब्दानां व्यक्तीनामनित्यत्वेऽपि जातिवाचिगवादिशब्दवदिन्द्रादिशब्दानामपि जातिवाचितया नानित्यार्थसंयोगकृतो विरोध इत्यर्थः । ननु 'मन्त्रकृतो वृणीते' संहिताकारपदकारसूत्रकारब्राह्मणकाराणां 'विश्वामित्रस्य सूक्तं भवति' इति मन्त्रादीनां कार्यत्वश्रवणान्न वेदनित्यत्वमित्यत्राऽऽह—'अत एव च नित्यत्वम् ।' [ ब्र० सू० १ । ३ । २९ ]

अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः ॥

इति मन्त्रकृत्त्वेन प्रसिद्धानामपि वसिष्ठविश्वामित्रादीनां वेदजन्यत्वान्नानान्मन्त्रकृत्त्वं मन्त्रद्रष्टृत्वमेव न तु मन्त्रकर्तृत्वमित्यवसीयते । अतो वेदनित्यत्वस्य नानुपपत्तिः । नन्वेवमपि प्राकृतप्रलये शब्दस्य तदुपादानभूताहंकारादेश्च नष्टत्वात्कथं वेदनित्यत्वं कथं वा सर्वेषां वेदशब्दप्रभवत्वं तत्राऽऽह—'समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च' [ ब्र० सू० १ । ३ । ३० ] कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तसमाननामरूपत्वस्य तदवस्थत्वादेव न शब्दानित्यत्वम् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।' [ ऋ० सं० १० । १९० । ३ । ] यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।

दृश्यन्ते तानि तान्येव तथा भावा युगादिषु । [ महा भा० १२।८५५० ]

इति श्रुतिस्मृतिभ्यां तथैव प्रतिपादनादेतस्य नित्यत्वमपौरुषेयत्वं च। इदमेव हि वेदस्यापौरुषेयत्वं यत्पूर्वपूर्वोच्चारणक्रमानुसंधानसापेक्षोच्चारणक्रमवत्त्वं तत्त्विदानींतनवेदे सर्गाद्यवेदेऽपि समानम्। इयांस्तु विशेषः- भगवद्व्यतिरिक्ताः सर्वेऽपि पूर्वपूर्ववेदानुपूर्व्यनुभवजनितसंस्कारवशेन पूर्वानुपूर्वीं स्मृत्वा तयैवाऽऽनुपूर्व्या वेदमुच्चारयन्ति, भगवांस्तु संस्कारनिरपेक्षमेव पूर्वानुपूर्वीमनुसंधाय तयैवाऽऽनुपूर्व्या वेदमुच्चारयतीति। इदमेव हि पौरुषेयप्रबन्धापेक्षया वेदस्य वैलक्षण्यं नित्यत्वं च। ननु चतुर्मुखकर्तृकाचान्तरकल्पसृष्टिविषयतयाऽपि धाता यथापूर्वमकल्पयदित्यादिप्रमाणानामुपपत्तौ स्वतन्त्रपरमात्मकर्तृकब्रह्मकल्पाद्यसमयप्रवृत्तवेदचतुर्मुखादिसृष्टेः समानानुपूर्वीकत्वसमाननामरूपकृत्यत्वादौ किं प्रमाणमिति चेदुच्यते—चतुर्मुखादेर्नामरूपकृत्यादीनीतिहासपुराणादिभ्योऽवगत्यैतादृशनामरूपकृत्यविशिष्टश्चतुर्मुखो भवानीत्येवं संकल्पपूर्वकं भगवन्तमाराध्य तत्तत्पदं प्राप्नुवन्तीति हि शास्त्रप्रसिद्धिः। यदि कल्पान्तर उत्पद्यमानश्चतुर्मुखो विलक्षणनामरूपकृत्यः स्यात्तदा तस्य भगवदाराधकस्य वाञ्छितार्थसिद्ध्यभावात्तदिष्टसाधनत्ववेदकशास्त्रस्याप्रामाण्यमेव स्यात्। तत्तत्पदाभिलाषिणः प्रवृत्तिश्च कस्यापि न स्यात्। अतः प्राकृतसृष्ट्यावृत्तावपि यथापूर्वमेव सृष्टिरिति देवताधिकरणे स्थितमिति। नन्वग्निलोकादूर्ध्वलोकवर्तिनामर्चिराद्यनतिवाह्यानामर्चिराद्यातिवाहिकचिन्तनरूपाङ्गासंभवात्तदङ्गत्वस्य 'तच्छेपगत्यनुस्मृतियोगाच्च' [ब्र० सू० ४।२।१८] इति 'योगिनः प्रति च स्मर्येते स्मार्ते चैते' [ब्र० सू० ४।२।२१] इत्यादिष्वाविष्कृतत्वात्तदङ्गहीनानां देवतानां कथमङ्गीभूतब्रह्मविद्यायामधिकार इति चेन्न। आतिवाहिकचिन्तनस्य दृष्टार्थतया तत्तल्लोकवर्तिनां तदूर्ध्वलोकवर्त्यातिवाहिकचिन्तनेनैव साद्गुण्योपपत्तेः। मृतयजमानकेष्टिकर्मणि सूक्तवाके यजमानस्याऽऽयुराशासनाद्यभावादनपेक्षितमायुराशास्त इत्यादिकमंशं विहायापेक्षितांशपाठस्याङ्गीकृतत्वात्। तद्वदिहाप्यनपेक्षितातिवाहिकांशत्यागेनापेक्षितस्वस्वलोकोर्ध्ववर्त्यातिवाहिकानामेव चिन्तनीयत्वोपपत्तेः। ननु 'तदुपर्यपि बादरायणः संभवात्' [ब्र० सू० १।३।२६]। मध्वादिष्वसंभवादनधिकारं जैमिनिः [ब्र० सू० १।३।३१] इत्यधिकरणद्वयेन किं प्रयोजनम्। देवतानां देवताविशेषाणां चार्थित्वसामर्थ्यनिर्णयस्य मनुष्याणां प्रवृत्तिविशेषानौपयिकत्वात्। न च देवानामनेनाधिकरणद्वयेन किंचिदस्ति प्रयोजनम्।

तेषां स्वकीयपटुतरदेहादिमत्त्वेऽर्थित्वसद्भावनिर्णये चाधिकरणन्यायान-पेक्षणादिति चेदुच्यते—परं ब्रह्म देवानां वस्वादिदेवताविशेषाणां चोपास्यं फलप्रदं चेतीदृशमहिमविशिष्टतयोपासनकालेऽनुसंधेयत्वासि-द्धिलक्षणप्रयोजनसद्भावाद्देवताविग्रहसिद्धौ मधुविद्याया देवतापदप्राप्तिः फलमित्यपि न भवेत्। गत्यनुस्मृतावचेतनानामर्चिरादीनामेव मार्गपर्वत्वेन चिन्तनीयता स्यात्। नाऽऽतिवाहिकदेवतानां तथा। 'भाक्तं वाऽनात्मवित्त्वात्' [ ब्र० सू० ३।१।७] इति सूत्रोक्तन्यायेन ज्योतिष्टोमादिकर्मफलं भुञ्जानानां तं देवा भक्षयन्तीति निरन्तराजान-देवकर्मकरभावावगत्या न वैराग्यं सिध्येत्। प्राप्तिविरोधयोरसतोर्म-न्त्रार्थवादानां प्रतीयमानार्थे प्रामाण्यमस्तीति न्यायव्युत्पादनेन 'प्लवा ह्येते अदृढा यज्ञरूपाः' [ मु० १।२।७] एतत्तृतीयं स्थानमित्यादि-मन्त्रार्थवादैर्वैराग्यसंसिद्धिरित्यादीनि प्रयोजनानि द्रष्टव्यानि। प्रकृत-मनुसरामः ॥ ६ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्यै-
कादशः खण्डः ॥ ११ ॥

---

चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणो गायत्रीसादृश्यानुसंधानरूपा विद्या प्रस्तूयते गायत्री वेत्यादिना। इन्द्रः शचीपतिः, बलेन पीडितः, दुश्च्य-वनो वृषा, समुत्सुसासहि, इति गायत्री चतुष्पदा। एकैकस्य पादस्य षडक्षरात्मतया षडक्षरपादवत्त्वेन षड्विधा च। एवं ब्रह्मणोऽपि सर्व-भूतशब्दितात्मवर्ग एकः पादः। कर्मार्जितभोगस्थानरूपः पृथिवीलोक एकः पादः। भोगोपकरणं शरीरमेकः पादः। आत्मस्थित्यनुगुणप्रदेश-विशेषरूपं हृदयमेकः पाद इति भूतपृथिवीशरीरहृदयानि चत्वारः पादाः। तत्र सर्वभूतलक्षणपादस्य ब्रह्मात्मकवाक्कर्तृकगानकर्मत्वत्राण-कर्मत्वलक्षणं विधाद्वयं पृथिवीलक्षणस्य पादस्य सर्वभूतप्रतिष्ठात्व-सर्वभूतानतिवर्त्यत्वलक्षणं विधाद्वयं, शरीरहृदयलक्षणयोः पादयोः प्राणप्रतिष्ठात्वतदनातिवर्त्यत्वलक्षणं विधाद्वयमेव द्वयोरपि विधाद्वययोरपि भेदाभावात्। ततश्च परब्रह्मरूपा गायत्री भूतपृथिवीशरीरहृदयरूपपादच-तुष्टयवत्तया चतुष्पदा। गानकर्मत्वत्राणकर्मत्वसर्वभूतप्रतिष्ठात्वसर्वभूतान-तिवर्त्यत्वसर्वप्राणिप्राणप्रतिष्ठात्वसर्वप्राणानतिवर्त्यत्वलक्षणविधाषट्कयु-

क्ततया षड्विधा च। अतश्चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणि गायत्रीसादृश्यानुसंधानं कर्तव्यमिति प्रतिपादयति—

गायत्री वा इदꣳ सर्वं भूतं यदिदं किंच।

अत्र गायत्रीशब्देन न प्रसिद्धा गायत्र्यभिधीयते। तस्या भूतादिपादचतुष्टयसंबन्धाभावात्। एतावानस्य महिमेति पुंसूक्तमन्त्रप्रतिपाद्यत्वाभावाच्च। अपि तु परमात्मा। यथा कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्यग्निहोत्रशब्दः प्रयुज्यमानस्तत्सादृश्यविशिष्टानुष्ठानार्थस्तथा गायत्रीशब्दो ब्रह्मणि प्रयुज्यमानस्तत्सादृश्यानुसंधानार्थः। ततश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते। वैशब्दोऽवधारणार्थः। ब्रह्मैव परिदृश्यमानसर्वभूतात्मकमित्यर्थः। ततश्च ब्रह्मणि भूतलक्षणपादवत्त्वमुक्तम्।

अथ गायत्रीशब्दप्रवृत्तिनिमित्तमपि ब्रह्मण्युपपादयन्विधाद्वयमाह—

वाग्वै गायत्री।

गायत्रीशब्दितं गायत्रीसदृशं ब्रह्मैव वाग्रूपविशिष्टं भवतीत्यर्थः।

शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः।

इति पराशरस्मृत्याद्यनुरोधेन ब्रह्मण एव शब्दरूपत्वमिति भावः। ततश्च किमित्यत्राऽऽह—

वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च॥ १॥

वाग्रूपमेव ब्रह्म सर्वाणि भूतान्यभिधत्ते। हिताहितविधिनिषेधमुखेन त्रायते च। अतश्च ब्रह्मणो वाग्रूपस्य सर्वभूतगानत्राणकर्तृत्वाभ्यां गायत्रीशब्दवाच्यत्वं भूतात्मकपादवतो ब्रह्मणो वाक्कर्तृकगानत्राणकर्मत्वाभ्यां द्वैविध्यं चोक्तं भवति॥ १॥

उक्तार्थानुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाऽऽह—

या वै सा गायत्रीयं वाव सा येयं पृथिवी।

उक्तरूपविशिष्टप्रकृतधर्मिपरो यच्छब्दः। या सा सर्वभूतरूपैकपादयुक्ता गायत्री गायत्र्याख्यं ब्रह्म तदेव प्रसिद्धा पृथिवीत्यर्थः। कथं पृथिव्या ब्रह्मात्मकत्वमित्यत्राऽऽह—

अस्याꣳ हीदꣳ सर्वं भूतं प्रतिष्ठितम्।

ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम्[1]। न हि केवलपृथिव्याः सर्वभूतधारणशक्तिरस्तीत्यर्थः।

---

१ महिशूरमुद्रित पुस्तके माति सं०।

प्रतिष्ठात्वं च नियतमित्याह—

एतामेव नातिशीयते ॥ २ ॥

(१) भूतानि नातिवर्तन्ते - इति ग्रन्थान्तर पाठः।

(१) पृथिवीं भूतजातं नातिवर्तते । कर्मवश्यात्मना हि प्रतिष्ठात्वादेव पृथिवी नियमेनाशक्यातिक्रमणेत्यर्थः । पृथिवीमयब्रह्माण्डोदरे हि भोक्तृवर्गः परिवर्तते न ततोऽन्यत्रेति भावः । एवं द्वितीयः पादो भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् ॥ २ ॥

अथ तृतीयं पादमाह—

या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीरम् ।

अत्र पुरुषशब्दः शरीरविशिष्टजीवपरः । पृथिवी पृथिवीरूपपादविशिष्टा या गायत्री गायत्र्याख्यं ब्रह्म सा शरीरं शरीराख्यपादविशिष्टेत्यर्थः । भूतपृथिव्यो र्गायत्रीसामानाधिकरण्येन निर्दिष्टतया भूतपृथिवीशब्दयोर्ब्रह्मपर्यन्तत्वेन तद्रूपस्थापनक्षमत्वाद्दध्यप्रायन्यायेनात्र शरीरलक्षणपादान्तरनिर्देशकस्य शरीरशब्दस्य निष्कर्षकशब्दत्वेऽपि सामानाधिकरण्येन निर्देशो युक्तः ।

शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वाभ्यामुपपादयति—

अस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥

नातिवर्तन्त इत्यर्थः ॥ ३ ॥

चतुर्थं पादमाह—

यद्वै तत्पुरुषे शरीरमिदं वाव तद्य-
दिदमस्मिन्नन्तः पुरुषे हृदयम् ।

पुरुषे शरीरम् । पुरुषशब्दितशरीरविशिष्टजीवनिष्ठशरीराख्यपादविशिष्टं यद्गायत्र्याख्यं ब्रह्म तदेव हृदयं हृदयशरीरकं हृदयलक्षणपादकमित्यर्थः ।

हृदयस्य ब्रह्मात्मकत्वमुपपादयति—

अस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥

प्राणशब्देन प्राणापानादय इन्द्रियाणि वा कथ्यन्ते । तेषां हृदयसंब-

न्धिनाडीद्वारा हृदयप्रतिष्ठितत्वम् । एवं तृतीयचतुर्थपादौ प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् ॥ ४ ॥ एवमुक्तं चतुष्पात्त्वं

षाड्विध्यं च निगमयति—

(१) महिम्न एतावत्त्वप्रतिषेधिका मि ग्रन्थासरपठः।

सैषा चतुष्पदा षड्विधा गायत्री ।

नन्वेवं चतुष्पात्त्वे ब्रह्मणः परिच्छिन्नत्वं स्यादिति शङ्कायामुक्तस्य (१) महिम्नोऽवधिप्रतिषेधिकामृचमुदाहरति—

तदेतदृचाऽभ्यनूक्तम् ॥ ५ ॥

तदेतद्गायत्र्याख्यं ब्रह्माभिमुखीकृत्यर्चाऽभ्युक्तमित्यर्थः ॥ ५ ॥
तामेवर्चं पठति—

तावानस्य महिमा ।

पूर्वोक्तः सर्वोऽप्येतस्य महिमा नियाम्यवर्गः ।

ततो ज्यायाँश्च पूरुषः ।

पूर्वोक्तमहिमापेक्षया पुरुषो ज्यायान्परमात्मा ज्यायांस्ततोऽधिकमहिमशालीत्यर्थः ।

पादोऽस्य सर्वा भूतानि ।

अत्र सर्वा भूतानीति कार्यजगदन्तर्गता अचित्संसृष्टाश्चेतना उच्यन्ते ते सर्वे पादः । अंशमात्रमित्यर्थः । सर्वशब्दात्परस्य शेः सुपां सुलुगिति लुकि नलोपे रूपम् ।

त्रिपादस्यामृतं दिवि ॥ ६ ॥

अत्र द्युशब्दः समष्टिव्यष्टितत्त्वबहिर्भूताप्राकृतस्थानविशेषपरः । अप्राकृते स्थानविशेषेऽस्य परमात्मनोऽमृतं पादत्रयमित्यर्थः । त्रिपात्त्वं चाप्राकृतैर्भोग्यभोगस्थानभोगोपकरणविशेषैर्वा भूषणास्त्रादिरूपेण जगदन्तर्गततत्त्वाभिमानिभिर्नित्यैर्भगवदनुभवमात्रपरैर्नित्यसिद्धैश्च मुक्तैश्चाऽऽत्माभिर्वा संभवति ॥ ६ ॥

अथ चतुर्थपादत्वेनोक्तस्योपास्यतया वक्ष्यमाणस्य हृदयस्य स्तुत्यर्थं हृदयाकाशस्य बाह्याकाशाभेदेन महत्त्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं सामानाधिकरण्येनाऽऽह—

यद्वैतद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादा-
काशो यो वै स बहिर्धा पुरुषादाकाशः॥७॥
अयं वाव स योऽयमन्तः पुरुष आकाशः।

स्वकार्यव्याप्तत्वामूर्तत्वाचलत्वादिभिर्ब्रह्मतुल्यो बाह्याकाशो यो वर्तत इत्यर्थः। तादृशबाह्याकाशाभिन्नः पुरुषशब्दितशरीरान्तर्वर्तमान आकाश इत्यर्थः। बाह्यान्तराकाशयोर्भेदसत्त्वेऽपि धर्म्यैक्याभिप्रायेणाभेदनिर्देशः।

यो वै सोऽन्तः पुरुष आकाशः॥ ८ ॥
अयं वाव स योऽयमन्तर्हृदय आकाशः।

एवं ब्रह्मतुल्यबाह्याकाशाभिन्नः शरीरान्तराकाशो य इत्यर्थः। तादृशशरीरान्तस्थाकाशाभिन्नो हृदयावच्छिन्नाकाश इत्यर्थः। पूर्ववद्धर्म्यैक्यादिति भावः। एवं ब्रह्मतुल्यबाह्याकाशाभिन्नपुरुषान्तर्गताकाशाभेदं हृदयाकाशस्योक्त्वैतादृशमहिमशाली हृदयाकाश इति स्तौति—

यो वै सोऽन्तर्हृदय आकाशः।

अन्तर्हृदये वर्तमानो य आकाशोऽयं स तादृशमहिमशालीत्यर्थः। अनया च हृदयाकाशस्तुत्या चतुर्थपादत्वेनोक्तं हृदयं स्तुतं भवति। एवं चतुष्पदष्षड्विधस्य ब्रह्मणः प्रपञ्चान्तर्भावेन परिच्छिन्नत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवर्तित्वगुणकतयोपासनं मोक्षफलं विदधाति—

तदेतत्पूर्णमप्रवर्ति।

पूर्णत्वमपरिच्छिन्नत्वमप्रवर्तित्वमचलत्वं स्थिरत्वम्।

पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेद॥ ९॥
इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य
द्वादशः खण्डः॥ १२॥ (१) भजत इत्यर्थः - इति ग्र० पाठः

---

अनन्तस्थिरा श्रीर्मुक्तैश्वर्यमेव तद्रुपासीनो मुक्तिं भजतीत्यर्थः (१)॥ ९॥
इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य
द्वादशः खण्डः॥ १२॥

---

अथोक्तब्रह्मणोपासनाङ्गत्वेन द्वारपोपासनं विधीयते—

तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः ।

तस्यैतस्य चतुर्थपादत्वेन निर्दिष्टस्य प्रकृतस्य हृदयस्य देवताधिष्ठानभूतानि पञ्च द्वारच्छिद्राणीत्यर्थः ।

स योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः
स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत
तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥

तेजस्वित्वं लावण्यं

प्राणवृत्तिविशेषाप्यायितचक्षुरनुग्राहकादित्यस्य हृदयप्राक्सुषिरद्वारपालस्य तेजोऽन्नाद्यतयोपासन उपासकः स्वयमपि तेजस्व्यन्नादो भवतीत्यर्थः । तदेतदित्यादित्यस्य तेजोन्नाद्यपेक्षया नपुंसकलिङ्गनिर्देशः । एवमुत्तरत्रापि ॥ १ ॥

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रꣳ स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत
श्रीमान्यशस्वी भवति य एवं वेद ॥ २ ॥

श्रीमान् सम्पत्तिमान् ॥२॥

अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक्सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत
ब्रह्मवर्चस्यन्नादो भवति य एवं वेद ॥ ३ ॥

ब्रह्मवर्चसं वृत्ताध्ययनजं तेजः ॥३॥

अथ योऽस्योदङ्सुषिः स समानस्तन्मनः
स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत
कीर्तिमान्व्युष्टिमान्भवति य एवं वेद ॥ ४ ॥

पर्जन्यो देवताविशेषः

व्युष्टिर्देहकान्तिः ॥ २ ॥ ३ ॥ ४ ॥

अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः
स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान्भवति य एवं वेद ॥ ५ ॥

ओजो बलं महस्त्वं मह आकाशश्च देवताविशेषः ॥ ५ ॥

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः ।

त एत उक्तगुणविशिष्टा आदित्यचन्द्रमोऽग्निपर्जन्याकाशाख्या ब्रह्मपुरुषा ब्रह्मसंबन्धिनः पुरुषाः स्वर्गस्य लोकस्य भगवल्लोकस्य हृदयाकाशाख्यस्य द्वारपालकाः । यद्वा भगवल्लोकस्य द्वारपा आतिवाहिकाः ।

स य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य
द्वारपान्वेदास्य कुले वीरो जायते ।

वीरः पुत्रो जायते विद्यावीर्यसंपन्नो जायत इत्यर्थः ।

आनुषङ्गिकं फलमुक्त्वा प्रधानं फलमाह—

प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपु-
रुषान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥ ६ ॥

भगवल्लोकद्वारपालकोपासनयाऽनिवारितः सन्भगवल्लोकं प्रतिपद्यत इत्यर्थः ॥ ६ ॥

एवं गायत्रीविद्याप्रकृतस्य द्युसंबन्धिनः सकलफलप्रदस्य परस्य ब्रह्मण आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतीरूपत्वेनोपासनाविधानायाऽऽह—

अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः
पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु ।

'तथाऽक्षरात्संभवतीह विश्वम्' [ मु० १।१।७ ]इत्यत्र जगदन्तर्वर्तिव्यष्टिजाते विश्वशब्दप्रयोगाद्विश्वशब्दो व्यष्टिपरः । सर्वशब्दः परिशेषात्समष्टितत्त्वपरः । ततश्चातः परो दिवोऽप्राकृतस्थानविशेषस्योपरिष्टात्समष्टिव्यष्टिबहिर्भूतेष्वनुत्तमेषु स्वावधिकोत्तमरहितेषूत्तमस्थानविशेषेषु 'तस्य भासा सर्वमिदं विभाति' [ मु० २।२।१० ] इत्यवभासकतया ज्योतिःशब्दितः परमात्मा यो दीप्यत इत्यर्थः । अत्र यच्छब्दस्य सर्वनामत्वेन प्रकृतपरामर्शितया प्रकृतं त्रिपाद्ब्रह्म परामृश्यते ।

इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः ।

तद्दिवः परस्ताद्दीप्यमानं त्रिपाद्ब्रह्म यदिदमस्मिन्नन्तः पुरुषे शरीरस्यान्तर्ज्योतिः । इदं वाव कौक्षेयज्योतिरेव कौक्षेयज्योतिःशरीरकमेवेत्यर्थः ।

तस्य परमात्मशरीरभूतस्य जाठराग्नेः एषा दृष्टिः इदं दर्शनमित्यर्थः। यत्र यदास्मिन् शरीरे हस्तस्पर्शेनोष्णिमानं विजानातीति यत्



अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ [गी० १५।१४]

इति स्मरणात्। ततश्च तदात्मकत्वानुसंधानं कर्तव्यमित्यर्थः।

तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे
सꣳस्पर्शेनोष्णिमानं विजानाति।

यदौष्ण्योपलम्भनमित्यर्थः। उपलभ्यमानोष्णस्पर्शस्य जाठराग्निसंबन्धित्वात्तत्स्पर्शसाक्षात्कार एव तत्साक्षात्कार इत्यर्थः।

तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव
नदथुरिवाग्नेरिव ज्वलत उपशृणोति।

पुरुषः नदथुरिव नदथुमिव

यत्र यदा कर्णावङ्गुलिभ्यामपिधाय निनदमिव रथघोषमिव ऋषभकूजितमिव बहिर्ज्वलतोऽग्नेः शब्दमिव शृणोतीति यत्तदेव जाठराग्निश्रवणम्। आन्तरस्य शब्दस्य जाठराग्निसंबन्धित्वात्तच्छब्दश्रवणमेव तच्छ्रवणमित्यर्थः।

तदेतद्दृष्टं च श्रुतं चेत्युपासीत।

तदेतत्परमात्मशरीरभूतं कौक्षेयज्योतिरुक्तरीत्या दृष्टत्वश्रुतत्वाभ्यामुपासीतेत्यर्थः।

तस्य फलमाह—

चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ७ ॥

इति छान्दोग्योपनिषदि तृतीयप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

---

चक्षुष्यत्वमाभिरूप्यम्। चक्षुषे हितमित्यर्थे शरीरावयवाद्यादिति यत्। श्रुतत्वं कीर्तिमत्त्वम्। द्विरुक्तिर्विद्यासमाप्त्यर्था। उक्तः श्रुत्यर्थः सर्वोऽपि ज्योतिरधिकरणे श्रुतप्रकाशिकायां स्पष्टः। एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते। अथ यदतः परो दिवो ज्योतिरिति ज्योतिःशब्दितं प्रसिद्धमग्न्यादिज्योतिरेव कौक्षेयज्योतिष्ट्वाध्यासस्य भौतिकज्योतिष्येवोपपत्तेः। दीप्ते रूपवद्विषयत्वेन नीरूपे परमात्मनि दीप्तिरसंभवात्। चक्षुष्यत्वश्रुतत्वरूपाल्पफलोपासनोपास्यत्वरूपवाक्यशेषश्रुतत्वाधारत्वस्यापि निर्मर्यादे परमात्मन्यसम्भवात्, लोके बिवराच्च। रूपवद्विषयदीप्ति द्युमर्यादत्वाधारत्व ... कौक्षेयज्योतिर ... ध्यास/

दिवः पर इति द्युमर्यादत्वस्यापि निर्मर्यादे परमात्मन्यसम्भवात्, चक्षुष्यत्वश्रुतत्वरूपाल्पफल

लिङ्गानुगृहीतज्योतिःश्रुत्या प्रसिद्धमग्न्यादिज्योतिरेवेहोपदिश्यत इति पूर्वपक्षे प्राप्त उच्यते। 'ज्योतिश्चरणाभिधानात्।' [ब्र० सू० १।१।२४] द्युसंबन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव। 'पादोऽस्य सर्वा भूतानि' इति मन्त्रे द्युसंबन्धिनः सर्वभूतचरणत्वाभिधानात्तस्यैव द्युसंबन्धिन इहापि द्युसंबन्धित्वेन प्रत्यभिज्ञानात्। यच्छब्दस्य सर्वनामत्वेन प्रकृतपरामर्शित्वस्यैव युक्ततया द्युसंबन्धित्वेन प्रकृतत्रिपाद्ब्रह्मपरामर्शस्यैव युक्तत्वात्। फलार्थतया परमात्मन्येव कौक्षेयकज्योतिःशरीरकत्वानुसंधानस्योपपत्तेः। रूपवद्विषयदीप्तिद्युमर्यादत्वलोकाधारत्वादीनामन्तरादित्यविद्यान्यायेन विग्रहविशिष्ट एवोपपत्तेः। भासकत्वप्रवृत्तिनिमित्तकज्योतिःशब्दस्यापि तत्र वृत्तिसंभवाज्ज्योतिःशब्दितः परमपुरुष एव। 'छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम्' [ब्र० सू० १।१।२५]। पूर्वत्र गायत्री वा इदं सर्वमिति गायत्र्याख्यच्छन्दस एव प्रकृतत्वात्तस्यैव 'पादोऽस्य सर्वा भूतानि' इति सर्वभूतचरणत्वाभिधानान्न परब्रह्मणः प्रकृतत्वं येन यच्छब्दश्रुत्या तत्परामर्शः स्यादिति चेन्न। तत्र गायत्रीशब्देन न च्छन्दः परामृश्यते। अपि तु ब्रह्मण एव गायत्रीचेतोर्पणमिह निगम्यते। ब्रह्मणि गायत्रीसादृश्यानुसंधानं फलायोपदिश्यत इत्यर्थः। चतुष्पदश्च ब्रह्मणश्चतुष्पदया गायत्र्या सादृश्यसंभवात्। तथाऽन्यत्रापि सादृश्याच्छन्दोभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते। यथा संवर्गविद्यायामग्निसूर्यजलचन्द्रवायुवाक्चक्षुःश्रोत्रमनःप्राणरूपेषु दशसु दशत्वसंख्यासाम्यात् सैषा विराडन्नादिति च्छन्दोवाचिनो विराट्शब्दस्य प्रयोगो दृष्टः। 'भूतादिपादव्यपदेशोपपत्तेश्चैवम्' [ब्र०सू०१।१।२६]। भूतपृथिवीशरीरहृदयलक्षणपादचतुष्टयवत्त्वस्य सैषा चतुष्पदेति प्रतिपादितस्य च्छन्दोरूपायां गायत्र्यामसंभवाद्गायत्रीशब्देन ब्रह्मैवाभिधीयते। अतो गायत्रीशब्दाभिहितं त्रिपाद्ब्रह्मैव ज्योतिर्वाक्येऽपि यच्छब्दश्रुत्या पूर्वप्रत्यभिज्ञापकद्युसंबधित्वलिङ्गानुगृहीतया प्रतिपाद्यते। 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्' [ब्र० सू० १। १। २७]। पूर्ववाक्ये त्रिपादस्यामृतं दिवीति दिवोऽधिकरणत्वेन निर्देशाज्ज्योतिर्वाक्ये दिवः पर इत्यवधित्वेन निर्देशान्न प्रत्यभिज्ञासंभव इति चेन्न। वृक्षाग्रे वर्तमाने

श्येने वृक्षाग्राच्छ्येनो वृक्षाग्रे श्येन इति पञ्चमीसप्तम्योः प्रयोगदर्शनव- दिहाप्युपपत्तेरिति भाव इति स्थितम् । प्रकृतमनुसरामः ॥ ७ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

---

शाण्डिल्यविद्या प्रस्तूयते—

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ।

जायते इति जं लीयत इति लं जलशब्दौ डप्रत्ययान्तौ । अनिति जीवतीत्यन् । क्विबन्तो विजन्तो वाऽयं शब्दः । तस्य जलान्, तज्जलान् । इतिर्हेत्वर्थः । सर्वशब्दः सर्वशरीरकपरः । इदमित्येतद्ब्रह्मणः सर्वस्य वा विशेषणम् । अतश्च तज्जत्वात्तल्लत्वात्तदनत्वात्सर्वात्मकं ब्रह्मेति शान्तः सन्नुपासीतेत्यर्थः । अत्र तज्जत्वतल्लत्वे स्थूलचिदचिच्छरीरकब्रह्मगते उपा- दानोपादेयभावस्याभिन्ननिष्ठत्वात्तदनुरूपे । तन्नियाम्यत्वं तु न ब्रह्मगतं ब्रह्मणस्तदसंभवात् । अपि तु चिदचिन्मात्रगतमिति द्रष्टव्यम् । भगवता च भाष्यकृता 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेति सर्वोत्पत्तिस्थितिप्रलयकारणत्वेन सर्वस्याऽऽत्मतयाऽनुप्रवेशकृतजीवयितृ- त्वेन च सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधायेति' भाषितम् । व्यासा- र्यैश्च "ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य ।

सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥

इत्युक्तरीत्या रागद्वेषादिरहितः सन्वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थ" इत्युक्तम् । वक्ष्यमाणगुणकं ब्रह्मेति वदतां व्यासार्याणामयमाशयः— सर्वं खल्विति वाक्योक्त सार्वात्म्यं तु नोपास्यगुणः । उत्पत्तिशिष्टसार्वा- त्म्यगुणावरुद्धे मनोमयत्वादिवक्ष्यमाणगुणविधानानुपपत्तिप्रसङ्गात् । न चोपासनोत्पत्तिवाक्यश्रुतस्य सार्वात्म्यस्याविवक्षा कथमभ्युपगम्यत इति वाच्यम् । सर्वं खल्विदं ब्रह्म तज्जलानित्यन्तस्य वाक्यस्य खलुशब्दकृतेन प्रसिद्धवन्निर्देशेनैकवाक्यत्वस्य निवारितत्वात् । न ह्युपासीत खल्विति वचनव्यक्तिर्घटते । अतः सार्वात्म्यस्योपासनोत्पत्तिवाक्यश्रुतत्वाभावेन शान्त उपासीतेति वाक्य उपास्याकाङ्क्षायां पूर्ववाक्यप्रतिपन्नस्य

(१) कथमभ्युपगन्तव्या—इति ग्रन्थाधारपाठः।

ब्रह्मरूपधर्मिमात्रस्यैवोपास्यतयाऽन्वयो न तु सार्वात्म्यविशिष्टस्य। ततश्चोत्पत्तिशिष्टसार्वात्म्यानवरोधान्न वक्ष्यमाणमनोमयत्वादिगुणानन्वयशङ्का । "सर्वात्मकं ब्रह्मोपासीतेति तदर्थनिर्देशकभाष्येऽपि सर्वात्मकत्वं नोपास्यगुणतया निर्दिष्टम् । अपि तूपास्यब्रह्मणः स्वरूपकथनमात्रपरमिति । तच्च सर्वमपि तैः कण्ठत एव वर्णितं च । ननु "ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितः सन्वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थ" इति व्यासार्यैरेवोक्तत्वात्तदेकवाक्यत्वसंभवे तज्जलानितीत्यन्तस्य पृथग्वाक्यकल्पनायोगात् । सार्वात्म्यस्योत्पत्तिवाक्यविहितत्वेऽपि मनोमयत्वादीनामुत्पत्तिशिष्टगुणाविरोधिनामन्वये दोषाभावाच्च वाक्यभेदकल्पनं वा शाण्डिल्यविद्यायां सार्वात्म्यस्यानुपास्यत्वकल्पनं वा व्यर्थमिति चेन्न । उपासीतेत्यन्तेन वाक्यैकवाक्यत्वाभ्युपगमेऽपि प्रकारान्तरेण वाक्यैकवाक्यत्वनिराकरणे दोषाभावात् । शान्तिहेतुतयाऽन्वितस्य सार्वात्म्यस्योपास्यगुणत्वे मानाभावादिति व्यासार्याभिप्रायात् । ननु ब्रह्मणः सर्वात्मकत्वाद्यत्र क्वचित्क्रियमाणस्यापि द्वेषादेरात्मद्वेषपर्यवसन्नत्वेनायुक्तत्वाच्छान्तः सन्नुपासीतेत्युक्ते ब्रह्मोपासीतेति कथमवगम्यते । सर्वं खल्विदं ब्रह्मेत्यस्य शमविध्यर्थवादभूतस्योपास्यसमर्पकत्वाभावादिति चेत्सत्यम् । शमविध्यर्थतया निर्दिष्टस्यापि ब्रह्मण उपास्याकाङ्क्षापूरकत्वस्यापि संभवादन्यार्थतयाऽपि स्ववाक्यनिर्दिष्टं ब्रह्म विहायोपास्यान्तरकल्पनस्यानुचितत्वात्, "मूलतः शाखां परिवास्योपवेषं करोती"त्यत्र मूलत इत्यस्य शाखापरिवासनेऽपादानतयाऽन्वितस्याप्याकाङ्क्षावशेनोपवेषं करोतीत्यनेनाप्यन्वयाभ्युपगमादिति द्रष्टव्यम् ।

१ सार्वात्म्यस्योपास्यत्वे प्रमाणाभावादिति ग्र॰ पाठः

विहितमुपासनं स्तौति—

अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मि-
ल्ँलोके पुरुषो भवति तथेतः प्रेत्य भवति ।

'तं यथा यथोपासते तथैव भवति' इति श्रुत्यन्तरादिह लोके पुरुषो यथाक्रतुर्यथोपासनस्तथैवेतः प्रेत्यामुष्मिल्ँलोके भवति । ततो हेतोः पुरुषः क्रतुमयः क्रतुप्रधान उपासनप्रधान इत्यर्थः । ततश्चोपासनस्यैव हिततमत्वात्सर्वथाऽनुष्ठेयमित्यर्थः ।

एवं विहितं ब्रह्मोपासनं मनोमयत्वादिगुणान्तरविधानायानुवदति—

स क्रतुं कुर्वीत ॥ १ ॥

स उपासकः क्रतुं ब्रह्मण उपासनं कुर्वीतेत्यर्थः ॥ १ ॥

गुणानेवाऽऽह—

मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा ।

मनोमयः परिशुद्धमनोमात्रग्राह्यो विवेकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतमनोमात्रग्राह्य इत्यर्थः। प्राणशरीरः । जगति सर्वेषां प्राणानां धारकः प्राणो यस्य शरीरमाधेयं विधेयं शेषभूतं च स प्राणशरीरः । आधेयत्वविधेयत्वशेषत्वानामेव शरीरशब्दप्रवृत्तिनिमित्तत्वात् । भारूपो भास्वररूपः । 'आदित्यवर्णं तमसः परस्तात्' [श्वे० ३।८] 'पश्यते रुक्मवर्णम्' [मु०३।१।३] इत्यादिवाक्यप्रतिपन्नाप्राकृतस्वासाधारणनिरतिशयकल्याणगुणगणनिरतिशयदीप्तियुक्तविग्रहशालीत्यर्थः । सत्यसंकल्पोऽप्रतिहतसंकल्पः । आकाशात्माऽऽकाशवत्सूक्ष्मस्वच्छस्वरूपः।सकलेतरकारणभूताव्याकृताकाशस्याऽऽत्मभूत इत्याकाशात्मा । स्वयं च प्रकाशतेऽन्यांश्च प्रकाशयतीति वाऽऽकाशात्मा ।

सर्वकर्मा ।

क्रियत इति कर्म सर्वं जगद्यस्य कर्मासौ सर्वकर्मा सर्वा वा क्रिया यस्याऽऽराधनमसौ सर्वकर्मा ।

सर्वकामः ।

काम्यन्त इति कामाः । भोग्यभोगोपकरणादयस्ते परिशुद्धास्तस्य सन्तीत्यर्थः ।

सर्वगन्धः सर्वरसः ।

अशब्दमस्पर्शमित्यादिना प्राकृतगन्धरसादिनिषेधात्प्राकृताः स्वासाधारणा निरवद्या निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः ।

सर्वमिदमभ्यात्तः ।

उक्तं सर्वमिदं कल्याणगुणजातमभ्यात्तः स्वीकृतवान् । भुक्ता ब्राह्मणा इतिवत्कर्तरि क्तप्रत्ययोऽर्शआद्यजन्तो वा ।

अवाकी ।

वाक उक्तिः सोऽस्य नास्तीत्यवाकी ।

कुत इत्यत्राऽऽह—

अनादरः ॥ २ ॥

अवाप्तसमस्तकामत्वेनाऽऽदर्तव्याभावादादररहितः । अत एषावाकी परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत्तृणीकृत्य जोषमासीन इत्यर्थः ॥ २ ॥

एष म आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा ।

मदीये हृदये व्रीह्याद्यपेक्षयाऽणुत्वेनाल्पत्वेनैष परमात्मोपासनार्थमवस्थित इत्यर्थः । तथाऽनुसंधानं कर्तव्यमिति भावः ।

अन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारमनुसंधेयं निर्दिशति—

एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः॥३॥

अन्तर्हृदये विद्यमानोऽपि स्वरूपतो निरतिशयपरिमाण इत्यर्थः ॥ ३॥

सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ।

उक्तोऽर्थः ।

एवंभूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषयाऽस्मद्धृदये संनिहितमित्यनुसंधातव्यमित्याह—

एष म आत्माऽन्तर्हृदय एतद्ब्रह्म ।

यथोपासनमीदृशं परमात्मानमस्माच्छरीरात्समुत्थाय 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तरीत्या देशविशेषविशिष्टं प्राप्तास्मीति निश्चयरूपमनुसंधानं कर्तव्यमित्याह—

एतमितः प्रेत्याभिसंभवितास्मीति ।

अत्रेतीत्यस्य स क्रतुं कुर्वीतेत्यनेनान्वयः । मनोमयः प्राणशरीर इत्यारभ्यैतमितः प्रेत्याभिसंभवितास्मीत्येतत्पर्यन्तोऽनुसंधानप्रकारः । अत्र चेति-

(१) क्रमवाचकस्यैव— एतावान् पाठो ग्रन्थाक्षरकोशे नास्ति।



शब्दनिर्दिष्टो मनोमयत्वादिगुणगतः क्रमविशेष एक एव विधीयते। मनोमयत्वाद्युपास्यगुणानां त्वाक्षेपतो विधानं पृष्ठगतसर्वताविधानादिव पृष्ठानाम्। ततश्च प्राप्तानुवादेन मनोमयत्वाद्यनेकगुणविधाने वाक्यभेद इति शङ्का प्रत्युक्ता। यद्वा विधेयानां बहुत्वेऽपि क्रमरूपविधेयतावच्छेदकैक्यान्न वाक्यभेदः। यदग्नये च प्रजापतये चेति वाक्ये देवतात्वरूपविधेयतावच्छेदकैक्येन वाक्यभेदस्य तान्त्रिकैः परिहृतत्वात्। केचित्तु प्राप्तोपासनानुवादेनाभ्युदयेष्टिवाक्यवत्प्रयोगविधित्वसंभवान्न वाक्यभेद इति वदन्ति।

एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहरति—

यस्य स्यादद्धा न विचिकित्साऽस्ति।

अत्रेतिशब्दोऽध्याहर्तव्यः। अभिसंभवितास्मीतीतिशब्दस्य क्रमवाच(१)कस्यैव काकाक्षिन्यायेन वाऽन्वयः। इति उक्तप्रकारेण यस्योपासकस्याद्धा निश्चयोऽस्ति तस्य प्राप्तौ विचिकित्सा संशयो नास्ति।

उक्तार्थस्य श्रद्धेयत्वसिद्धौ वक्तुराप्तिं दर्शयति—

इति ह स्माऽऽह शाण्डिल्यः शाण्डिल्यः॥ ४॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य
चतुर्दशः खण्डः॥ १४॥

---

द्विरुक्तिर्विद्यासमाप्त्यर्था। अयमर्थः सर्वोऽपि भाष्यश्रुतप्रकाशिकयोः स्पष्टः। एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते। इयं च विद्या समन्वयाध्याये द्वितीयपादे चिन्तिता। तत्र हि सर्वं खल्विदं ब्रह्मेत्यत्र ब्रह्मशब्देन प्रत्यगात्मैव निर्दिश्यते। तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः। सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्। ब्रह्मादिस्तम्बपर्यन्तभावश्च प्रत्यगात्मन एवानाद्यविद्यामूलकर्मविशेषोपाधिक उपपद्यते। परमात्मनो निरस्तसमस्तावद्यस्य समस्तहेयाकरसर्वभावो नोपपद्यते। प्रत्यगात्मन्यपि ब्रह्मशब्दः क्वचित्क्वचित्प्रयुज्यत इदं ब्रह्माऽऽयातीत्यादौ। अत एव परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेर्ब्रह्मत्वं च विद्यते 'स

(१) सार्वात्म्यस्यासंभावितत्वात् — इत्येतावानेव — अतः-शब्दात्पूर्वं पाठः ग्रन्थाक्षरकोशे उपलभ्यते।



चाऽऽनन्त्याय कल्पते ' [श्वे०५।९] इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमितत्वाज्जगज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते। अतो जीव एवात्र संदर्भे प्रतिपाद्यत इति पूर्वपक्ष उच्यते ' सर्वत्र प्रसिद्धोपदेशात् ' [ब्र० सू० १।२।१]। सर्वत्र सर्वस्मिञ्जगति सर्वं खल्विदं ब्रह्मेति तदात्मतया विधीयमानं परं ब्रह्मैव। कुतः। प्रसिद्धोपदेशात्। तज्जत्वतल्लत्वादिना सर्वं खल्विदं ब्रह्मेति प्रसिद्धवदुपदेशात्। यस्माज्जगज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धास्तदेवात्र ब्रह्मेति प्रतीयते। वेदान्तप्रसिद्धत्वं च परब्रह्मण एव। 'यतो वा इमानि भूतानि जायन्ते ' [तै० ३।१] इत्यादिवेदान्तेषु परब्रह्मण एव प्रसिद्धेः। तस्य ब्रह्मादिस्तम्बभावेऽपि प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यसंस्पर्शान्निरस्तसमस्तावद्यत्वस्य नानुपपत्तिः। जीवानां च प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासंभवेन (१) सर्वात्मकत्वस्यासंभावितत्वात्सर्वात्मकत्वमसंभावितमेव। अतः सर्वजगत्कारणत्वप्रयुक्तसर्वात्मकत्वस्य परब्रह्मण्येव संभवात्परमेव ब्रह्मेह वाक्ये प्रतिपाद्यते। ' विवक्षितगुणोपपत्तेश्च ' [ब्र० सू० १।२।३]। विवक्षितानां मनोमयत्वसत्यसंकल्पत्वादिगुणानां परमात्मन्येवोपपत्तेश्च। विवक्षितत्वं तात्पर्यविषयत्वं मनोमयत्वादीनां च। यथाक्रतुरस्मिँल्लोके पुरुषो भवतीति वाक्येन मनोमयत्वादिगुणकोपासनेन तद्गुणकब्रह्मप्राप्तेः फलत्वावेदनेन फलरूपतात्पर्यलिङ्गसद्भावान्मनोमयत्वादीनां तात्पर्यविषयत्वलक्षणं विवक्षितत्वमवसीयते। ' अनुपपत्तेस्तु न शारीरः ' [ब्र० सू० १।२।३] विवक्षितानां गुणानां शारीरेऽनुपपन्नत्वान्न शारीरपरिग्रहशङ्का कार्येत्यर्थः। 'कर्मकर्तृव्यपदेशाच्च' [ब्र० सू० १।२।४] एतमितः प्रेत्याभिसंभवितास्मीति प्राप्यतया परं ब्रह्म व्यपदिश्यते प्राप्ततया च जीवः। अतः प्राप्ता जीवोपासकः। प्राप्यं परं ब्रह्मोपास्यमिति। ' शब्दविशेषात्। ' [ब्र० सू० १।२।५।] एष म आत्माऽन्तर्हृदय इति शारीरः षष्ठ्या निर्दिष्ट उपास्यस्तु प्रथमया। अतो नोपासकस्य जीवस्यैवोपास्यत्वम्। ' स्मृतेश्च ' [ब्र० सू० १।२।६]

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च। [गी० १५।१५]

इति स्मृतिश्लोः
इत्युपास्यं हृदयगतमुपासकाद्भिन्नं परमात्मानं दर्शयति। ' अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ' [ब्र० सू०

१।२।७] अल्पायतनत्वमर्भकौकस्त्वं तद्व्यपदेशोऽल्पत्वव्यपदेशः। एष य आत्माऽन्तर्हृदय इत्यणीयासि हृदयायतने स्थितत्वादणीयान्व्रीहेर्वा यवाद्वेत्यादिना स्वरूपेणाणीयस्त्वव्यपदेशाच्च नायं परमात्माऽपि तु जीव एव परमात्मनोऽल्पायतनत्वाल्पत्वयोरसंभवादिति चेन्न। एवं निचाय्यत्वादल्पायतनत्वाल्पत्वाभ्यां तस्यैवोपास्यत्वसंभवात्। व्योमवच्चेदं ब्रह्म व्यपदिश्यते ज्यायान्पृथिव्या इत्यादिना। अतश्च ज्यायस्त्वे उपाध्यश्रवणाज्ज्यायस्त्वं स्वाभाविकम्। अणीयस्त्व उपाधिश्रवणादणीयस्त्वमौपाधिकमित्यवसीयते। 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्।' [ब्र० सू० १।२।८] परब्रह्मणः शरीरान्तर्वर्तित्वे तन्निमित्तसुखदुःखोपभोगप्रसक्तिर्जीववत्स्यादिति चेन्न। तयोरपहतपाप्मत्वानपहतपाप्मत्वकृतविशेषसद्भावान्न(जीववद्भोगप्रसक्तिरिति स्थितम्। प्रकृतमनुसरामः॥ ४॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य चतुर्दशः खण्डः॥ १४॥

---

पुत्रदीर्घायुष्यफलकं त्रैलोक्यात्मककोशविज्ञानमारभ्यते—

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति।

अन्तरिक्षमुदरं यस्य स तथोक्तः। मध्यवर्तित्वादन्तरिक्षस्योदरत्वम्। कोश इव कोशः कोशसादृश्यात्। भूमिर्बुध्नो मूलं यस्य स भूमिबुध्नः। न जीर्यति न विनश्यति चिरकालावस्थायित्वादिति भावः।

दिशो ह्यस्य स्रक्तयः।

स्रक्तयः कोणा इत्यर्थः।

द्यौरस्योत्तरं बिलम्।

उत्तरं बिलम् ऊर्ध्वं मुखमित्यर्थः। स्पष्टोऽर्थः।

स एष कोशो वसुधानः।

कर्मफलाख्यं वसु धीयतेऽस्मिन्निति वसुधानः।

तस्मिन्विश्वमिदꣳ श्रितम्॥ १॥

कर्मकर्तृफलात्मकं परिदृश्यमानं कृत्स्नमस्मिन्कोशे श्रितम्॥ १॥

तस्य प्राची दिग्जुहूर्नाम सहमाना नाम

दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची ।

स्पष्टोऽर्थः ।

तासां वायुर्वत्सः ।

वायोर्दिक्प्रसूतत्वाद्वत्सत्वम् ।

स य एतमेवं वायुं दिशां वत्सं

वेद न पुत्ररोदꣳ रोदिति ।

दिग्वत्सत्वेन वायूपासकः पुत्रनाशनिमित्तं रोदनं न करोति । पाकं पचतीतिवदयं निर्देशः । रोदमिति णमुलन्तो वा ।

सोऽहमेतमेवं वायुं दिशां वत्सं

वेद मा पुत्ररोदꣳ रुदम् ॥ २ ॥

एतदुपदेष्टाऽहमेवैतदुपासनमनुष्ठाय पुत्ररोदनाभावं फलं प्राप्तवानस्मीत्यर्थः ।

अथ कोशविज्ञानाङ्गभूतान्प्रपदनमन्त्रानाह—

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना ।

अरिष्टमविनाशं कोशं प्रपद्ये । अमुनाऽमुनाऽमुनेति त्रिः पुत्रस्य नाम गृह्णाति । अमुना पुत्रेण हेतुनाऽरिष्टं कोशं प्रपद्य इत्यर्थः । एवमुत्तरत्रापि ।

प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥

स्वोक्तमन्त्रान्स्वयमेव व्याचष्टे—

स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदꣳ

सर्वं भूतं यदिदं किंच तमेव तत्प्रापत्सि ॥ ४ ॥

सोऽहं प्राणं प्रपद्य इति यद्वचनमवोचं तेन वचनेन प्राणात्मकं सर्वं जगत्प्रापत्सि प्रपन्नोऽभवमित्यर्थः ॥ ४ ॥

अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्त-
रिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥

भूः प्रपद्य इत्यस्य त्रीँल्लोकान्प्रपद्य इत्यर्थः ॥ ५ ॥

अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं
प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥
अथ यदवोचँ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजु-
र्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ७ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

दीर्घायुष्ट्वफलकपुरुषविद्या प्रस्तूयते—

पुरुषो वाव यज्ञस्तस्य यानि चतु-
र्विँशतिवर्षाणि तत्प्रातःसवनम् ।

षोडशोत्तरवर्षशतमिते पुरुषायुष आद्यानि चतुर्विंशतिवर्षाणि प्रातःसवनम् ।

तत्र हेतुमाह—

चतुर्विँशत्यक्षरा गायत्री गायत्रं प्रातःसवनम् ।

प्रातःसवनस्य गायत्रीछन्दस्कत्वाद्गायत्रीछन्दसश्चतुर्विंशत्यक्षरात्मकत्वाच्चतुर्विंशतिवर्षे प्रातःसवनत्वाध्यासो युज्यत इति भावः ।

तदस्य वसवोऽन्वायत्ताः ।

अस्योपासकस्य तत्प्रातःसवनं वसवः स्वामित्वेनानुगताः । प्रसिद्धयज्ञे प्रातःसवनस्य वसुस्वामिकत्वादिति भावः ।

प्रसिद्धान्वसून्व्यावर्तयति—

प्राणा वाव वसवः ।

वावशब्दोऽवधारणे ।

प्राणानां वसुत्वे युक्तिमाह—

एते हीदꣳ सर्वं वासयन्ति ॥ १ ॥

शरीराणामशैथिल्यलक्षणवासस्य प्राणाधीनत्वादिति भावः ॥ १ ॥

तं चेदेतस्मिन्वयसि किंचिदुपतपेत् ।

उपतपेत् तं पुरुषविद्यानिष्ठमेतस्मिन्वयसि चतुर्विंशतिवर्षात्मके वयसि किंचिद्रोगादिकं बाधेत चेदित्यर्थः ।

स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यंदिनꣳ सवनमनुसंतनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेति ।

तदेमं मन्त्रं स उपासको ब्रूयात् जपेत् । हे प्राणा वसवो यज्ञरूपस्य ममाधुना प्रातःसवनं प्रवर्तते । इदं प्रवर्तमानं प्रातःसवनं माध्यंदिनसवनेनाविच्छिन्नं कुरुत । प्रातःसवनेशानां प्राणानां वसूनां मध्ये यज्ञोऽहं मा विलोप्सीय लुप्तो मा भूवम् । छान्दसो माङि लुङ्भावः । माशब्दो वा । इति मन्त्रं जपेदित्यर्थः ।

उद्धैव तत ह एत्यगदो भवति ॥ २ ॥

तत उपतापादुदेत्युद्गच्छति । अगदो भवत्यरोगो भवति । एवमुत्तरत्रापि ॥ २ ॥

अथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यंदिनꣳ सवनं चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप्त्रैष्टुभं माध्यंदिनꣳ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदꣳ सर्वꣳ रोदयन्ति ॥ ३ ॥

यौवने इन्द्रियाणामत्यन्तं विषयप्रावण्यजनकतया पुरुषान् रोदयन्तीति रुद्रत्वमुपपन्नमित्यर्थः ॥ ३ ॥

तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा रुद्रा इदं मे माध्यंदिनꣳ सवनं

एतस्मिन्वयसि चतुर्विंशतिवर्षादूर्ध्वमष्टषष्टिवर्षमध्ये इत्यर्थः। प्राणानां रुद्राणां मध्ये माध्यन्दिनसवनेशानां भवतां मध्ये इत्यर्थः॥ ४॥

तृतीयसवनमनुसंतनुतेति माऽहं प्राणानाꣳ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो भवति ॥ ४ ॥

सर्वस्य विषयजातस्यादानात्प्राणानामादित्यत्वमित्यर्थः॥५॥

अथ यान्यष्टाचत्वारिꣳशद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारिꣳशदक्षरा जगती जागतं तृतीयसवनं तदस्याऽऽदित्या अन्वायत्ताः प्राणा वावाऽऽदित्या एते हीदꣳ सर्वमाददते ॥ ५ ॥

एतस्मिन्वयसि अष्टषष्टिवर्षादूर्ध्वं षोडशोत्तरशतवर्षमध्ये इत्यर्थः।

तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसंतनुतेति ।

तृतीयसवनात्मकमायुरासमाप्त्यविच्छिन्नं कुरुतेत्यर्थः ।

माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥

तृतीयसवनस्वामिनां भवतां मध्ये इत्यर्थः॥६॥
स्पष्टोऽर्थः॥ ६ ॥

एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति ।

तदेवं प्रकारेण पुरुषविद्यानिष्ठः
हे रोग स त्वं मे मां किं कस्माद्उपतपसि योऽहं त्वत्कृतेनोपतापेन न प्रैष्यामि न मरिष्याम्यतस्तव श्रमो वृथैवेति । एतत्पुरुषविज्ञानस्वरूपं विद्वानितरपुत्र ऐतरेयो महिदासो नामाऽऽह स्मेत्यर्थः । शुभ्रादित्वादितरशब्दादपत्यार्थे ढक् ।

स ह षोडशं वर्षशतमजीवत् ।

(१)
स महिदासः षोडशं षोडशाधिकं वर्षशतमजीवदित्यर्थः। 'तदस्मिन्नधिकमिति दशान्ताड्डः' इति षोडशशब्दाड्डप्रत्ययः । अतो विद्यायां फलप्रापकत्वनिश्चयवतोऽवश्यं फलप्राप्तिर्भवतीति भावः ।

अन्योऽप्येवंवित्षोडशं वर्षशतं जीवतीत्याह—

(१) षोडश अधिका अस्मिन्निति षोडशम् इति विग्रहः।

प्र ह षोडशं वर्षशतं जीवति य एवं वेद ॥ ७ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य षोडशः खण्डः ॥ १६ ॥

---

स्पष्टोऽर्थः ॥ ७ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य षोडशः खण्डः ॥ १६ ॥

---

तथा पुरुषस्य यज्ञसादृश्यमेव निरूपयति—

स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ॥ १ ॥

अशनायापिपासारत्यभावानां दुःखात्मकत्वेन दीक्षात्वं कल्प्यमित्यर्थः ।

अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति ॥ २ ॥

अशनपानरतीनां पयोव्रतादियुक्तोपसद्वत्सुखरूपत्वादुपसद्रूपत्वम् । उपसद्भिः साम्यमेतीत्यर्थः ॥ २ ॥

अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥

हासादीनां शब्दवत्त्वसाम्यात्स्तुतशस्त्रैः साम्यमेतीत्यर्थः ॥ ३ ॥

अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥

धर्मपुष्टिकरत्वसाम्यादिति भावः ॥ ४ ॥

तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य ।

यतः पुरुषस्यैव यज्ञरूपत्वमत एव यथा यज्ञं करिष्यमाणे पुरुषे देवदत्तः सोमं सोष्यतीति प्रयुञ्जते तथा पुरुषस्योत्पादनानन्तरमसोष्ट सोमं यज्ञदत्त इतिवदसोष्ट माता पुरुषमित्युत्पत्तेः पश्चात्प्रयुञ्जते । ततश्च

पुरुषस्योत्पत्तिप्रतिपादनमेव सोष्यत्यसोष्टेतिशब्दसंबन्धित्वसामान्याद्यज्ञानुष्ठानुलक्षणमुत्पादनमित्यर्थः ।

तन्मरणमेवावभृथः ॥ ५ ॥

समाप्तित्वसाम्यादिति भावः ॥ ५ ॥

तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच ।

घोरनामाऽङ्गिरोगोत्रस्तदेतत्पुरुषयज्ञदर्शनं देवकीपुत्राय कृष्णाय । इतिशब्दोऽध्याहर्तव्यः । तच्छेषभूतं तत्प्रीत्यर्थमित्युक्त्वेत्यनुसंधायोवाचानुष्ठितवानित्यर्थः । वचेर्लक्षणयाऽनुष्ठानार्थत्वम् ।

अपिपास एव स बभूव ।

स घोरनामा भगवच्छेषत्वानुसंधानपूर्वकपुरुषयज्ञोपासनानुष्ठानेन ब्रह्मविद्यां प्राप्यापिपासः मुक्तो बभूवेत्यर्थः । ततश्च षोडशाधिकवर्षशतजीवनफलकस्यापि पुरुषयज्ञदर्शनस्य भगवच्छेषत्वानुसंधानपूर्वकमनुष्ठितस्य ब्रह्मविद्योपयोगित्वमप्यस्तीति भावः ।

(१) स बभूवेत्यस्य स भवतीत्यर्थः । सोऽन्तवेलायामित्यत्र स इत्यस्य य इत्यर्थः । ततश्च योऽन्तवेलायामेतत्त्रयं प्रतिपद्येत सोऽपिपासो भवतीत्युवाचेत्युत्तरत्रान्वयः ।

सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत ।

स भगवच्छेषत्वानुसंधानपूर्वकपुरुषविद्यासाधितचिरायुष्ट्वानुगृहीतब्रह्मविद्यानिष्ठः पुरुषः ।

अक्षितमस्यच्युतमसि प्राणसꣳशितमसीति ।

मरणकाल एतन्मन्त्रत्रयं जपेदित्यर्थः । अक्षितमसि क्षयशून्यमसि । अच्युतमसि स्वरूपस्वभावप्रच्युतिशून्यमसि । प्राणसंशितमसि जगत्प्राणयितृत्वे सति सूक्ष्मतत्त्वमसीति ब्रह्मसंबोधनम् । शो तनूकरण इति हि धातुः ।

तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥

तत्र परब्रह्मविषय एतावृङ्मन्त्रौ भवतः ॥ ६ ॥

आदित्प्रत्नस्य रेतसः ।

तयोर्ऋचोरपमाद्यो मन्त्रः प्रतीकेन गृहीतः । 'आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ।' इति । प्रत्नस्य पुरात-

(१) ऋग्वेदे 'दिवा' इति पाठो दृश्यते । अत्र भाष्ये शाङ्केऽपि 'दिवि' इति पाठो व्याख्यायते ।

नस्य रेतसो जगद्बीजभूतस्याव्यक्तस्याऽऽदिर्भूतं संसारसंतमसनिवारकतया ज्योतिःशब्दितं परं ब्रह्म 'सदा पश्यन्ति सूरयः' इत्युक्तरीत्या नित्यसूरयो वासरं नित्यप्रकाशरूपं सर्वकालं पश्यन्तीत्यर्थः । यज्ज्योतिः 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्युक्तरीत्या भगवल्लोके परत्वेन दीप्यते निरतिशयदीप्तियुक्तविग्रहयुक्तमित्यर्थः ।

उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरꣳ
स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म
ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ ७ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्य सप्तदशः खण्डः ॥ १७ ॥

---

तमसः प्रकृतेः परस्तादुत्तरं ज्योतिः परिपश्यन्तः । उत्तरं स्वो भगवल्लोकं परिपश्यन्तः । अत्र परिपश्यन्त इत्युभयत्र हेत्वर्थे शतृप्रत्ययः । भगवल्लोकस्य तद्गतपरमात्मनश्च दर्शनायेति यावत् । देवत्रा देवेषु देवमनुष्येत्यादिना सप्तम्यन्तात्त्राप्रत्ययः । देवं द्योतमानमुत्तममर्चिरादिपर्वभूतं सूर्यरूपं ज्योतिर्वयमुदगन्म प्राप्ताः स्मेत्यर्थः । द्विरभ्यासो यज्ञकल्पनासमाप्त्यर्थः । एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते गुणोपसंहारपादे तैत्तिरीयके 'तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः । श्रद्धा पत्नी शरीरम् ।' [तै० आर० १० । ६४ ।] इति श्रुतायाः पुरुषविद्यायाः 'पुरुषो वाव यज्ञः' इति च्छान्दोग्याम्नाता पुरुषविद्या न भिन्ना पुरुषविद्येति समाख्यैक्यात्पुरुषसंबन्धिषु यज्ञावयवत्वकल्पनासाम्यान्मरणावभृथत्वसाम्याच्चेति पूर्वपक्ष उच्यते—'पुरुषविद्यायामिव चेतरेषामनाम्नानात् ।' [ब्र० सू० ३ । ३ । २४] उभयत्राऽऽम्नातयोः पुरुषविद्यात्वेऽपि विद्याभेदोऽस्त्येव । कुतः । इतरेषामनाम्नानात् । 'यत्सायं प्रातर्मध्यंदिनं च तानि सवनानि' [तै०आर०१०।६४] इत्यादिना तैत्तिरीयकाम्नातानां छान्दोग्येऽनाम्नानात् । त्रेधाविभक्तपुरुषायुषस्यैव च्छान्दोग्ये सवनत्वेनाऽऽम्नानात्, छान्दोग्यश्रुताशिशिषादिदीक्षादित्वपरिकल्पनस्य तैत्तिरीयकेऽदर्शनात्, यजमानपत्न्यादिपरिकल्पनानां च भिन्नत्वात्, 'छान्दोग्ये पुरुषो वाव यज्ञः' इति श्रुतस्य पुरुषे यज्ञ-

त्वपरिकल्पनस्य तैत्तिरीयकेऽदर्शनाच्च विद्याभेद एव । न च तस्यैवं विदुषो यज्ञस्येत्यत्र षष्ठ्यन्तयोः सामानाधिकरण्याश्रयणेन पुरुषे यज्ञत्वकल्पनं तैत्तिरीयकेऽप्यस्तीति वाच्यम् । पुरुषस्यैव यज्ञत्वे तस्यैव यजमानत्वं विरुद्धं यज्ञत्वयजमानत्वयोरेकस्मिन्विरोधात् । किंच पुरुषे यज्ञत्वकल्पने हि विद्वान्यज्ञ आत्मा यजमान इत्येव वक्तव्यं स्यान्न त्वेकवाक्यतया विदुषो यज्ञस्याऽऽत्मा यजमान इति । अतो विदुषो यज्ञस्येति व्यधिकरणषष्ठ्यौ । विद्वत्संबन्धियज्ञस्येत्यर्थः । ततश्च प्रणव एव विस्वर इति न्यायेन पुरुषस्य यज्ञत्वपरिकल्पनैकरूप्याभावाद्विद्याभेद एव । किंच च्छान्दोग्याम्नातायाः पुरुषविद्यायाः प्र ह षोडशं वर्षशतं जीवतीति षोडशाधिकवर्षशतजीवनं फलत्वेनाऽऽम्नातम् । तैत्तिरीयके तु श्रुतायाः पुरुषविद्यायाः 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति पूर्वानुवाकविहिताया ब्रह्मविद्यायाः 'ब्रह्मणो महिमानमाप्नोति' [ तै० आर०१०।९३।६४ ] इति ब्रह्मप्राप्तिफलिकायाः संनिधौ पठितत्वाद्ब्रह्मविद्याङ्गतया ब्रह्मप्राप्तिफलकत्वमेव । अतः फलसंयोगभेदाच्च पुरुषविद्ययोर्भेद इति सिद्धान्तितम् । प्रकृतमनुसरामः ।

इति छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्य
सप्तदशः खण्डः ॥ १७ ॥

---

अध्यात्मं मनस्यधिदैवतमाकाशे च ब्रह्मदृष्टिरुपदिश्यते—

मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ १ ॥

आदिष्टमुपदिष्टमित्यर्थः ॥ १ ॥

तदेतच्चतुष्पाद्ब्रह्म ।

तदेतन्मनआख्यं ब्रह्म चतुष्पात् ।

कथं मनोरूपस्य ब्रह्मणश्चतुष्पात्त्वमित्यत्राऽऽह—

वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्मम् ।

वागादीनां चतुर्णां मनोनियाम्यत्वान्मनःपादत्वाध्यासो युज्यत इति भावः । इत्यध्यात्मम् उक्तमिति भावः ।

(१) भवन्तीत्यर्थः - इति ग्रन्थान्तर पाठः।



अथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इति।

अथाधिदैवतम्-उच्यत इति शेषः।

अग्न्यादयश्चत्वारो ब्रह्मरूपाकाशस्योदरलग्नाः पादा इव भान्तीत्यर्थः।(१)

उभयमेवाऽऽदिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ २ ॥

स्पष्टोऽर्थः ॥ २ ॥

वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च।

अध्यात्मं ब्रह्मरूपाकाशपादतया तत्

ब्रह्मरूपस्य मनसो वागेव चतुर्थः पादः सोऽधिदैवतंआकाशसंबान्धिनाऽग्निना ज्योतिषा प्रकाशकेन भाति प्रकाशते तपति स्वकार्योत्साही भवतीत्यर्थः। 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' [ऐ० २।४] इत्यग्निदेवताया एव वागधिष्ठातृत्वेन तदधीनप्रकाशप्रवृत्तिकत्वादिति भावः। एवमुत्तरत्रापि द्रष्टव्यम्।

भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥

वितरणविक्रमरूपहेतुभेदात्कीर्तियशसोर्भेदः। ब्रह्मवर्चसं वृत्ताध्ययनसमृद्धिः ॥ ३ ॥

प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥

वायुप्राणयोरैकत्वात् (तत्त्वात्) इति भावः ॥ ४ ॥

चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥

आदित्यस्यैव चक्षुरधिष्ठातृत्वादिति भावः ॥ ५ ॥

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥ ६ ॥

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्याष्टादशः खण्डः ॥ १८ ॥

---

'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' [ऐ० २।४] इति दिग्देवतानां श्रोत्राधिष्ठातृत्वादिति भावः। अवशिष्टस्योक्तोऽर्थः। द्विरुक्तिर्विद्यासमाप्त्यर्था।

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्याष्टादशः खण्डः ॥ १८ ॥

---

पूर्वत्राऽऽदित्यो ब्रह्मणः पाद उक्तः। अथ तस्मिन् सकलब्रह्मदृष्ट्यर्थमिदमारभ्यते—

आदित्यो ब्रह्मेत्यादेशः।

आदित्यो ब्रह्मेत्युपदेशः क्रियत इत्यर्थः।

तस्योपव्याख्यानम्।

क्रियत इति शेषः।

असदेवेदमग्र आसीत्।

इदं जगदग्रेऽसदव्याकृतनामरूपमासीत्।

तत्सदासीत्।

तदव्याकृतनामरूपं जगत्सदासीत्, ईषन्नामरूपकार्याभिमुखमासीत्।

तत्समभवत्।

अल्पतरनामरूपव्याकरणेनाङ्कुरीभूतमिव बीजं क्रमेण स्थूलमभवदित्यर्थः।

तदाण्डं निरवर्तत ।

अण्डं संवृत्तमित्यर्थः । आण्डमिति च्छान्दसो दीर्घः ।

तत्संवत्सरस्य मात्रामशयत ।

संवत्सरस्य मात्रां परिमाणमेकरूपतयाऽशयत स्थितं बभूवेत्यर्थः ।

तन्निरभिद्यत ।

संवत्सरकालादूर्ध्वं तदण्डं निर्भिन्नमभवत् ।

ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥

ते आण्डकपाले । आण्डकपाले रजतं च सुवर्णं चैकैकमभवतामित्यर्थः ॥ १ ॥

तद्यद्रजतꣳ सेयं पृथिवी ।

यद्रजतमयं कपालं तत्पृथिव्याद्युपलक्षितमधोण्डकपालमित्यर्थः ।

यत्सुवर्णं सा द्यौः ।

सुवर्णमयकपालं द्युलोकोपलक्षितमूर्ध्वकपालम् ।

यज्जरायु ते पर्वताः ।

जरायु गर्भपरिवेष्टनम् । अण्डस्य शकलीभावदशायां याः स्थूलगर्भपरिवेष्टनशिरास्ते पर्वता बभूवुरित्यर्थः ।

यदुल्बꣳ स मेघो नीहारः ।

यदुल्बं यत्सूक्ष्मं गर्भपरिवेष्टनं तन्मेघसहितं हिमम् ।

या धमनयस्ता नद्यः ।

धमनयः शिरा इत्यर्थः ।

यद्वास्तेयमुदकꣳ स समुद्रः ॥ २ ॥

वस्तौ भवं वास्तेयम् ॥ २ ॥

अथ यत्तदजायत सोऽसावादित्यः ।

तस्मिन्नण्डे गर्भरूपं यदजायत स आदित्यः ।

तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्त्स-
र्वाणि च भूतानि सर्वे च कामाः ।

तमादित्यं जायमानमनूलूलव उरूरव उरुरवा विस्तीर्णरवा महाध्वनियुक्ता उलूलव इति च्छान्दसं रूपम् । घोषाः शब्दाः स्थावरजङ्गमानि भूतानि च तेषां कामाः काम्यमानाः स्त्रीवस्त्रादयश्चोदतिष्ठन्नुत्थितवन्त इत्यर्थः । सर्वस्याऽऽदित्योदयानन्तरभावित्वादिति भावः ।

तस्मात्तस्योदयं प्रति प्रत्यायतनं प्रति घोषा उलूलवोऽ-
नूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे च कामाः ॥ ३ ॥

तस्मादद्यत्वेऽप्यादित्यस्योदयं प्रति प्रत्यायनमस्तमयं च प्रति उरुरवाः शब्दाश्च भूतानि च कामाश्चोत्पद्यन्त इत्यर्थः । उदयास्तमयवेलायां हि पक्षिघोषादीनां च दर्शनादिति भावः ॥ ३ ॥

स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनꣳ
साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ।

इति च्छान्दोग्योपनिषदि तृतीयप्रपाठकस्यैकोन-
विंशः खण्डः ॥ १९ ॥

---

इति च्छान्दोग्योपनिषदि तृतीयः प्रपाठकः
समाप्तः ॥ ३ ॥

---

हशब्दः प्रसिद्धौ । एनमादित्यब्रह्मोपासकमभ्याशः क्षिप्रं यद्य इत्यर्थः । ये साधवः शोभना घोषास्ते सर्व उप समीप आ च गच्छेयुरागच्छेयुश्च । निम्रेडेरन्सुखं च कुर्युरित्यर्थः । मृड सुखे चेति हि धातुरन्तर्भावितण्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयप्रपाठकस्यै-
कोनविंशः खण्डः ॥ १९ ॥

---

इति च्छान्दोग्योपनिषत्प्रकाशिकायां तृतीयः प्रपाठकः
समाप्तः ॥ ३ ॥

---

संवर्गविद्या प्रस्तूयते विद्यास्तुत्यर्थाऽऽख्यायिका—

जानश्रुतिर्ह पौत्रायणः श्रद्धा-
देयो बहुदायी बहुपाक्य आस।

जनश्रुतस्यापत्यं जानश्रुतिः। हशब्दः प्रसिद्धौ पुत्रस्य पुत्रः पौत्रस्तस्यापत्यं पौत्रायणः। श्रद्धापुरःसरं देयं यस्य स श्रद्धादेयः। अर्थिभ्यो बहु दातुं शीलमस्य स बहुदायी। बह्वस्य गेहेऽन्नं पक्तव्यं यस्य स बहुपाक्यः। एवंगुणसंपन्नो जानश्रुतिः कस्मिंश्चिद्देश आस।

स ह सर्वत आवसथान्मापयांचक्रे
सर्वत एव मेऽन्नमत्स्यन्ति ॥ १ ॥

स ह जानश्रुतिः सर्वत एत्यातिथयो ममान्नं भोक्ष्यन्त इत्यभिप्रायेण सर्वासु दिक्षु ग्रामनगरमार्गारण्यादिषु पान्थानामनाथानां शीतवातवर्षातपनिवारकान्नोदकशयनाच्छादनादिपूर्णाः शालाः कारितवानित्यर्थः ॥ १ ॥

अथ ह हꣳसा निशायामतिपेतुः।

एवं सति कस्यांचिद्रात्रौ केचन महात्मानोऽन्नदानादिगुणैस्तोषिता भूत्वा हंसरूपाः सन्तो राज्ञो दर्शनगोचर आगताः।

तद्धैवꣳ हꣳसो हꣳसमभ्युवाद।

तत्तस्मिन्काले तेषां हंसानां मध्य एकः पृष्ठतो गच्छन्हंसोऽग्रेगामिनं कंचन हंसमुवाच।

भो भोऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रा-
यणस्य समं दिवा ज्योतिराततं तन्मा प्रसा-
ङ्क्षीस्तत्त्वा मा प्रधाक्षीदिति ॥ २ ॥

भो भोऽयीति संबोध्य भल्लाक्ष भल्लाक्षेत्यनेन विपरीतलक्षणया मन्दलोचनेति संभ्रमेण द्विवारं संबोधनम्। समं दिवा। स्वर्गेण समं दिवा दिवसेन समं वाऽस्य राज्ञस्तेजः प्रसृतं तत्तस्मिंस्तेजसि मा प्रसाङ्क्षीर्मा प्रसक्तो भूः। प्रसक्तौ को दोष इत्यत्राऽऽह—तत्त्वा मा प्रधाक्षीदिति। तत्तेजस्त्वां मा दहेदित्यर्थः ॥ २ ॥

(१) पश्चात्पतन् हंसः — इति ग्रन्थान्तरको पाठः।



तमु ह परः प्रत्युवाच ।

एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्य तदसहमान इवापरो हंसः प्रत्युवाच । प्रत्युक्तिमेवाह—

कं वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्वमात्थेति ।

उ इत्यनर्थको निपातः । अरे कं सन्तं केन माहात्म्येन युक्तं सन्तम् एनं जानश्रुतिं प्रति सयुग्वानं सशकटं रैक्वमिव रैक्वं प्रतीवैतत्प्रशंसापरं वचनं ब्रवीषि । रैक्व एव ब्रह्मज्ञो महाप्रभावः । अब्रह्मज्ञस्यास्य किं तेजः किं वा मां दहेदिति भावः ।

एवमुक्तः पश्चाद्द्वितीयहंसः (१) पृच्छति—

यो नु कथꣳ सयुग्वा रैक्व इति ॥ ३ ॥

(यथा सयुग्वा रैक्व इति) य उक्तः स किंप्रकारः ॥ ३ ॥

इतर आह—

यथा कृतायविजितायाधरेऽयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति ।

यथा लोके कृतनामाऽयो द्यूतसमयप्रसिद्धश्चतुरङ्कायस्तत्र विजितं जयो यस्य स कृतायविजितः पुरुषः । अथवा विजितं विजयस्तस्मा इत्यर्थः । तदर्थमितरे त्रिद्व्येकाङ्का अधरे न्यूना अयाः संयन्ति संगच्छन्तेऽन्तर्भवन्ति । चतुरङ्के कृताये एकाङ्कद्व्यङ्कत्र्यङ्कानां शतं सहस्रेषु संभवतीति न्यायेन विद्यमानत्वात्तत्रैवान्तर्भवन्तीत्यतः कृताङ्कविजयिनैकाङ्कादिविजयोऽप्यस्तीति भावः । एवमेव लोके प्रजा यच्छोभनं कर्मानुतिष्ठन्ति तत्सर्वमेनं कृतायस्थानीयं रैक्वमभिसमेति संगच्छते । तत्कर्मणि सकलं शोभनं कर्मान्तर्गतमिति यावत् ।

यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ४ ॥

स रैक्वो यद्वेद तदेवान्योऽपि यः कश्चिद्वेद तज्ज्ञातमेवान्ये जानन्ति । तज्ज्ञाने सर्वं ज्ञानमन्तर्गतमित्यर्थः । स तादृशो रैक्वो मयैतादिदानीं सयुग्वानमिव रैक्वमात्थेत्युक्त इत्यर्थः । वेदान्ताचार्यैस्तत्त्वटीकायामस्यार्थस्य प्रतिपादितत्वात् । उक्तं च भगवता भाष्यकृता—लोके यत्किंचित्साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं विज्ञानं तदुभयं यदीयज्ञानकर्मान्तर्गतं

स रैक्क इत्याहेति। यदपि व्यासार्यैर्लघुसिद्धान्ते 'आवृत्तिरसकृदुपदेशात्।' [ब्र० सू० ४।१।१।] इत्यत्र यस्तद्वेद-यो वेदिता, यत्स वेद-यद्वेद्यं, स मयैतदुक्तं स वेदिता रैक्क एतत्तद्वेद्यं ब्रह्मेत्येतदुभयं मयोक्तं तव मयोपदिष्टमित्यर्थ इत्युक्तं तदप्येतत्परं द्रष्टव्यं न तु प्रतीयमानार्थपरम्। यस्तद्वेद यत्स वेदेति वाक्यात् प्राचीने "यथा कृतायविजितायाधरेऽयाः संयन्त्येवमेनं सर्वं तदभिसमेति। यत्किंच प्रजाः साधु कुर्वन्ती"ति वाक्ये ब्रह्मप्रसक्तेरेवाभावेन वेदिता वेद्यं च तवोपदिष्टमित्यस्यार्थस्यासंभवेन यस्तद्वेद यत्स वेदेति वाक्येन प्रतिपादनासंभवाद्भाष्यविरोधाच्चेत्यपि द्रष्टव्यम्। केचित्तु भगवता भाष्यकृता लघुसिद्धान्तभाष्ये यस्तद्वेद यत्सवेद स मयैतदुक्तमित्यत्रेत्येतद्वाक्यप्रतीकस्य धृतत्वात्तदनुरोधेन व्यासार्यैः स मयैतदुक्तमिति नपुंसकान्तपाठस्य गृहीततया तत्र नपुंसकस्योक्तशब्दस्य स इति पुंलिङ्गतच्छब्दविशेषणत्वायोगाद्यस्तद्वेद यत्स वेदेति पुंनपुंसकान्तयच्छब्दद्वयनिर्दिष्टयोर्वेत्तृवेद्ययोः स मयैतदुक्तमित्यत्र क्रमेण प्रतिनिर्देशकयोः स एतदिति पुंनपुंसकसर्वनामशब्दयोः श्रवणेन स वेदितैतद्वेद्यं परं ब्रह्मेत्येतदुभयं मयोक्तमित्यर्थस्यैव वाक्यस्वारस्यलभ्यत्वाच्च स एवार्थो युक्त इति व्यासार्याभिप्रायः। न चात्रोदाहृतभाष्यविरोधः। 'प्रकाशश्च कर्मण्यभ्यासात्' [ब्र० सू० ३।२।२५] इति सूत्रे

वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः॥

इति मनुस्मृतौ च मनोव्यापारात्मके वेदने कर्मशब्दप्रयोगदर्शनेन यत्किंच प्रजाः साधु कुर्वन्तीत्यनेनैव सर्वप्रजानुष्ठितसाधुकर्मण इव सर्वचेतनगतज्ञानस्यापि ग्रहणं संभवतीत्यभिप्रायेणैव तत्र भाष्ये यत्किंचित्साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं विज्ञानमिति कर्मापेक्षया ज्ञानस्य पृथङ्निर्देशात्। अत एव पूर्ववाक्ये ब्रह्मप्रसक्तिरेव नास्तीत्यपि प्रत्युक्तम्। सर्वप्रजानुष्ठितसाधुकर्मणः सर्वचेतनगतज्ञानस्य च रैक्कज्ञानकर्मणोः स्वरूपेणान्तर्भावस्य दुरुपपादतया कृतायाधरायदृष्टान्तस्वारस्येन च रैक्कवेदनविषये तत्कर्मोद्देश्यभूते च सविभूतिकब्रह्मणि सर्वप्रजानुष्ठितकर्मोद्देश्यसर्वचेतनगतज्ञानविषययोरन्तर्भावस्यैव वक्तव्यत्वेन पूर्ववाक्ये ब्रह्मप्रसक्तेरावश्यकत्वात्। तत्त्वटीकाग्रन्थस्तु स मयैतदुक्त इति पुंलिङ्गान्तपाठे च सति तन्निर्वाहमात्राभिप्रायः। अतो व्यासार्य-

प्रतिपादितार्थ एव भगवद्भाष्यकृदभिमत इति न काऽप्यनुपपत्तिरित्याहुः ॥ ४ ॥

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव ।

तद्ब्रह्मज्ञानविधुरतयाऽऽत्मनिन्दागर्भं तद्वत्तया च रैक्वप्रशंसारूपं वाक्यं स राजा शुश्राव ।

स ह संजिहान एव क्षत्तारमुवाच ।

स कथमपि निशामतिवाह्य संजिहान एव तल्पं त्यजन्नेव क्षत्तारं वक्ष्यमाणमुक्तवान् ।

वैश्याद्ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते ।
जीविकावृत्तिरेतस्य राजान्तःपुररक्षणम् ॥

इत्युक्तरीत्या राज्ञोऽन्तःपुररक्षकः प्रतिलोमजातिविशेषः क्षत्ता ।

अङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो
नु कथꣳ सयुग्वा रैक्व इति ॥ ५ ॥

यथा कृतायविजितायाधरेऽयाः संयन्त्येवमेनꣳ सर्वं
तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति
यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥

ह अरेऽङ्ग वत्सेति तं क्षत्तारं राजा संबोध्य रात्रावेवं हंसयोः संलापः समजनीति सयुग्वानमिव रैक्वमात्थेत्यादि हंसोक्तिप्रत्युक्तिवाक्यानुवादपूर्वकं रैक्वस्य चिह्नमुक्तवानित्यर्थः ॥ ५ ॥ ६ ॥

स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय ।

स च क्षत्ता शकटलक्षणरैक्वचिह्नमनुस्मरन्ग्रामनगरादिकमन्विष्य नाज्ञासिषमिति प्रत्यागतवान् ।

तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्छेति ॥ ७ ॥

अरे ब्राह्मणस्य ब्रह्मविदो यत्र विविक्तेषु नदीपुलिनारण्यादिषु मार्गणं युक्तं तत्र गत्वैनमर्छ रैक्वं प्राप्नुहि मार्गणं कुर्वित्युवाचेत्यर्थः ॥ ७ ॥

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश ।

अथ पुनः स क्षत्ता गत्वा विजने कस्मिंश्चिद्देशे शकटस्याधस्तात्पामानं कण्डूयमानं रैक्कमेत्य दृष्ट्वा समीपे गत्वा विनयेनोपविष्टवान् ।

तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्क इत्यहꣳ ह्यरा इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

हे भगवंस्त्वं वा रैक्क इति पृष्टो रैक्कोऽहमेवेति प्रत्युवाच तच्छ्रुत्वाऽज्ञासिषमिति प्रत्यागतः ॥ ८ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

तदु ह जानश्रुतिः पौत्रायणः षट्शतानि
गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे ।

उ हेत्यनर्थको निपातः । तत्तत्र जानश्रुतिर्गवां षट्शतानि निष्कं कण्ठाभरणमश्वतरीयुक्तरथं तदा गृहीत्वा रैक्कं प्रति गतवान् ।

तꣳ हाभ्युवाद ॥ १ ॥

गत्वा च राजा तं रैक्कमित्युवाचेत्यर्थः ॥ १ ॥

रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति ॥ २ ॥

हे रैक्वैतत्सर्वमानीतं तद्गृहाण त्वं यां देवतामुपास्से तां देवतां मेऽनुशाधि विविच्य ज्ञापयेति प्रार्थयामास ॥ २ ॥

तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्तु ।

अहेत्याश्चर्ये । योगमहिमविदितलोकत्रयो ज्ञानश्रुतिर्ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतां तदनन्तरमेव ब्रह्मजि-

ज्ञासयोद्योगं च विदित्वाऽस्य ब्रह्मविद्यायोग्यतामभिज्ञाय सत्यामपि योग्यतायां चिरकालसेवां विनाऽर्थप्रदानेन शुश्रूषमाणस्य यावच्छक्तिप्रदानेन विना ब्रह्मविद्या प्रतिष्ठिता न भवतीति मत्वा तमनुगृह्णन्नस्य शोकाविष्टतामुपदेशयोग्यताख्यायिकां ब्रह्मजिज्ञासादार्ढ्यसिध्यर्थं स्वयोगमहिमसाक्षात्कृतसकलवृत्तान्तत्वलक्षणस्वमहिमानं च शोचितृत्वप्रवृत्तिनिमित्तकशूद्रशब्दामन्त्रणेन ख्यापयन्हारेत्वा हारसहित इत्वा रथोऽश्वतरीरथस्तेनैव गोभिः सहास्तु कलत्रहीनस्य ग्रामगृहादिशून्यस्य मम गोरथादिरक्षणे का शक्तिः । मत्प्रयोजनापर्यवसाय्यल्पधनदानेन च कथं तव ब्रह्मविद्या प्रतिष्ठिता भवेदित्युवाचेत्यर्थः । स्फायितं चेत्यादिना रक्प्रकरणे पठितेन शुचेर्दश्चेति सूत्रेण रक्प्रत्यये शुचेश्चकारस्य दकारे, अमितम्योर्दीर्घश्चेति पूर्वसूत्रानुवृत्तेन धातोरुकारस्य दीर्घादेशेन च शूद्रशब्दो निष्पन्नो भवति ।

तदु ह पुनरेव जानश्रुतिः पौत्रायणः
सहस्रं गवां निष्कमश्वतरीरथं दुहि-
तरं तदादाय प्रतिचक्रमे ॥ ३ ॥
तꣳ हाभ्युवाद रैक्वेदꣳ सहस्रं गवामयं
निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो
यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥४॥

तदभिप्रायं जानन्नधिकं गवां सहस्रं रैक्वस्य परिणयार्थं स्वकन्यामावासार्थं तत्रत्यं ग्रामं चोपाजहारेत्यर्थः ॥ ३ ॥

स्वोपहृतं सर्वं समर्प्य मामनुशाध्येव न प्रत्याख्याहीति प्रार्थयामासेत्यर्थः । यस्मिन्ग्रामे त्वमास्से निवसिष्यासि सोऽयं तव वासार्थो ग्राम इत्यन्वयः ॥ ४ ॥

(१) तस्या ह मुखमुपोद्गृह्णन्नुवाच ।

तस्यो मुखमुपायनरूपापोयमङ्गीकुर्वन्नुक्तवानित्यर्थः ।

आजहारेमाः शूद्रानेनैव मुखेनाऽऽलापयिष्यथा इति ।

इमा दक्षिणा आजहर्थ, आजहारेति व्यत्ययश्छान्दसः । अनेनैव मुखेनोपायेन मां ब्रह्मोपदेशरूपं वाक्यमालापयिष्यसे ब्रह्मविद्योपदेष्टारं

१ अयं पाठो विषयवाक्यदीपिकायामुपलभ्यते। ग्रन्थान्तरे कोशे तु 'मुखं उपायनरूपोपायं तस्य जानश्रुतिसम्बन्धिनं उपोद्गृह्णन् अङ्गीकुर्वन् उक्तवानित्यर्थः।' इति पाठो दृश्यते।

करिष्यसीत्यर्थः । 'थासः से' इत्येतदभावश्छान्दसः । पुनरपि शूद्रेतिसंबोधनस्य पूर्ववदेव प्रयोजनम् । अत्र शूद्रशब्दस्य न रूढ्या वर्णविशेषोऽर्थः । चतुर्थवर्णस्य ब्रह्मविद्यायामनधिकारादिति द्रष्टव्यम् ।

ते हैते रैक्कपर्णा नाम महावृषेषु यत्रास्मा उवास ।

यत्र ग्रामेषु रैक्क उवास ते महावृषाख्यदेशेषु रैक्कपर्णा इति प्रसिद्धास्तान्ग्रामांश्चास्मै ददावित्यर्थः ।

तस्मै होवाच ॥ ५ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
द्वितीयः खण्डः ॥ २ ॥

---

तत्सर्वं दत्तवते जानश्रुतये रैक्कः स्वोपास्यां देवतामुपदिदेशेत्यर्थः ॥५॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य
द्वितीयः खण्डः ॥ २ ॥

---

उपदेशमेवाह—

वायुर्वाव संवर्गः ।

संवर्जननामगुणयोगाद्वायुरेव संवर्गः । संवर्जनं संग्रहणमेकीकृत्य ग्रहणमित्यर्थः । संवर्गत्वगुणको वायुर्ध्येय इति यावत् ।

संवर्गत्वमेवोपपादयति—

यदा वा अग्निरुद्वायति वायुमेवाप्येति
यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा
चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥

उद्वायत्युद्वासनं प्राप्नोति विनश्यतीत्यर्थः । शिष्टं स्पष्टम् ॥ १ ॥

यदाऽऽप उच्छुष्यन्ति वायुमेवापि-
यन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्ते ।

अग्निसूर्यचन्द्राणां तेजोरूपाणां जलस्य च लये वायावेकीभावाद्वायुः संवर्ग इत्यर्थः । प्रक्रमे हि 'एनं सर्वं तदभिसमेति' इत्यादिब्रह्मविद्याप्रशंसावगमाद्वक्ष्यमाणलिङ्गानुपपत्तेश्च वायुशब्देन वायुशरीरकः परमात्मोच्यते । संवृङ्क्ते एकीकृत्य गृह्णातीत्यर्थः ।

(१) विषयवाक्यदीपिकायामेवमेव पाठः। ग्रन्थान्तरभाष्यकोशे तु - तथा प्राणः संवर्ग इत्याह - इति पाठो दृश्यते।



इत्यधिदैवतम् ॥ २ ॥

एवं देवेषु संवर्गोऽयमित्यर्थः ॥ २ ॥

(१) अध्यात्मं प्राणः संवर्ग इत्याह—

अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति ।

स पुरुषो यदा यस्मिन्काले स्वपितीत्यर्थः ।

तदा— प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति ॥ ३ ॥

प्राणे वाक्चक्षुःश्रोत्रमनसामेकीभावात्प्राणं संवर्गमुपासीतेत्यर्थः। अत्रापि प्राणशब्दस्तच्छरीरकपरमात्मपरो द्रष्टव्यः ॥ ३ ॥

उक्तमर्थमुपसंहरति—

तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

संवर्गविद्यास्तुत्यर्थमाख्यायिकेयमारभ्यते—

अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे ।

कपिगोत्रं शुनकपुत्रं च कक्षसेनसुतमभिप्रतारिनामानं च तौ द्वौ सूपकारैः परिविष्यमाणौ भोजनायोपविष्टौ कश्चित्संवर्गोपासको ब्रह्मचारी भिक्षितवान् ।

तस्मा उ ह न ददतुः ॥ ५ ॥

अयं ब्रह्मचारी संवर्गविद्यानिष्ठो दुरभिमानी यद्वक्ष्यति तच्छ्रोष्याव इति बुद्ध्या भिक्षां न दत्तवन्तौ ॥ ५ ॥

स होवाच ।

स ब्रह्मचार्युवाच ।

महात्मनश्चतुरो देव एकः कः स जगार
भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति
मर्त्या अभिप्रतारिन्बहुधा वसन्तम् ।

अधिदैवतं महात्मनोऽग्न्यादित्यचन्द्रजलरूपान् । अध्यात्मं वाक्चक्षुःश्रोत्रमनोरूपांश्चतुरश्चतुःसंख्याकान्देवान्सर्वलोकस्य गोप्ता स एक एव देवो वायुप्राणरूपी कः प्रजापतिर्जगार संहृतवान् । हे कापेयाभिप्रतारिणावेवंभूतं प्रजापतिं बहुरूपतया वसन्तं मर्त्या मरणधर्माणोऽविद्यामोहिताः सन्तो न जानन्तीत्यर्थः । गोपा गुपू रक्षणेऽसुप्रत्ययान्तः ।

यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥

जगत्सर्वं यस्मै यस्य संवर्गस्य प्रजापतेरन्नं तस्मै भिक्षमाणाय मह्यमन्नं न दत्तम् । अतः केऽपि न जानन्तीत्युपासनादार्ढ्यायत्तोपास्यैक्यबुद्ध्या भिक्षमाणाय स्वस्मा अप्रदानमेव स्वोपास्यदेवताया अप्रदानं मत्वा तस्मा एतन्न दत्तमिति तौ निन्दितवानित्यर्थः ॥ ६ ॥

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयाय ।

कापेयः शौनकस्तद्ब्रह्मचारिणोक्तं प्रतिमन्वानो मनसाऽऽलोचयंस्तत्समीपं प्रत्यागत्योवाच ।

आत्मा देवानां जनिता प्रजानाꣳ हिरण्यदꣳ-
ष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरन-
द्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्ने-
दमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥

देवानां नियन्ता प्रजानामुत्पादकः कमनीयदंष्ट्रायुक्तो हिरण्यविदारकदंष्ट्रायुक्त इति वा । बभसो भक्षणशीलोऽसुरसंहारक इति यावत् । असूरिरविपश्चिन्न भवतीत्यनसूरिर्विपश्चिदिति यावत् । अस्य च नृसिंहस्य परमात्मनो महिमानं महान्तमाहुः । यत्स्वयमन्यैरनद्यमानोऽनाश्यमानोऽनन्नं वागादिकं नाशयत्येवंभूतः परमात्मैव संवर्गो न त्वदुक्तः प्रजापतिरित्यर्थः । अतो वयं न त्वदुक्तं प्रजापतिरूपं संवर्गमुपास्महे । अपि तु परमात्मानमेव । अतस्त्वं संवर्गं यथावन्न जानासीत्युक्त्वाऽस्मै भिक्षां प्रयच्छतेति परिचारकानाहतुरित्यर्थः । अनेन संवर्गविद्याया वायुप्राणशरीरकपरत्वमाविष्कृतं भवति ॥ ७ ॥

तस्मा उ ह ददुः ।

तस्मै ब्रह्मचारिणे परिचारका भिक्षां ददुरित्यर्थः ।

संवर्गविद्यास्तुतये तत्संबन्धिपदार्थान्कृतायत्वेन विराट्त्वेनान्नत्वेनान्नादित्वेन च स्तौति—

ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम् ।

अधिदैवतमग्न्यादित्यचन्द्रजलरूपाः पदार्था अपियन्तश्चत्वारोऽपीयमानो वायुरेक इति पञ्च । अध्यात्मं वागाद्या अपियन्तश्चत्वारोऽपीयमानः प्राण एक इति पञ्च । आहत्य दशत्वसंख्यामाप्ताः कृतायतां भजन्ते । कृतसंज्ञके तस्मिन्नये चतुरङ्कायत्र्यङ्कायद्व्यङ्कायैकाङ्कायानामनुप्रविष्टतया दशाङ्कत्वम् । एकस्य द्वयोस्त्रयाणां चतुर्णां च समावेशे दशत्वसंख्यासंभवादिति भावः ।

तस्मात्सर्वासु दिक्ष्वन्नमेव दशकृतम् ।

तस्माद्धेतोः संवर्गविद्योपास्यं दशत्वसंख्यायुक्ततया कृतायरूपं सद्दशसु दिक्षु विद्यमानमन्नमेव भवति । 'दशाक्षरा विराट्' 'अन्नं विराट्' इति श्रुतेः ।

सैषा विराडन्नादी ।

दशत्वसंख्याश्रयत्वाद्दशाक्षरा विराडिति विराट्छन्दो भवति । अन्नमत्तीत्यन्नादी । कृतसंज्ञकेऽये दशसंख्याया भक्ष्यवदन्तर्भूतत्वाद्दशत्वसंख्यायाश्च विराट्त्वाद्विराजश्चान्नत्वात् दशसंख्यागर्भकृतायस्थानीयसंवर्गविद्योपास्यस्यान्नादित्वमप्यस्तीत्यर्थः ।

तयेदꣳ सर्वं दृष्टम् ।

तया विराजोपासितया इदं सर्वं दशदिग्वर्तिपदार्थजातं दशत्वसंख्यासाम्याद्दृष्टं भवत्युपासितं भवतीत्यर्थः ।

तदुपासनस्य फलमाह—

सर्वमस्येदं दृष्टं भवत्यन्नादो भवति
य एवं वेद य एवं वेद ॥ ८ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

एतदुपासकस्य सार्वज्ञ्यं ब्रह्मलक्षणान्नानुभवश्च भवतीत्यर्थः । विद्यासमाप्तिद्योतकं द्विर्वचनम् । व्यासार्यैस्तु 'छन्दोभिधानात्' [ब्र०सू० १।१।२५] इति सूत्रेऽन्नादिति पाठमाश्रित्यान्नं च तदत्तीत्यन्नादिति भोक्तृत्वभोग्यत्वाश्रयपरमात्मपरतया व्याख्यातम् । अस्याः संवर्गविद्यायाः परमात्मपरत्वमेव न प्रसिद्धवायुप्राणविषयत्वम् । 'यथा कृतायविजितायाधरेऽयाः संयन्ति' इत्यादिना संवर्गविद्यानिष्ठरैक्वप्रभावे सर्वेषामन्तर्भाववर्णनात् । 'आत्मा देवानां जनिता प्रजानाꣳ हिरण्यदꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति' इतराविनाश्यत्वे सति सकलविनाशकत्वसर्वसंप्रतिपन्नमहामहिमशालित्वसर्वदेवनियन्तृत्वब्रह्मादिसकलप्रजोत्पादकत्वहिरण्यदंष्ट्रत्वाद्युपलक्षितनृसिंहविग्रहत्वादिप्रतिपादनात् । 'वै वयं ब्रह्मचारिन्निदमुपास्महे' इति कशाब्दितप्रजापत्यात्मकसंवर्गप्रत्याख्यानाच्च परमात्मविषयैवेयं विद्येति द्रष्टव्यम् । एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते समन्वयाध्याये । जानश्रुतिं शूद्रेत्यामन्त्र्य रैक्वो ब्रह्मविद्यामुपदिदेशेति संवर्गविद्यायां श्रवणाद्विदुरादीनां ब्रह्मनिष्ठानामपि दर्शनादग्निविद्यासाध्ययज्ञादिष्वग्निविद्याशून्यानां शूद्राणां कर्मकाण्डापशूद्राधिकरणन्यायेनाधिकाराभावेऽपि ब्रह्मोपासनेऽधिकारः संभवत्येव । न च शूद्रस्य ब्रह्मोपासनोपयुक्तज्ञानासंभवः शङ्कनीयः । इतिहासपुराणादिना तज्ज्ञानसंभवात् । न चैवं यज्ञादिष्वपि तथा प्रसङ्गः । अन्यभावात् । "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" [तै० सं०७।१।१।६] इति यज्ञानुष्ठानस्य निषिद्धतया च तस्य तदसंभवेऽपि संवर्गविद्यागतशूद्रशब्दामन्त्रणलिङ्गानुग्रहाद्ब्रह्मोपासनाधिकारोऽङ्गीकर्तव्य एवेति पूर्वपक्षे प्राप्त उच्यते—'शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि' [ब्र० सू०१।३।३४] शोचितृत्वप्रवृत्तिनिमित्तकेन शूद्रशब्देन जानश्रुतेः 'कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्वमात्थ' इति हंसोक्तानादरगर्भवाक्यश्रवणात्तदाद्रवणहेतुभूतानुत्पन्ना शुक्सूच्यते । न चतुर्थवर्णत्वं यौगिकार्थस्य प्रकृतस्य मानान्तराविरुद्धस्य ग्रहणसंभवे मानान्तरविरुद्धस्य रूढ्यर्थस्याग्राह्यत्वाच्छूद्रस्य ब्रह्मोपासनौपयिकवैदुष्यलक्षणसामर्थ्यासंभवाच्च न ब्रह्मविद्यायामधिकारः । वैदिकविधीनामध्ययनविधिलब्धवेदजन्यज्ञानवत्त्रैवर्णिकाधिकारिणः अहाद्यनिवृत्तानां शूद्राधिकारानाक्षेपकत्वादिति न्यायस्य यज्ञोपासनयोरविशेषात् । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' [तै० सं० ७।१।१।६] इत्यस्य

न्यायसिद्धैकदेशत्वानुवादित्वेन तस्य विनिगमकत्वासंभवात्। 'क्षत्रियत्वगतेश्च' [ब्र० सू० १।३।३५]। पक्वान्नप्रदत्वक्षत्तृप्रेषणरैक्वकन्याप्रदानानेकग्रामदानादिना जानश्रुतेः क्षत्रियत्वावगतेश्च। एतेषां क्षत्रियधर्मत्वस्यैव शास्त्रीयत्वात्। 'उत्तरत्र चैत्ररथेन लिङ्गात्' [ब्र० सू० १।३।३५]। संवर्गविद्यासंबन्धिनोऽभिप्रतारिनाम्नश्चैत्ररथवंश्यस्य क्षत्रियस्य तादृशेन ब्राह्मणेन शौनकेन कापेयेन साहचर्यदर्शनादिहापि संवर्गविद्यासंबन्धिरैक्वेण ब्राह्मणेन सहचरितजानश्रुतिरपि क्षत्रिय एवेत्यवसोयते। नन्वभिप्रतारिणः क्षत्रियत्वं कुत इति चेत्, चित्ररथवंश्यत्वात्। नच तदपि कुतोऽवगतमिति वाच्यम्। कापेययाज्यत्वाल्लिङ्गात्। न च कापेययाज्यत्वे चित्ररथवंश्यत्वं कुत इति वाच्यम्। 'एतेन वै चित्ररथं कापेया अयाजयन्' [ताण्ड्यब्रा० २०।१२।५।] इति च्छन्दोगब्राह्मणे चित्ररथस्य कापेययाज्यत्वश्रवणात्। नन्वभिप्रतारिणः कापेययाज्यत्वं वा कुतोऽवसीयते। 'शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' [छा० ४।३।५।] इत्येकपङ्क्त्युपवेशमात्रस्य श्रवणात्। नानादेशागतानां परस्परसंबन्धशून्यानामप्येकपङ्क्त्युपवेशसंभवात्। अस्तु वा कथंचिद्याज्ययाजकभावः। तावता छन्दोगब्राह्मणे चित्ररथस्य कापेययाज्यत्वश्रवणेन चित्ररथत्वमेव सिध्येन्न तु तद्वंश्यत्वमिति चेदुच्यते। कापेयाभिप्रतारिणोः क्लृप्तसंबन्धयोरेकपङ्क्त्युपवेशस्योचितत्वात्कापेयानां चित्ररथवंश्यानां च याज्ययाजकभावसंबन्धस्यान्यत्र प्रसिद्धत्वादभिप्रतार्यपि कापेययाज्यचित्ररथवंश्य इत्येवावसीयते। न च कापेययाज्यतया चित्ररथत्वमेवास्त्विति शङ्क्यम्। अभिप्रतारिसंज्ञावरुद्धे चित्ररथसंज्ञानिवेशासंभवान्नायं चित्ररथः, अपि तु तद्वंश्यः समानान्वयानां याज्ययाजकभावस्य लोकवेदप्रसिद्धत्वात्। न च कापेययाज्यस्य चित्ररथस्य क्षत्रियत्वे किं प्रमाणमिति वाच्यम्। 'एतेन वै चित्ररथं कापेया अयाजयंस्तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत' इति चित्ररथोत्पन्नस्य क्षत्रियत्वावेदनात्। ततश्चोत्तरत्र ब्राह्मणक्षत्रिययोः शौनकाभिप्रतारिणोः संवर्गविद्यासंबन्धश्रवणादिहापि तद्विद्यासंबन्धिनो रैक्वजानश्रुत्योर्ब्राह्मण[redacted] क्षत्रियत्वमवसीयते। 'संस्कारपरामर्शात्तदभावाभिलापाच्च' [ब्र० सू० १।३।३६]। ब्रह्मविद्योपदेशप्रदेशेषु 'उप त्वा नेष्ये न सत्यादगा इति' [छा० ४।४।५] 'तं होपनिन्ये' [शत० ब्रा० ११।५।३।१३] 'अधीहि

भगव इति होपससाद सनत्कुमारं नारदः ' [छा० ७।१।१] ' समित्पाणयो भगवन्तं पिप्पलादमुपपन्नाः ' [ प्र० १।१।१ ] इति संस्कारः परामृश्यते । शूद्रस्य संस्काराभावोऽभिलप्यते—

शूद्रश्चतुर्थो वर्ण एकजातिः [ म० १०।४ ]।

न शूद्रे पातकं किंचिन्न च संस्कारमर्हति [ म० १०।१२६ ] इति।

तदभावनिर्धारणे च प्रवृत्तेः [ब्र० १।३।३७]। शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेशाय प्रवृत्तिर्दृश्यते। 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगाः' [छा० ४।४।५] इति। 'श्रवणाध्ययनार्थप्रतिषेधात्' [ब्र०सू०१।३।३८] 'पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम् ' [ वा० धर्म० १८ । ११ ] इति श्रुतस्माच्छूद्रस्य वेदश्रवणप्रतिषेधेन तदध्ययनतदर्थानुष्ठानयोः सुतरां प्रतिषेधात् । ' स्मृतेश्च ' [ ब्र० सू० १ । ३ । ३८ ] ' अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाछेदो धारणे शरीरच्छेदः ' [ गौ० ध० १२ । ५ । ६ ] इति स्मृत्या च श्रवणादिकं शूद्रस्य प्रतिषिद्धम् । अतो न ब्रह्मविद्यायां शूद्रस्याधिकारः । विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोषाज्ज्ञानवन्तः । प्रारब्धकर्मवशाच्चेदृशजन्मयोग इति तेषां ब्रह्मनिष्ठत्वम् । ननु शूद्राणां ब्रह्मोपासनानधिकारे श्रीपञ्चरात्राद्यागमोक्ततान्त्रिकमन्त्रानुसंधानपूर्वकब्रह्मोपासनेऽप्यधिकारो न स्यात् । नारदस्य शूद्रजन्मनि महर्षिवचनादनुष्ठितमच्युतोपासनमप्यप्रामाणिकं स्यादिति चेत् । न हि ब्रह्मोपासनमात्रे शूद्रस्यानधिकारं ब्रूमः । अपि तु संवर्गविद्यादिषु वैदिकेषूपासनेषु । अतो नात्र तद्दोषशङ्कावकाशः । ननु 'संबन्धादेवमन्यत्रापि' [ ब्र० सू० ३ । ३ । २० ] इत्यधिकरणे व्याहृतिविद्याया अध्यात्माधिदैवतस्थानभेदेन भेदस्य प्रतिपादितत्वात्संवर्गविद्याया अप्यध्यात्माधिदैवतस्थानभेदेन भेदः स्यात् । न चेष्टापत्तिः । 'अनु म एतां भगवो देवताᳬं शाधि यां देवतामुपास्से' [ छा० ४ । २ । २ ] इति ब्रह्मविद्यामात्रार्थिने जानश्रुतये विद्याद्वयोपदेशस्यायुक्तत्वादिति चेन्नैवम् । व्याहृतिविद्यायां ' य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् ' [ बृ० ५ । ५ । २ ] इत्यत्रेव वायौ प्राणे इत्येवं वायुप्राणयोः स्थानत्वेन निर्देशाभावात्स्थानभेदप्रयुक्तविद्याभेदाप्रसक्तेः ' यां देवतामुपास्से ' इति रैक्कोपास्यदेवताया उपासनप्रकारे पृष्टे रैक्कोपास्यसंवर्गस्य देवतात्मलक्षणस्थानभेदेनोपासनाद्वयसंब-

न्धमभिप्रेत्योपासनाद्वयोपदेशे दोषाभावाच्च । न च 'विकल्पोऽविशिष्टफलत्वात्' [ब्र० सू० ३ । ३ । ५९] इति न्यायेन रैक्वस्य विद्याद्वयानुष्ठानाभावात्स्वानुष्ठीयमानविद्यामात्रोपदेश एव युक्तो नाधिक इति वाच्यम् । अप्रयोजकत्वात् । परोपदेशे स्वावगतेरेव प्रयोजकत्वेन स्वानुष्ठानस्याप्रयोजकत्वादिति स्थितम् । प्रकृतमनुसरामः ॥ ८ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

---

षोडशकलब्रह्मविद्यां प्रस्तौति—

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयांचक्रे ।

हेत्यैतिह्यार्थः । जबालासुतः सत्यकामनामा जबालां मातरमामन्त्रितवान् । किमित्यत्राह—

ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ॥ १ ॥

हे भवति स्वाध्यायग्रहणायाऽऽचार्यकुले ब्रह्मचर्यं विवत्स्यामि मे गोत्रं किमिति पृष्टवान् ॥ १ ॥

सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि सत्यकाम एव जाबालो ब्रुवीथा इति ॥ २ ॥

अहं भर्तृगृहेऽतिथ्यभ्यागतादिभ्यो बहु परिचर्याजातं चरन्ती परिचारिणी गुर्वादिपरिचरणशीला च सती तद्व्यासङ्गेन गोत्रानभिज्ञैव यौवनकाले त्वां लब्धवती, अतो गोत्रं न जाने । अतो जबालायाः पुत्रः सत्यकामनामाऽहमस्मि नाहं गोत्रं वेदेति गुरुसमीपे ब्रूहीत्युक्तवतीत्यर्थः ॥ २ ॥

स ह हारिद्रुमतं गौतममेत्योवाच ।

अथ स सत्यकामो हरिद्रुमत्पुत्रं गोत्रतो गौतममेत्योक्तवान् । उक्तिमेवाह—

ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥ ३ ॥

भगवति पूजावति त्वयि ब्रह्मचर्यं वत्स्यामि शिष्यत्वेन भगवन्तमुपगच्छानीत्युक्तवान् ॥ ३ ॥

तꣳ होवाच किंगोत्रो नु सोम्यासीति ।

किंगोत्रस्त्वम् । ज्ञातकुलगोत्र उपनेतव्यः । अन्ततः शूद्रत्वाभावो हि निश्चेतव्य इत्यभिप्रायः ।

स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरꣳ सा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहꣳ सत्यकामो जाबालोऽस्मि भो इति ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

तꣳ होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधꣳ सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति ।

एतादृशमार्जवयुक्तं वचो नाब्राह्मणो विशेषेण वक्तुमर्हति । अत्र ब्राह्मणशब्दस्त्रैवर्णिकमात्रपरः । अत्रैवर्णिकः शूद्र इति यावत् । शूद्रो न विवक्तुमर्हति शूद्राणां कुटिलस्वभावत्वादिति भावः । हे सोम्य, उपनयनसंस्कारार्थं समिधमाहर, सत्यं नातिक्रान्तवानसि सत्यमेवोक्तवानसि । अतस्त्वामुपनेष्य इत्यर्थः । सूत्रितं च—'तदभावनिर्धारणे च प्रवृत्तेः' [ब्र० सू० १ । ३ । ३७] इति शूद्रत्वाभावनिश्चये सत्येवोप त्वा नेष्य इत्युपनयनप्रवृत्तेर्दर्शनादित्यर्थः । अतोऽब्राह्मणशब्दः शूद्रपरः ।

तमुपनीय कृशानामबलानां चतुः-शता गा निराकृत्योवाच ।

तमेवमाचार्य उपनीय कृशानामबलानां गवां मध्येऽतिदुर्बलानि कृशानि गवां चत्वारि शतानि पृथक्कृत्येदं वक्ष्यमाणमुवाचेत्यर्थः ।

इमाः सोम्यानुसंव्रजेति ।

इमा गा अनुगच्छेत्युवाचेत्यर्थः ।

ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽऽवर्तयेति ।

स सत्यकामः सहस्रसंख्यापूरणात्प्राङ्न प्रतिनिवृत्तो भवानीति गा अरण्यं प्रस्थापयन्नुवाचेत्यर्थः ।

स ह वर्षगणं प्रोवास ।

चिरकालं तृणोदकादिपूर्णे वने गाः प्रवेश्योषितवान् ।

ता यदा सहस्रꣳ संपेदुः ॥ ५ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य

चतुर्थः खण्डः ॥ ४ ॥

---

यस्मिन्काले ताः सहस्रं संपन्ना बभूवुस्तावन्तं वर्षगणं वन उषितवानित्यर्थः ॥ ५ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य

चतुर्थः खण्डः ॥ ४ ॥

---

अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति । वाद प्रा-

एनं गवां संरक्षणेन प्रीतदेवताविशेषाधिष्ठितर्षभः सत्यकाम३ इत्यामन्त्रितवान् । सत्यकाम३ इति दूराद्धूते चेति प्लुतः ।

भगव इति ह प्रतिशुश्राव प्राप्ताः सौम्य सहस्रꣳ स्मः प्रापय न आचार्यकुलम् ॥ १ ॥

ब्रह्मणश्च ते पादं ब्रवाणीति ।

सहस्रं प्रतिशुश्राव प्रत्युत्तरं ददौ । सत्यकाम इति शेषः । ऋषभ आह सहस्रसंख्यां वयं प्राप्ताः स्मः । तव प्रतिज्ञा च निर्व्यूढा । अस्मानाचार्यकुलं प्रापय । प्रीतश्च तेऽहं ब्रह्मणः पादं ब्रवाणीति ।

इतर आह—

ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सौम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥

तस्मै होवाच । ऋषभ इति शेषः । किमिति । प्राची दिक्कलेत्यादि । ... ...र्थः ।

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति। चोपास्यमित्यर्थः। एतं पादमुक्तप्रकारेण

एकैकस्य हि गोः पादस्य चत्वारोऽवयवाः पुरतः खुरद्वयं पृष्ठतः पार्ष्णिद्वयं चातः पादश्चतुष्कलो भवति। अतश्च प्रागादिदिक्चतुष्टयं ब्रह्मणः पादत्वेन प्रकाशवानित्युपास्ते प्रकाशवन्नामकत्वेन य उपास्ते स इह लोके प्रकाशवान्भवति।

नैतावन्मात्रं फलमित्याह—

प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

कस्येदं फलमित्यत्रोक्तमधिकारिणमुपसंहरति—य एतमेवमित्यादि।

उक्तोऽर्थः ॥ १ ॥ २ ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

अग्निष्टे पादं वक्तेति। ऋषभः

एवं स्वयं पादमुक्त्वा पादान्तरमग्निरुपदेक्ष्यतीत्युक्त्वा ऋषभः तूष्णीं बभूवेत्यर्थः।

स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

स ह सत्यकामः श्वोभूतेऽपरेद्युर्नित्यनैमित्तिकं कर्म कृत्वाऽऽचार्यकुलाभिमुख्येन गाः प्रस्थाप्य ताः सर्वा गावो यत्र देशे सायंकालेऽभिबभूवुः परितः स्थिता भवन्ति तत्राग्निमाहृत्य गाश्चोपरुध्य संध्यामुपास्य समिधमाधाय ऋषभवचो ध्यायन्नग्नेः पश्चात्प्राङ्मुख उपविष्टवानित्यर्थः ॥ १ ॥

तमग्निरभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

तमेवमुपविष्टं सत्यकाममग्निरामन्त्रयाञ्चकारेत्यर्थः। शिष्टं स्पष्टम्॥२॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥

पादं द्वितीयमित्यर्थः। अनन्तवान्नाम अनन्तवन्नामोपास्य इत्यर्थः॥३॥

फलमाह—

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥

अनन्तवान् केनचित् पारं गन्तुमशक्य इत्यर्थः। अजेय इति यावत्। अनन्तवतोऽविनाशिन इत्यर्थः। शिष्टं स्पष्टम्॥४॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
षष्ठः खण्डः ॥ ६ ॥

---

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥

सर्वं स्पष्टम्॥३॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते॥४॥

तेजस्वी भवतीत्यर्थः। अग्निसूर्यादिल्लोकानित्यर्थः ॥४॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश॥ १ ॥

मद्गुः जलपक्षिविशेषः। हंसमद्गू अपि वृषभवद्देवविशेषौ द्रष्टव्यौ॥१॥ ॥२॥३॥

तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्याष्टमः खण्डः ॥ ८ ॥

---

आयतनवान् आश्रयवान्। आयतनवतः सावकाशानित्यर्थः ॥४॥

प्राप हाऽऽचार्यकुलं तमाचार्योऽभ्युवाद सत्य-
काम३ इति भगव इति ह प्रतिशुश्राव ॥ १ ॥

ब्रह्मविदिव वै सौम्य भासि को नु त्वाऽनुशशासेति ।

को वा ते ब्रह्मोपदिष्टवानित्यर्थः । शिष्टं स्पष्टम् ॥ १ ॥

अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे ।

मनुष्या मां नानुशिष्टवन्तः । न हि भगवतः शिष्यं मां कश्चिन्मनुष्योऽनुशासितुमुत्सहते, अपि तु देवा एवानुशिष्टवन्त इति प्रतिज्ञातवान् ।

भगवांस्त्वेव मे कामे ब्रूयात् ॥ २ ॥

काम इच्छायां सत्यां मे भगवानेव वक्ष्यति । मम किमर्थमितरप्रार्थनमित्यर्थः ॥ २ ॥

किंच—

श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्या-
द्धैव विद्या विदिता साधिष्ठं प्रापदिति ।

आचार्यादेवाधिगता विद्या साधिष्ठं साधुतमत्वं प्रापदिति प्राप्नोतीति भगवद्दृशेभ्यो मे मया श्रुतम् । अतो नाहं भगवत्तोऽन्यस्मादनुशासनं वाञ्छामीति भावः ।

तस्मै हैतदेवोवाच ।

एवमुक्त आचार्यस्तस्मै सत्यकामायैतदेव षोडशकलब्रह्मविज्ञानमेवोवाच । तदेवान्यूनानतिरिक्तमुवाचेत्यर्थः ।

तत्र हेतुमाह—

अत्र ह न किंचन वीयायेति वीयायेति ॥ ३ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
नवमः खण्डः ॥ ९ ॥

अत्र षोडशकलविद्यायां किंचिदपि न वीयाय वैविध्यं न प्राप्तम् । अतो हेतोर्विद्याप्रकारे भेदाभावादन्यूनानतिरिक्तं तदेवोवाचेत्यर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य नवमः खण्डः ॥ ९ ॥

---

उपकोसलविद्यां वक्तुमाह—

उपकोसलो ह वै कामलायनः
सत्यकामे जाबाले ब्रह्मचर्यमुवास ।

कमलसुत उपकोशलनामाऽत्र पूर्वोक्ते जाबाले सत्यकामे विद्यार्थं ब्रह्मचर्यमवात्सीत् ।

तस्य ह द्वादश वर्षाण्यग्नीन्परिचचार ।

तदग्निशुश्रूषां द्वादशवर्षं कृतवान् ।

स ह स्मान्याननन्तेवासिनः समावर्तयꣳ-
स्तꣳ ह स्मैव न समावर्तयति ॥ १ ॥

स्वाध्यायार्थिन इतरान्ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयꣳस्तं ब्रह्मविद्यार्थिनं ज्ञात्वा चिरसेवामन्तरेण ब्रह्मविद्या नोपदेष्टव्येति मत्वा तमेव न समावर्तयति स्म ॥ १ ॥

तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्पर्य-
चारीन्मा त्वाऽग्नयः परिप्रवोचन्प्रब्रूह्यस्मा इति ।

तपसा तप्तो ब्रह्मचारी सम्यगग्निशुश्रूषां कृतवान् । एतस्य विद्यानुपदेशे तत्परिचरणप्रीता अग्नय एव गर्हां कुर्युः । अतो यथा त्वां मा परिप्रवोचन्नग्नयस्तथाऽस्मा उपकोशलाय विद्यामुपदिशेति तस्य भार्योक्तवतीत्यर्थः ।

तस्मै हाप्रोच्यैव प्रवासांचक्रे ॥ २ ॥

एवं जाययोक्तोऽप्याचार्यस्तस्य विद्यामनुपदिश्यैव देशान्तरं प्रोषितः ॥ २ ॥

तस्मा आर्तस्य पत्नी वक्ष्यमाणमुवाचेत्यर्थः ।

कुशलं

त्वं

स ह व्याधिनाऽनशितुं दध्रे ।

स उपकोसलो मानसेन दुःखेन पीडितः सन्ननशनायावतस्थे । धृङवस्थान इति हि धातुः ।

तमाचार्यजायोवाच ब्रह्मचारि-
न्नशान किं नु नाश्नासीति ।

स्पष्टोऽर्थः ।

स होवाच बहव इमेऽस्मिन्पुरुषे कामा नानात्यया
व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥ ३ ॥

अस्मिञ्जीवे ब्रह्मप्राप्तिव्यतिरिक्ताः काम्यमाना विषया नानाविधगर्भ-जन्मजरामरणादिलक्षणफलजनका मनसि विपरिवर्तमानाः सन्ति । अतस्तद्विषयभयरूपव्याधिभिः पूर्णोऽस्मि, अतो न भुञ्ज इति प्रत्युवाचेत्यर्थः ॥ ३ ॥

अथ हाग्नयः समूदिरे ।

एतद्वाक्यं श्रुत्वा परिचरणप्रीता गार्हपत्यादयोऽग्नयो दयमानमानसाः संभूयोक्तवन्तः ।

तप्तो ब्रह्मचारी कुशलं नः
पर्यचारीद्धन्तास्मै प्रब्रवामेति ।

स्पष्टोऽर्थः ।

तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥

स होवाच विजानाम्यहं यत्प्राणो ब्रह्म
कं च तु खं च न विजानामीति ।

अस्यायमभिप्रायः—न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिधीयते, जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्मोक्षोपदेशाय प्रवृत्तत्वात् । अतो ब्रह्मैवोपास्यमुपदिष्टम् । तत्र प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टम् । तत्र सकलजगत्प्राणयितृत्वयोगेन प्राणशब्दितस्य ब्रह्मण उपपन्नत्वाद्यत्प्राणो ब्रह्मेत्युक्तं तज्जानामि कं ब्रह्म खं ब्रह्मेत्युक्तं तु न

विजानामि। यद्यपि कंशब्दस्य सुखमर्थः खमित्यस्य चाऽऽकाशोऽर्थः। ततश्च वैषयिकसुखशरीरकमाकाशशरीरकं च ब्रह्मेत्यभिप्रायः, उत कमित्यनेन सुखमभिधीयते खमित्यनेनाऽऽकाशवाचिनाऽपरिच्छिन्नत्वमभिधीयते तयोरन्योन्यविशेषणविशेष्यभावेऽपरिच्छिन्नसुखं ब्रह्मेत्यर्थो लभ्यते। ततश्चानयोर्मध्ये कस्मिन्नर्थे तात्पर्यमिति न जान इति।

ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति।

तदभिप्रायज्ञा अग्नयः कं खमित्यनयोर्विशेषणविशेष्यभावोऽभिप्रेत इति स्वाभिप्रायमुक्तवन्त इत्यर्थः। ननु यद्वाव कं तदेव खमित्यनेनैव विशेषणविशेष्यभावप्रतिपादनेनापरिच्छिन्नसुखं ब्रह्मेत्यस्यार्थस्य लाभाद्यदेव खं तदेव कमिति पुनरुक्तिर्व्यर्थेति चेन्न। दार्ढ्यार्थं वाऽपरिच्छिन्नसुखत्वेन सुखरूपापरिच्छिन्नत्वेन चोपासनासिद्ध्यर्थं वा परस्परविशेषणविशेष्यभावोपदेशसार्थक्यात्।

प्राणं च हास्मै तदाकाशं चोचुः ॥५॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य दशमः खण्डः ॥ १० ॥

---

अतो जगत्प्राणयितृत्वेन प्राणत्वविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपं चेत्यग्नय उक्तवन्त इत्यर्थः ॥ ५ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य दशमः खण्डः ॥ १० ॥

---

एवं ब्रह्मोपदिश्याग्निभिरेतद्विद्याङ्गभूताऽग्निविद्याऽप्युपदिष्टेत्याह—

अथ हैनं गार्हपत्योऽनुशशास।

जगत्प्राणयितृत्वपरिच्छिन्नसुखरूपं च ब्रह्मेत्युपदिश्यैवमुपदिष्टब्रह्मविद्यमेनमुपकोशलं गार्हपत्योऽग्निः स्वविद्यां वक्ष्यमाणामुपदिदेशेत्यर्थः। अथशब्दश्च प्रकृतविषयत्वद्योतनार्थः। अत्र चाथैनमिति शब्दाभ्यां वक्ष्यमाणाग्निविद्यायाः प्रकृतब्रह्मविद्याङ्गत्वमुच्यते।

अनुशासनप्रकारमेवाऽऽह—

पृथिव्यग्निरन्नमादित्य इति ।

मे गार्हपत्याग्नेरेताश्चतस्रस्तनव इत्यर्थः ।

य एष आदित्ये पुरुषो दृश्यते सोऽ-
हमस्मि स एवाहमस्मीति ॥ १ ॥

पृथिव्यग्न्यन्नादित्यलक्षणानां चतुर्णां रूपाणां मध्येऽग्न्यादित्यरूपयोः पक्तृत्वप्रकाशकत्वरूपधर्मसंबन्धादैक्यम् । अग्नेरादित्येन यादृशमैक्यं न तादृशमैक्यं पृथिव्यन्नाभ्याम् । तस्मादादित्य एवाहमस्मीत्यग्निरुवाचेत्यर्थः ॥ १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्याम् ।

एतदुपासकः ब्रह्मप्राप्तिविरोधि पापकर्मापहन्ति ।

लोकी भवति ।

तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोतीत्यर्थः । यद्यपि ब्रह्मप्राप्तिविरोधिपापनिवृत्तेर्ब्रह्मप्राप्तेश्च प्रधानभूतब्रह्मविद्याफलत्वमेव तथाऽप्याङ्गिफलेनाङ्गं स्तूयत इति द्रष्टव्यम् । यद्वा पापशब्दो ब्रह्मविद्योत्पत्तिप्रतिबन्धकपापपरः । लोकशब्दो ब्रह्मलोकप्राप्तिमार्गभूताग्निलोकपरो द्रष्टव्यः ।

सर्वमायुरेति ।

ब्रह्मोपासनसमाप्तेर्यावदायुरपेक्षितं तत्सर्वमेति ।

ज्योग्जीवति ।

व्याध्यादिभिरनुपहतो यावद्ब्रह्मप्राप्त्युज्ज्वलो जीवति ।

अवरपुरुषाः नास्यावरपुरुषाः क्षीयन्ते ।

अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोऽपि न क्षीयन्ते ब्रह्मविद एव भवन्तीत्यर्थः । संततौ ब्रह्मविद्यानुवृत्तेः, 'नास्याब्रह्मवित्कुले भवति' [मु० ३।२।९।] इति श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रवणात् ।

उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमु-
ष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्यैका-
दशः खण्डः ॥ ११ ॥

---

य एवमुपास्ते तमस्मिँल्लोकेऽमुष्मिꣳश्च लोके वयमग्नय उपभुञ्जामो यावद्ब्रह्म-
प्राप्तिविघ्नेभ्यः परिपालयामः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्यै-
कादशः खण्डः ॥ ११ ॥

---

अथ हैनमन्वाहार्यपचनोऽनुशशास ।

अन्वाहार्यपचनो दक्षिणाग्निः ।

आपो दिशो नक्षत्राणि चन्द्रमा इति मे रूपाणीत्यर्थः ।
य एष चन्द्रमसि पुरुषो दृश्यते सोऽह-
मस्मि स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी
भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः
क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽ-
मुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

चन्द्रमसश्चाग्नेश्च प्रकाशकत्वसाम्यादिति भावः ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य त्रयोदशः खण्डः ॥ १३ ॥

---

विद्युत्पुरुषस्यापि प्रकाशकत्वादाहवनीयैक्यम् ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य त्रयोदशः खण्डः ॥ १३ ॥

---

ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्या चाऽऽत्मविद्या च ।

प्रत्येकमनुशासनानन्तरं मिलित्वा तेऽग्नयोऽब्रुवन् । अस्मद्विद्याऽग्निविद्या, आत्मविद्या परमात्मविद्येत्यर्थः । चशब्दोऽङ्गाङ्गिभूतविद्ययोरुपदेशक्रियायां समुच्चयद्योतनार्थो न तु समप्राधान्यद्योतनार्थः । अग्निविद्या चाऽऽत्मविद्या चोपदिष्टेत्यर्थः ।

आचार्यस्तु ते गतिं वक्तेति ।

एवं वदतामग्नीनामयमभिप्रायः—हे उपकोसल ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासं त्वामुज्जीवयितुं ब्रह्मस्वरूपमात्रं तदङ्गभूतामग्निविद्यां चोपादिक्षाम । आचार्याद्धैव विदिताया विद्यायाः साधिष्ठत्वादाचार्य एव संयद्वामत्वादिगुणकं ब्रह्माक्षिरूपं च तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्यिति । ततश्च गतिं वक्तेत्यस्यावशिष्टं वक्तेत्यर्थो न तु गतिमात्रमिति द्रष्टव्यम् ।

ब्रह्मविद इव सोम्य ते मुखं भाति कोऽनु त्वानुशशासेति गुरुणैवमुक्त-
उपकोसल आह — कोनु मानु शिष्यादो इति। हे भगवन् त्वयि
प्रोषिते इह मां को नु शिष्यादित्यर्थः। हापेव निह्नुते।



आजगाम हास्याऽऽचार्यस्तमाचा-
र्योऽभ्युवादोपकोसल ३ इति ॥१॥ स्पष्टोऽर्थः ॥१॥

भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य
ते मुखं भाति को नु त्वाऽनुशशासेति
को नु माऽनु शिष्याद्भो इतीहापेव निह्नुते।

हेति निपाते। अपनिह्नुत इवेत्यर्थः। नापनिह्नुते न यथावदग्निभि-
रुक्तमित्यब्रवीदित्यभिप्रायः। कंचित्कालमपह्नुत्याथाग्नीन्निर्दिश्येम
एव नूनमुपदिष्टवन्त इत्याह—

इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे।

ये इदानीमीदृशा ज्वलनाकारतया परिदृश्यमाना एत एवाग्नयः पूर्व-
मन्याकाराः सन्तो ममोपदिष्टवन्त इत्युक्तवानित्यर्थः।

आचार्य आह—

किं नु सोम्य किल तेऽवोचन्निति ॥ २ ॥

इतर आह—

इदमिति ह प्रतिजज्ञे।

एतावदुपदिष्टमिति प्रतिज्ञातवान्।

इतर आह—

लोकान्वाव किल सोम्य तेऽवोचन्नहं तु ते तद्व-
क्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त
(हे सोम्य ते) एवमेवंविदि पापं कर्म न श्लिष्यत इति।

अग्नयः पृथिव्यादींल्लोकानेव कार्त्स्न्येन तवोक्तवन्तः, अङ्गभूताम-
ग्निविद्यां कार्त्स्न्येनोक्तवन्त इत्यर्थः। न तु ज्ञातव्यं ब्रह्म कार्त्स्न्येन।
अहं तु ते पद्मपत्रजलाश्लेषतुल्यसर्वपापाश्लेषापादकविद्याविषयभूतं ब्रह्म
वक्ष्यामि यदि शुश्रूषसे इत्यर्थः। पापाश्लेषो नाम पापहेतुभूतकर्माचर-
णेऽपि पापोत्पत्तिप्रतिबन्धकशक्तिमत्त्वम्। इदं च प्रामादिकपापविष-

यम् । पापशब्दश्च सुकृतदुष्कृतसाधारणः । एतच्च तत्र तत्रोक्तं तत्रैवानुसंधेयम् ।

इतर आह—

ब्रवीतु मे भगवानिति तस्मै होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
चतुर्दशः खण्डः ॥ १४ ॥

तस्मै एवमुपसन्नायोपकोसलायाचार्यो वक्ष्यमाणमाहेत्यर्थः ॥ ३ ॥

---

य एषोऽक्षिणि पुरुषो दृश्यत एष आ-
त्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ।

योगिभिर्योऽक्ष्यन्तर्वर्ती पुरुषो दृश्यते, अयमेवाऽऽत्मा नियन्तेत्यर्थः । अमृतत्वं निरतिशयभोग्यत्वम् । अभयत्वं दुःखासंभिन्नत्वम् । ब्रह्मत्वं निरतिशयबृहत्त्वम् ।

तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति
वर्त्मनि एव गच्छति ॥ १ ॥

तस्मान्निर्लेपस्थानिप्रभावादस्मिन्नक्षिणि यद्यपि सर्पिर्वोदकं वा कश्चित्सिञ्चेत्, तत्पार्श्वद्वयमेव गच्छति न तत्र लिप्यते ॥ १ ॥

एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामा-
न्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥

संयन्ति संगतानि वामानि वननीयानि प्रार्थनीयानि यस्मिन्स संयद्वामः । सर्वकल्याणगुणाश्रयत्वं सत्यसंकल्पत्वं वा संयद्वामत्वम् । तदुपासकस्यापि तत्क्रतुन्यायात्तद्भवतीत्यर्थः ॥ २ ॥

एष उ एव वामनीरेष हि सर्वाणि वामानि
नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥

वामनीत्वं स्वाश्रितेषु शोभनप्रापकत्वम् । तत्क्रतुन्यायेन तद्गुणोपासकस्यापि तद्भवतीत्यर्थः ॥ ३ ॥

एष उ एव भामनीरेष हि सर्वेषु लोकेषु
भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥

भामनीत्वं सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तत्वम्। उपासकस्यापि तद्भवत्यपेक्षायामित्यर्थः। अत्र संयद्वामत्ववामनीयत्वभामनीत्वेषु फलकथनं फलरूपतात्पर्यलिङ्गोपन्यासेन तेषु गुणेषु तात्पर्यप्रदर्शनार्थं न तु सर्पिर्वोदकं वा सिञ्चतीत्यत्रेवार्थवादमात्रतया स्तुतिरूपत्वमिति प्रदर्शनार्थम्। सर्पिर्वेति वाक्यस्य स्तुतित्वं व्यासार्यैरुक्तम् ॥ ४ ॥

अथ यदु चैवास्मिञ्शव्यं कुर्वन्ति
यदि च नार्चिषमेवाभिसंभवन्ति।

अथशब्दः प्रकृतविषयत्वद्योतनार्थः। अस्मिन्ब्रह्मविदि, सामान्याभिप्रायत्वादस्यैकवचनस्योत्तरत्राभिसंभवन्तीति बहुवचनेन न विरोधः। यत्, यदि शव्यं शवदहनादिकर्म पुत्रादयः कुर्वन्ति यदि वा न कुर्वन्ति सर्वथाऽपि तेऽर्चिषमेवाभिसंभवन्ति। अर्चिरादिशब्दाश्च 'आतिवाहिकास्तल्लिङ्गात्' [ब्र० सू० ४। ३। ४] इति न्यायेन तदभिमानिदेवतापरा इत्यन्यत्र स्थितम्। अत्र केचिदुपकोसलविद्याङ्गभूताग्निविद्यावैभवेन शवदहनादिवैगुण्येऽप्युपकोशलविद्यानिष्ठस्य न क्षतिः, विद्यान्तरनिष्ठस्य दहनादिवैगुण्ये किंचिद्वैगुण्यमस्तीति वदन्ति तन्न। 'न लिप्यते कर्मणा' [बृ० ४। ४। २३] इति श्रुतिसिद्धार्थानुवादित्वादस्य वाक्यस्यैतादृशार्थप्रत्यायकत्वाभावात्। अतोऽथ यदु चैवास्मिन्नित्येतत्सर्वब्रह्मवित्साधारणमेव।

अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान्मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः ॥ ५ ॥
स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते नाऽऽवर्तन्ते ॥ ६ ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

रातिवाहिके

यान्षण्मासानुदगुत्तरदिशायामादित्य एति तान्मासानित्यर्थः। देवपथः, देवैर्नीयमानः पन्था देवपथः। ब्रह्मप्रापकः पन्था ब्रह्मपथः। एतेन मार्गेण प्रतिपद्यमाना इमं घोरं मानवमावर्तं घटीयन्त्रवज्जननमरणप्रापकं मनुष्यादिशरीरोपलक्षितं संसारं नावर्तन्ते पुनर्न प्रतिपद्यन्ते। द्विरुक्तिर्विद्यासमाप्त्यर्था। अत्र च यत्किंचिद्वक्तव्यमुत्तरत्र वक्ष्यते। अत्र पञ्चाग्निविद्यायामुपकोशलविद्यायां चार्चिरादिगतेः पाठाद्यस्यां विद्यायामर्चिरादिगतिः श्रूयते तन्निष्ठानामेवार्चिरादिगत्या ब्रह्मप्राप्तिर्नान्येषाम्। न च 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' [छा० ५। १०।१] 'श्रद्धां सत्यमुपासते' [बृ० ६।२।१५] इति सर्वब्रह्मविद्यासाधारण्यं श्रुतमिति वाच्यम्। तथा सत्युपकोशलविद्यायामर्चिरादिगतिश्रुतिवैयर्थ्यप्रसङ्ग इति पूर्वपक्षे प्राप्त उच्यते—'अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्' [ब्र० सू० ३।३।३१] सर्वेषां सर्वोपासननिष्ठानामर्चिरादिमार्गेणैव गन्तव्यत्वादेतद्विद्यानिष्ठानामेवेति नियमो नास्ति। तथा इति नियमे सति 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' 'श्रद्धां सत्यमुपासते'

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥ [गी०८।२४]

इति श्रुतिस्मृतिभ्यां विरोधप्रसङ्गः। उपकोसलविद्यायां पुनराम्नानं तु 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति पञ्चाग्निविद्यावाक्यप्राप्तसर्वब्रह्मविद्यासाधारणार्चिरादिगतेरपुनरावृत्तिविधानार्थमनुवाद इति स्थितम्। उपकोसलविद्यायाः परमात्मविद्यात्वं च 'अन्तर उपपत्तेः' [ब्र० सू० १। २।१३] इत्यत्र स्थितम्। तथा हि—'य एषोऽक्षिणि पुरुषो दृश्यते' [छा० ४।१५।१] इति निर्दिश्यमानः प्रतिबिम्बात्मा प्रसिद्धवन्निर्देशाद्दृश्यत इत्यपरोक्षाभिधानाच्च जीवो वा स्यात्। चक्षुषि तस्य विशेषेणसंनिधानात्प्रसिद्धिरुपपद्यते। उन्मीलितचक्षुरुद्वीक्षणेन जीवस्य स्थितिगतिनिश्चयाद्दृश्यत इत्युक्तिरुपपद्यते। न तु परमात्मा तस्यानाधारत्वाददृश्यत्वाच्च। न चाऽऽत्मत्वामृतत्वाभयत्वब्रह्मत्वादिविरोधः। एष आत्मेति होवाचेतीतिकरणेन मनो ब्रह्मेत्युपासीतेतिवत्पदार्थाविवक्षया दर्शितत्वादित्येवं प्राप्तेऽभिधीयते—'अन्तर उपपत्तेः'। अक्ष्यन्तरः परमात्मा। तस्यैवाऽऽत्मत्वामृतत्वसंयद्वामत्ववामनीत्वभामनीत्वादिधर्माणामुपपत्तेः। न चेतिकरणेनैतेषामविवक्षा शङ्क्या। यत्रोच्यमानस्यार्थस्याऽऽत्मवचनसं-

बन्धः प्रतिपाद्यस्तत्रेतिशब्दो नार्थविवक्षां वारयति यथा इति ह स्मोपाध्यायः कथयतीति। तस्मादिहामृतत्वादीनामाचार्यवचनसंबन्धस्य प्रतिपाद्यत्वादितिशब्दो मनो ब्रह्मेतीत्यादाविव नाविवक्षाकारकः। ततश्च स्वाभाविकामृतत्वादीनां जीवेऽसंभवात्। तथा प्रतिबिम्बे 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' [बृ० ५।५।२] इति चक्षुष्प्रतिष्ठितत्वेन श्रुतिप्रसिद्धादित्यरूपदेवताविशेषे चासंभवात्परमात्मैवाक्ष्यन्तर्वर्ती। यदुक्तं निराधारस्य परमात्मनश्चक्षुरुपस्थितिर्न संभवतीति तत्राऽऽह—'स्थानादिव्यपदेशाच्च' [ब्र० सू० १।२।१४]। 'यश्चक्षुषि तिष्ठन्' [बृ०३।७।३] इत्यादावन्तर्यामिब्राह्मणे चक्षुषि स्थितिनियमनादेः परमात्मधर्मतया श्रवणाद्योगिदृश्यतया दृश्यत इत्यस्योपपत्तेश्चाक्ष्यन्तर्वर्तिनः परमात्मत्वे नानुपपत्तिः। 'सुखविशिष्टाभिधानादेव च' [ब्र० सू० १।२।१५] कं ब्रह्मेत्यपरिच्छिन्नत्वविशिष्टसुखरूपस्याग्निभिरुपदिष्टस्य ब्रह्मण एव 'य एषोऽक्षिणि पुरुषो दृश्यते' इति वाक्ये प्रकृतपरामर्शिना य एष इति सर्वनाम्नाऽभिधीयमानत्वाच्च। न च तद्ब्रह्माग्निविद्यया व्यवहितमिति वाच्यम्। अग्निविद्याया अपि ब्रह्मविद्याङ्गत्वेन न हि स्वाङ्गमिति न्यायेनाव्यवधायकत्वात्। तदङ्गत्वं च तत्प्रकरणमध्यपातात्। 'अथ हैनं गार्हपत्योऽनुशशास' इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेश इति प्रतिपादनाब्रह्मविद्योपयुक्तफलव्यतिरिक्तफलान्तराश्रवणाच्च। ननु कं ब्रह्म खं ब्रह्मेति वाक्येनापरिच्छिन्नसुखरूपं ब्रह्मेति नोपदिश्यते, अपि तु प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति त्रिभिर्वाक्यैर्मुख्यप्राणे लौकिकसुखे आकाशे च ब्रह्मदृष्टिर्विधीयते तत्राऽऽह—अत एव च स ब्रह्म, अत एवापरिच्छिन्नसुखस्य ब्रह्मत्वाभिधानादेवापरिच्छिन्नसुखरूपं ब्रह्मैवात्र प्रतिपाद्यते नाब्रह्मणि ब्रह्मदृष्टिः। अब्रह्मभूतेषु मुख्यप्राणलौकिकसुखाकाशेषु ब्रह्मदृष्टिविधिरूपत्वे तत्रानुपपत्तेरभावेन 'विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि' इति प्रश्नस्य 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति प्रतिवचनस्य चासंगतत्वापत्तेः। तदसंगतिप्रकारश्च प्रागेव वर्णितः। इतश्च परं ब्रह्म 'श्रुतोपनिषत्कगत्यभिधानाच्च' [ब्र० सू० १।२।१६]। श्रुतोपनिषत्कस्याधिगतपरमपुरुषयाथात्म्यस्यानुसंधेयतया श्रुत्यन्तरप्रतिपाद्यमानाऽर्चिरादिका गतिर्या तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोशलायाक्षिपुरुषं श्रुतवते 'अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति' इत्यादिनाऽऽचार्य उपदिशति, अतोऽप्ययमक्षिपुरुषः परमात्मा। 'अनवस्थितेरसंभवाच्च

नेतरः' [ब्र० सू० १।२।१७]। प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानादमृतत्वादीनां च निरुपाधिकानां तेष्वसंभवान्न परमात्मेतरश्छायादिरक्षिपुरुषो भवितुमर्हतीति स्थितम्। प्रकृतमनुसरामः ॥ ५ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

रहस्यप्रकरणे प्रसङ्गादारण्यकत्वसाम्याच्च यज्ञे क्षत उत्पन्ने व्याहृतयः प्रायश्चित्तार्थहोममन्त्रतया विधातव्यास्तदभिज्ञस्यैव ब्रह्मत्वलक्षणमार्त्विज्यं तस्य च ब्रह्मणो मौनमावश्यकमित्येवमादिविध्यर्थमिदमारभ्यते—

एष ह वै यज्ञो योऽयं पवते।

योऽयं पवते वायुः स एव यज्ञ इत्यर्थः।

कथं वायोर्यज्ञत्वमित्यत्राऽऽह—

एष ह यन्निदꣳ सर्वं पुनाति।

एष वायुर्हि यन् गच्छन्सर्वं पुनाति। वर्षवातातपैर्वस्तुशुद्धिः स्मृतिप्रसिद्धा यन्पुनातीति पदद्वयगतयोर्यकारनकारयोर्यज्ञशब्दे प्रत्यभिज्ञानात्तञकारस्य नकारविकारत्वाद्यज्ञशब्दस्य यन्पुनातीति निर्वचनमिति भावः।

उक्तमेवोपसंहरति—

यदेष ह यन्निदꣳ सर्वं पुनाति तस्मादेष एव यज्ञः।

एवं यज्ञस्य वायोश्चाभेदोपपादनेन यज्ञस्य गन्तृत्वं संपाद्य गन्तुर्यज्ञस्य मार्गमाह—

तस्य मनश्च वाक्च वर्तनी ॥ १ ॥

प्रवृत्तिसाधनभूतो वाङ्मनसयोर्मार्ग इति यावत् ॥ १ ॥

तयोरन्यतरां मनसा सꣳस्करोति ब्रह्मा
वाचा होताऽध्वर्युरुद्गाताऽन्यतराम्।

तयोरन्यतरां यज्ञस्य मनोलक्षणमार्गं मनसा प्रणिहितेन ब्रह्मा संस्करोति। होत्राद्यास्त्रयोऽपि वाचैव सम्यक्प्रयुक्तया वाचं संस्कुर्वन्तीत्यर्थः।

(१) व्यवदति अत्र "नञो नलोपस्तिङि क्षेपे" इति निन्दायां नलोपः। इति ग्रन्थाक्षरकोशे पाठः।



स यत्रोपाकृते प्रातरनुवाके पुरा परि-
धानीयाया ब्रह्मा व्यवदति ॥ २ ॥

(१) अवदतीत्यत्र क्षेपार्थो 'नञो नलोपस्तिङि क्षेपे' इति नलोपः। यत्र यज्ञे प्रातरनुवाकशस्त्र उपाकृत आरब्धे सति परिधानीयाया ऋचः प्राग्ब्रह्मा व्यवदति। विशब्दो विविधार्थो नञश्च निन्दितत्वमर्थः। विविधं निन्दितं च वदति मौनं त्यजति चेदित्यर्थः ॥ २ ॥

अन्यतरामेव वर्तनीꣳ सꣳस्कुर्वन्ति हीयतेऽन्यतरा।

तदा मनःप्रणिधानस्य नाशेन मनोलक्षणयज्ञवर्तनीसंस्कारकस्य ब्रह्ममनसोऽभावादेषा वर्तनी नश्यति होत्रादिवाक्संस्कार्या वाग्रूपा यज्ञवर्तनी परमास्त इत्यर्थः।

तर्हि को दोष इत्यत्राऽऽह—

स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्य-
त्येवमस्य यज्ञो रिष्यति यज्ञꣳ रिष्यन्तं यजमा-
नोऽनुरिष्यति स इष्ट्वा पापीयान्भवति ॥ ३ ॥

गच्छन्नेकपात्पुरुषो वैकेन चक्रेण प्रवर्तमानो रथो वा यथा रिष्यति नश्यत्येवमस्य यजमानस्य यज्ञो नश्यति विगुणो भवतीति यावत्। तस्मिन्नष्टे यजमानोऽपि नष्टफलः पापी च भवतीत्यर्थः।

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परि-
धानीयाया ब्रह्मा व्यवदत्युभे एव वर्तनी
सꣳस्कुर्वन्ति न हीयतेऽन्यतरा ॥ ४ ॥ स
यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां
वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतिति-
ष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतिति-
ष्ठति स इष्ट्वा श्रेयान्भवति ॥ ५ ॥

न व्यवदतीति सम्बन्धः।

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
षोडशः खण्डः ॥ १६ ॥

यत्रः प्रतितिष्ठति सम्पूर्णवान् भवति इत्यर्थः। यजमानः प्रतितिष्ठति लब्धफलो भवतीत्यर्थः। शिष्टं स्पष्टम्।



अत्र वर्तन्याविति वक्तव्ये सुपां सुलुगिति च्छान्दसो लुक् ॥ ४ ॥ ५ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य
षोडशः खण्डः ॥ १६ ॥

---

तत्र यज्ञभ्रंशे व्याहृतिहोमः प्रायश्चित्तमिति वक्तुं प्रस्तौति—

प्रजापतिर्लोकानभ्यतपत् ।

लोकसारजिघृक्षया लोकानुद्दिश्यातपत् । तप आलोचने । आलोचनरूपं ज्ञानं कृतवानित्यर्थः ।

तेषां तप्यमानानाꣳ रसान्प्रावृहत् ।

प्रावृहत् उद्धृतवाञ्जग्राहेत्यर्थः ।

अग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥ १ ॥

लोकानालोच्य त्रिलोक्या अग्निवाय्वादित्याः सारभूता इति निश्चिकायेत्यर्थः । एवमुत्तरत्रापि ॥ १ ॥

स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानाꣳ रसान्प्रावृहदग्नेर्ऋचो वायोर्यजूꣳषि सामान्यादित्यात् ॥ २ ॥

अग्निवाय्वादित्यसारतया त्रयीं निश्चितवानित्यर्थः ॥२॥ त्रयीसारतया व्याहृतित्रयं निश्चितवानित्यर्थः ॥

स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसान्प्रावृहद्भूरित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः ॥ ३ ॥

स्पष्टोऽर्थः ॥ २ ॥ ३ ॥

तद्यद्यृक्तो रिष्येद्भूः स्वाहेति गार्हपत्ये जुहुयात् ।

तत्तस्माद्धेतोर्ऋचो निमित्ताद्यदि यज्ञो रिष्येत्क्षतं प्राप्नुयादित्यर्थः । तर्हि तत्प्रायश्चित्तार्थं भूः स्वाहेतिमन्त्रेण गार्हपत्येऽग्नौ जुहुयादित्यर्थः ।

ऋचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टꣳ संदधाति ॥ ४ ॥

यदृचामृक्संबन्धि तद्विरिष्टम् तद्यज्ञस्य क्षतमृचां वीर्येणौजसा रसेन भूरितिव्याहृत्या समाधत्त इत्यर्थः ॥ ४ ॥

अथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टꣳ संदधाति ॥ ५ ॥ यजुष्टो यजुषो निमित्तात्।

अथ यदि सामतो रिष्येत्स्वः स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टꣳ संदधाति ॥ ६ ॥ आहवनीये अग्नौ

पूर्ववदर्थः ॥ ५ ॥ ६ ॥

तद्यथा लवणेन सुवर्णꣳ संदध्यात् ।

सुवर्णस्य संधानं नाम कठिनस्य मृदुतापादनम् । क्षारद्रव्यसंपर्कपूर्वकतापेन हि सुवर्णस्य परस्परसंधानयोग्यमृदुता भवतीत्यर्थः । शिष्टं स्पष्टम् ।

सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥ ७ ॥

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टꣳ संदधाति ।

व्याहृतीनां पृथिव्यादिलोकसारभूताग्न्यादिदेवतासारभूतत्रयीसारत्वात्तद्वीर्यत्वाच्चैषामुक्तानां वीर्येणैवं सुवर्णादिसंधानवदेव यज्ञक्षतं समाहितं भवतीत्यर्थः ।

भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ॥ ८ ॥

यत्र यस्मिन्यज्ञ एवंविद्ब्रह्मनामर्त्विग्भवति स यज्ञः कृतभेषजः कृतौषधः समीचीनेन चिकित्सकेन यथा रोगार्तः पुरुषः कृतभेषजो भवति तथेत्यर्थः ॥ ८ ॥

एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवति ।

उदक्प्रवण उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थः ।

एवंविदꣳ ह वा एषा ब्रह्माणमनुगाथा ।

एवंविदं ब्रह्मनामकमृत्विजमनुगतैषा वक्ष्यमाणा गाथा भवतीत्यर्थः ।

यतो यत आवर्तते तत्तद्गच्छति ॥ ९ ॥ मानवः ।

यतो यतो यत्र यत्र यज्ञस्य क्षतमावर्तते, आ समन्ताद्व्याप्य वर्तते, आ ईषद्वा वर्तते तत्सर्वं मननशीलो ब्रह्मा गच्छति समाधत्त इत्यर्थः । कस्त्यत्राह- मानव इति। मानवो मननशीलो ब्रह्माख्य ऋत्विगित्यर्थः।

ब्रह्मैवैक ऋत्विक्कुरूनश्वाऽभिरक्षति ।

अश्वा वडवाऽऽरूढान्योधान्यथा रक्षत्येवमेक एव ब्रह्मर्त्विक्कुरून्कर्तॄनृत्विजो रक्षति ॥ ९ ॥

एवंविद्ध वै ब्रह्मा यज्ञं यजमानꣳ सर्वाꣳश्च-
र्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं
कुर्वीत नानेवंविदं नानेवंविदम् ॥ १० ॥

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकस्य
सप्तदशः खण्डः ॥ १७ ॥

---

इति च्छान्दोग्योपनिषदि चतुर्थप्रपाठकः
समाप्तः ॥ ४ ॥

---

अत्र ब्रह्मणो वेदनेन यजमानादीनामृत्विजां च रक्षणप्रतिपादनेनोद्गातृप्रभृतीनां वेदनानियमः सूच्यत इति 'अङ्गेषु यथाश्रयभावः' [ ब्र० सू० ३ । ३ । ६१ ] इत्यधिकरणे 'दर्शनाच्च [ ब्र० सू० ३ । ३ । ६६ ] इति सूत्रितम् ॥ १० ॥ उक्तं ब्रह्मवेदनस्तुतिं प्रयोजनेनोपसंहरति - तस्मादित्यादि। द्विरुक्तिर्विद्यासमाप्त्यर्थो।

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकस्य
सप्तदशः खण्डः ॥ १७ ॥

---

इति च्छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थप्रपाठकः
समाप्तः ॥ ४ ॥

---

प्राणविद्या प्रस्तूयते—

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद
ज्येष्ठश्च ह वै श्रेष्ठश्च भवति ।

ज्येष्ठत्वश्रेष्ठत्वगुणकं प्राणं यो वेद स तत्क्रतुन्यायेन स्वयमपि ज्येष्ठश्च श्रेष्ठश्च भवतीत्यर्थः । ज्येष्ठत्वं च वृद्धतमत्वं 'वृद्धस्य च' इति वृद्धशब्दस्य ज्यादेशविधानात् । श्रेष्ठत्वं प्रशस्ततमत्वं 'प्रशस्यस्य श्रः' इति प्रशस्यशब्दस्य श्रादेशविधानात् ।

एवं फलप्रदर्शनेन पुरुषमभिमुखीकृत्याऽऽह—

प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥

वावशब्दोऽवधारणार्थः । गर्भस्थपुरुषे प्राणव्यापारप्रवृत्त्यनन्तरभावित्वादिन्द्रियप्रवृत्तेः प्राणस्येन्द्रियापेक्षया ज्यैष्ठ्यमिन्द्रियव्यापाराणां सर्वथैतदधीनत्वाच्छ्रैष्ठ्यं च ॥ १ ॥

यो ह वै वसिष्ठं वेद वासिष्ठो ह स्वानां भवति ।

स्वानां ज्ञातीनां मध्ये वसिष्ठो भवतीत्यर्थः ।
को वसिष्ठ इत्यत्राऽऽह—

वाग्वाव वसिष्ठः ॥ २ ॥

अतिशयेन वसुमान्वसिष्ठः । वाग्मी हि लोकेऽतिशयेन वसुमान्भवति । अतश्च वसुमत्तासंपादकसद्व्यवहारजनकत्वं वाचो वसिष्ठत्वमिति भावः ॥ २ ॥

यो ह वै प्रतिष्ठां वेद प्रति ह
तिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च ।

ति प्रतिष्ठावान् भव
हशब्दः प्रसिद्धौ । अत्र चामुत्र च प्रतितिष्ठतीत्यर्थः ।
का तर्हि प्रतिष्ठेत्यत्राऽऽह—

चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥

'चक्षुषा हि समे दुर्गे च प्रतितिष्ठति' [ बृ० ६ । १ । ३ ] इति बृहदारण्यके समानप्रकरणे श्रवणात्प्रतिष्ठासंपादकसमविषमभूतलप्रदर्शकत्वमेव चक्षुषः प्रतिष्ठात्वम् ॥ ३ ॥

योह वै संपदं वेद सꣳ हास्मै
कामाः पद्यन्ते दैवाश्च मानुषाश्च ।

अस्मा उपासकाय कामाः संपद्यन्त इत्यर्थः ।
का तर्हि संपदित्यत्राऽऽह—

श्रोत्रं वाव संपत् ॥ ४ ॥

'श्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः' [बृ० ६ । १ । ४] इति बृहदारण्यके समानप्रकरणे श्रवणात्संपद्धेतुभूतवेदशास्त्रतदर्थश्रवणादिसंपादकत्वमेव श्रोत्रस्य संपत्त्वम् ॥ ४ ॥

यो ह वा आयतनं वेदाऽऽयतनꣳ ह स्वानां
भवति मनो ह वा आयतनम् ॥ ५ ॥

स्रक्चन्दनादिविषयज्ञानरूपभोगायतनत्वमेव मनस आयतनत्वम् ॥५॥
मुख्यप्राणस्य श्रैष्ठ्यसंपादनायाऽऽख्यायिकामाह—

अथ ह प्राणा अहꣳश्रेयसि व्यूदिरेऽहꣳ
श्रेयानस्म्यहꣳ श्रेयानस्मीति ॥ ६ ॥

अथशब्द आख्यायिकोपक्रमार्थः । अहंश्रेयसि स्वश्रेयसि निमित्ते विषये वा व्यूदिरेऽहं श्रेयानस्म्यहं श्रेयानस्मीति विवादं चक्रुरित्यर्थः ॥ ६ ॥

ते ह प्राणाः प्रजापतिं पितरमे-
त्योचुर्भगवन्को नः श्रेष्ठ इति ।

स्पष्टोऽर्थः ।

तान्होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतर-
मिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥

वो युष्माकं मध्ये यस्मिन्नुत्क्रान्ते शरीरमतिशयेन पापिष्ठमतिहेयमिव दृश्येत स वः श्रेष्ठ इत्युवाचेत्यर्थः ॥ ७ ॥

सा ह वागुच्चक्राम ।

सा प्रसिद्धा वाक्स्वश्रैष्ठ्यपरीक्षणाय शरीरादुत्क्रान्तवतीत्यर्थः ।

सा संवत्सरं प्रोष्य पर्येत्योवाच
कथमशकतर्ते मज्जीवितुमिति। (यूयं कथमशकत
तीतरान् प्राणान् प्रोष्य

(सा वागेकं संवत्सरं प्रवासं कृत्वा पुनरागत्य मद्दते मां विना जीवितुं
कथं शक्ता इत्युक्तवती। इतरे प्राणाः प्रत्यूचुः—

यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा
शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति।

यथा कला मूका वागिन्द्रियव्यापाररहिता अपीतरैः प्राणैस्तत्कार्यं
कुर्वन्तो जीवन्त्येवं वयमप्यजीविष्मेति प्रत्यूचुः।

प्रविवेश ह वाक् ॥ ८॥

एवमुक्त्वा वाक्स्वश्रैष्ठ्यं नास्तीति निश्चित्य देहं प्रविष्टवती ॥ ८॥

चक्षुर्होच्चक्राम।

चक्षुरुत्क्रान्तम्। एवमुत्तरत्रापि।

तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जी-
वितुमिति यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन
वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो
मनसैवमिति प्रविवेश ह चक्षुः ॥ ९ ॥
श्रोत्रꣳ होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच
कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः
प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा
ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥
मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथम-
शकतर्ते मज्जीवितुमिति यथा बाला अमनसः
प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्व-
न्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥

अमनसोऽप्रौढमनसः ॥ ११ ॥

अथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्-
वीशशङ्कून्संखिदेदेवमितरान्प्राणान्समखिदत् ।

स मुख्यः प्राण उच्चिक्रमिषन्नुत्क्रमितुमिच्छन्यथा शोभनोऽश्वः परीक्षार्थमश्वारूढेन ताडितः पड्वीशशङ्कून्पादबन्धनकीलकान्संखिदेदुत्पाटयेदेवमितरान्प्राणान्स्वस्वस्थानेभ्य उत्पाटितवान् ।

तꣳ हाभिसमेत्योचुर्भगवन्नेधि त्वं नः
श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥

हे भगवन्पूजार्ह त्वमेधि स्वामीति शेषः। अस्तेर्लोटि मध्यमपुरुषैकवचनं भवेत्यर्थः। अस्माकं मध्ये त्वमेव श्रेष्ठोऽसि त्वमुत्क्रमणं मा कार्षीरितीतरे प्राणास्तमागत्योचुरित्यर्थः ॥ १२ ॥

अथेतरे प्राणा विशः करानिव राज्ञे मुख्यप्राणाय स्वस्वगुणानर्पितवन्त इत्याह—

अथ हैनं वागुवाच यदहं वसि-
ष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीति ।

यद्येव वाग्मिनो वसुमत्तासंपादकत्वलक्षणेन गुणेनाहं वसिष्ठोऽस्मि त्वं तेन गुणेन वसिष्ठोऽसीत्यर्थः। मदीयगुणस्य त्वदधीनत्वात्त्वदीय एव स गुण इति भावः। उक्तं च व्यासार्यैः—'अहं यत्स्वकार्यकरणसमर्थाऽस्मि तस्य त्वदधीनत्वात्तवैव तत्कार्यसामर्थ्यमित्यर्थ' इति। एवमुत्तरत्रापि द्रष्टव्यम् ।

अथ हैनं चक्षुरुवाच यदहं प्रति-
ष्ठाऽस्मि त्वं तत्प्रतिष्ठाऽसीति ॥ १३ ॥
अथ हैनꣳ श्रोत्रमुवाच यदहꣳ संपदस्मि त्वं
तत्संपदसीत्यथ हैनं मन उवाच यदहमाय-
तनमास्मि त्वं तदायतनमसीति ॥ १४ ॥
न वै वाचो न चक्षूꣳषि न श्रोत्राणि न

मनाᳫंसीत्याचक्षते प्राणा इत्येवाऽऽचक्षते
प्राणो ह्येवैतानि सर्वाणि भवति ॥ १५ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

लौकिका वाऽऽगमज्ञा वा वागादीनीन्द्रियाणि सर्वाणि वागादिशब्दैर्न व्यवहरन्त्यपि तु प्राणशब्देनैव व्यवहरन्ति तत्कस्य हेतोः प्राणाधीनसत्ताकत्वादितरेषाम्।

यदधीना यस्य सत्ता तत्तदित्येव भण्यते। इत्युक्तेः।

प्राणाधीनसत्ताकत्वादितरेषामिन्द्रियाणां सर्वाणीन्द्रियाणि प्राणादेव भवन्तीत्यर्थः। एतत्खण्डान्तर्गतवाग्विषयकमधिकरणमुपन्यस्यते। गुणोपसंहारपादे छान्दोग्यवाजसनेयकयोः कौषीतकिनामुपनिषदि च दशमेऽध्याये—'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च स्वानां भवति' इत्यारभ्य प्राणविद्या पठ्यते। तत्र सर्वत्र प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यगुणकत्वम्, वाक्चक्षुःश्रोत्रमनसां वसुमत्तासंपादकत्वसमविषमभूतलादिप्रदर्शकत्वसंपद्धेतुभूतवेदशास्त्रतदर्थश्रवणादिसंपादकत्वस्रक्चदनादिविषयज्ञानरूपभोगायतनत्वलक्षणवसिष्ठत्वप्रतिष्ठात्वसंपत्त्वायतनत्वरूपगुणवत्त्वम्, वागादीनां च श्रैष्ठ्यविषयपरस्परविवादेन ब्रह्मसभोपसर्पणम्, यस्मिन्व उत्क्रान्ते शरीरानवस्थितिः स वः श्रेष्ठ इति ब्रह्मवचनम्, तत्परीचिक्षिषया वागादीनामेकैकस्य शरीरादुत्क्रम्य पर्यटनम्, तस्मिञ्शरीरस्येन्द्रियाणां च यथापूर्वमवस्थानम्, प्राणस्योत्क्रमणप्रवृत्तौ तेषां विशरणम्। ततो भीतानां वागादीनां मोत्क्रमीस्त्वं नः श्रेष्ठ इति मुख्यप्राणं प्रति प्रार्थनमित्येतत्सर्वं क्रमेण वर्णितम्। कौषीतकिशाखायां तु च्छान्दोग्यवाजसनेयकवत्, यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यनेन प्रकारेण प्राणे वागादिगतवसिष्ठत्वादिसमर्पणं नोक्तम्। अतो वागादिगतवसिष्ठत्वादेः प्राणाधीनत्वाप्रतीत्या वागादीनां स्वातन्त्र्यप्रतीतेश्छान्दोग्यवाजसनेयकाम्नातप्राणविद्यातः कौषीतक्याम्नातप्राणविद्याया भेदप्रतिभोद्गमः। तथा तस्यामेवोपनिषदि चतुर्थेऽध्याये 'अथातो निःश्रेयसादानं सर्वा ह वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुस्तद्दारुभूतं शिश्येऽथैनद्वाक्प्रविवेश तद्वाचा वदच्छिश्य एव' 'अथैनच्चक्षुः प्रविवेश

तद्वाचा वदच्चक्षुषा पश्यच्छिश्य एवाथैनच्छ्रोत्रं प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वच्छिश्य एवाथैनन्मनः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा ध्यायच्छिश्य एवाथैनत्प्राणः प्रविवेश तत्तत एव समुत्तस्थौ ते देवाः प्राणे निःश्रेयसं विदित्वा प्राणमेव प्रज्ञात्मानमभिसंभूय ' [ कौ० २।९ ] प्राणराहित्यदशायामपि वागादीनां स्वकार्यकरत्वप्रदर्शनेन च्छान्दोग्यैक्याप्रतीतेरिति पूर्वपक्षं कृत्वा बहुसारूप्यप्रतीतौ किंचिद्वैरूप्यस्य प्रत्यभिज्ञाविरोधित्वाभावाद्विद्यैक्यमिति 'सर्वाभेदादन्यत्रेमे ' [ब्र० सू० ३।३।१०] इति सूत्रेण सिद्धान्तितम् । सर्वाभेदात्प्रतिज्ञातप्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य तिसृष्वपि शाखास्वभेदाच्छाखान्तरविद्यायां शाखान्तरविद्यागतगुणोपसंहारः कर्तव्य इति सूत्रार्थः । प्रकृतमनुसरामः ॥ १५ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

स होवाच किं मेऽन्नं भविष्यतीति ।

वागादीन्प्रति किं मेऽन्नं भविष्यतीति मुख्यप्राणः पप्रच्छेत्यर्थः ।

यत्किंचिदिदमा श्वभ्य आ शकुनिभ्य इति होचुः ।

श्वशकुनिपर्यन्तसर्वप्राणिनां यदन्नजातं तत्तवान्नजातमिति वागादयः प्रत्यूचुः ।

श्रुतिः स्वेन रूपेणाऽऽह—

तद्वा एतदनस्यान्नम् ।

यत्किंचिल्लोके प्राणिभिरद्यते तदेतदनस्य प्राणस्यान्नं प्राणेनैव तदद्यत इत्यर्थः ।

अनो ह वै नाम प्रत्यक्षम् ।

अदनादिविविधचेष्टायुक्तत्वात्प्राणस्यान इति प्रत्यक्षं नाम । देवानां परोक्षप्रियत्वात्प्रत्यक्षमन इति नाम परित्यज्य प्राण इति परोक्षेण नाम्ना व्यवहारः । ततश्चादनचेष्टाया अपि तदीयत्वात्सर्वप्राणिजातेनाद्यमानमन्नं सर्वं तेनैवाद्यत इति प्राणस्य सर्वमन्नमित्यर्थः । यद्वा, अन इत्यस्य

नकारान्तरयुक्तस्यान्नत्वेनान्नस्यानसंबन्धित्वादन इत्यस्य प्राणनामत्वस्य प्रत्यक्षत्वादन्नं तत्संबन्धीत्यर्थः। अत्र प्राणविद्यानिष्ठेन सर्वप्राण्यन्नादनस्य कर्तुमशक्यत्वान्नास्य वाक्यस्य सर्वप्राण्यन्नादनकर्तव्यत्वमर्थः, अपि तु सर्वप्राणिजातान्ने प्राणान्नत्वचिन्तनं कर्तव्यमित्यर्थः।

सर्वप्राणिजातान्ने प्राणान्नत्वचिन्तनं स्तौति—

न ह वा एवंविदि किंचनानन्नं भवतीति॥ १॥

प्राणविद्यानिष्ठस्याभक्ष्यभक्षणदोषो नास्तीत्यर्थः॥ १॥

स होवाच किं मे वासो भविष्यतीत्याप इति होचुः।

किं मे वस्त्रं भविष्यतीति मुख्यप्राणेन पृष्टा इतरे प्राणा आपस्ते वस्त्रं भविष्यन्तीत्यूचुः। आपो वासस्त्वेन चिन्तनीया इति होचुरित्यर्थः।

तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति॥२॥

तस्मादपां वासस्त्वादेवैतस्मिन्नपि काले भोक्ष्यमाणा भोजनात्प्राक्पश्चाच्चाऽऽचमनीयाभिरद्भिर्वासोभिः परिहितमनग्नं प्राणं कुर्वन्ति आचमनीयास्वप्सु वासस्त्वचिन्तनेन वासोभूताभिरद्भिः प्राणस्य परिहितत्वादिति भावः। अप्सु वासस्त्वचिन्तनेन प्राणस्यानग्नत्वाचिन्तनेन च स्वयमपि वासो लम्भुको भवति वासो लब्धा भवति। एवमनग्नश्च भवति तत्क्रतुन्यायेनेति भावः।

तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच।

व्याघ्रपत्पुत्राय नाम्ना गोश्रुतये जबालापुत्रः सत्यकामनामेदं प्राणदर्शनमुक्त्वाऽन्यदप्युवाच।

किं तदित्यत्राऽऽह—

यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति॥ ३॥

एतत्प्राणदर्शनं शुष्काय वृक्षायापि यदि ब्रूयादस्य शाखा अभ्युत्पद्येरन्पत्राणि च प्ररोहेयुः॥ ३॥

मन्थाख्यं कर्माऽऽरभ्यते—

(१) परिहितत्वादनग्नत्वाचिन्तनं कुर्वन्तीत्यर्थः। एवं चिन्तकस्तेन चिन्तनेन [illegible]

अथ यदि महज्जिगमिषेत् ।

महत्
महत्त्वं ज्यैष्ठ्यश्रैष्ठ्यादिलक्षणं यदि प्राप्तुमिच्छेदित्यर्थः ।

अमावास्यायां दीक्षित्वा पौर्णमास्या रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत्॥४॥

उक्तकाले सर्वौषधस्य ग्राम्यारण्यौषधीनां मन्थं पिष्टमौदुम्बरे कंसाकारे चमसाकारे वा पात्रे दधिमधुनोः प्रक्षिप्योपमथ्याग्रतः स्थापयित्वा ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्येन हुत्वा मन्थे संपातं हुतशेषं निनयेदित्यर्थः ॥ ४ ॥

वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत्प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत्संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥ ५ ॥

सर्वं स्पष्टम् ॥५॥

अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपति ।

प्रतिसृप्याभिगम्य प्रदक्षिणं कृत्वेति वाऽर्थः । अञ्जलौ मन्थं निधाय वक्ष्यमाणं मन्त्रं जपेदित्यर्थः ।

मन्त्रमेवाऽऽह—

अमोनामाऽसि ।

अमा इति नाम यस्य सोऽमोनामा सोऽसीत्यर्थः ।

ननु अमा इति प्राणस्य नाम । कथमप्राणस्य मन्थस्यामोनामत्वमित्यत्राऽऽह—

अमा हि ।

त्वामिति शेषः हि
त्वं प्राणोऽसीत्यर्थः ।

मन्थस्य प्राणत्वमुपपादयति—

ते सर्वमिदम् ।

इदं जगत्सर्वं ते त्वदधीनं मन्थलक्षणान्नाधीनत्वाज्जगत इति भावः।

(१) तत् श्रेष्ठं इति ग्रन्थाक्षरपाठः।



स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः स
मा ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ राज्यमाधिपत्यं
गमयत्वहमेवेदꣳ सर्वमसानीति ॥ ६ ॥

स हि मन्थभूतः प्राण इत्यर्थः। शिष्टं राजा दीप्तिमानधिपतिः शेषी-त्यर्थः। मा मां गमयतु (प्रापयतु)। इदं सर्वमहमेवासानि (भवानि) सर्वनियन्तृतया भवानी-त्यर्थः। शिष्टं स्पष्टम् ॥ ६ ॥

अथ खल्वेतयर्चा पच्छ आचामति।

(एतया मन्त्रस्यैकैकपादेनैकैकग्रासं भक्षयेदित्यर्थः) वक्ष्यमाणयर्चा पच्छः पादशो मन्थं भक्षयतीत्यर्थः। 'तत्सवितुर्वृ-णीमहे वयं देवस्य भोजनम्। श्रेष्ठꣳ सर्वधातमं तुरं भगस्य धीमहि' अस्याश्चर्चोऽयमर्थः—वयं श्रेष्ठं सर्वधातमं सर्वधारकं (१) तद्विशिष्टं भोजनं सवितुर्देवस्य सवितुर्देवाद्वृणीमहे प्रार्थयामहे। अत्र प्राणस्य सवितुश्चा-भेदेन सवितुरित्युक्तिः। अथ तद्दत्तेन भोजनेन संतुष्टाः सन्तस्तुरं तूर्णं शीघ्रं भगस्य सूर्यस्य देवस्य धीमहि ध्यायेमेत्यर्थः। स्वरूपमित्यध्याहारः। अथ वा संबन्धसामान्ये षष्ठी सवितारं ध्यायेमेत्यर्थः।

तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य
भोजनमित्याचामति श्रेष्ठꣳ सर्वधातममित्या-
चामति तुरं भगस्य धीमहीति सर्वं पिबति।

स्पष्टोऽर्थः।

निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः
संविशति चर्मणि वा स्थण्डिले वा।

कंसाकारं चमसाकारं वौदुम्बरपात्रं प्रक्षाल्याग्नेः पश्चादजिने वा केवलभूम्यां वा प्राक्शिराः शयीत।

शयाने नियममाह—

वाचंयमोऽप्रसाहः।

वाचंयमो वाग्यतः सन्, अप्रसाहो न प्रसह्यत इत्यप्रसाहः। अनिष्ट-स्वप्नदर्शनेन यथा नाभिप्लुतो भवति तथा संयतचित्तः सन्नित्यर्थः।

स यदि स्त्रियं पश्येत्समृद्धं कर्मेति विद्यात् ॥ ७ ॥

तत् तस्मिन्स्वप्नविषये एषः श्लोको भवतीत्यर्थः। श्लोकमेवाह— यदेत्यादि॥

तदेष श्लोको यदा कर्मसु काम्येषु स्त्रियꣳ स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने तस्मिन्स्वप्ननिदर्शने ॥ ८ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य द्वितीयः खण्डः ॥ २ ॥

---

तस्मिन्स्वप्ननिदर्शने। अत्र सतीति शेषः। समृद्धिं कर्मनिष्पत्तिमित्यर्थः। द्विरुक्तिर्विद्यासमाप्त्यर्था। एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्, [ ब्र० सू० ३।४।२८ ] इत्यत्र 'न ह वा एवंविदि किंचनानन्नं भवति' [ । २।१ ] इति च्छान्दोग्ये 'नह वा अस्यानन्नं जग्धं भवति' [ ६।१।१४ ] इति वाजसनेयके च श्रवणाद्वामदेव्योपासनानिष्ठस्य प्रार्थयमानसर्वयोषिदपरिहारानुमतिवत्सर्वान्नानुमतिः प्राणविद्यानिष्ठस्य सर्वदा क्रियत इति पूर्वपक्षे प्राप्त उच्यते—'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्। [ ब्र० सू० ३।४।२८ ] प्राणात्यय एव प्राणविदः सर्वान्नानुज्ञानं न सर्वदा। ब्रह्मविदोऽप्युषस्तेः प्राणात्यय एवोच्छिष्टाशनस्य दर्शनेन प्राणविदः सर्वान्नानुमतेरापद्विषयत्वस्य किं पुनर्न्यायसिद्धत्वात्। 'अबाधाच्च' [ ब्र० सू० ३।४।२९ ] 'आहारशुद्धौ सत्त्वशुद्धिः' [ छा० ७।२६।२। ] इति शास्त्राबाधार्थमप्येवमेव न्याय्यमितरथा तस्य बाधः स्यात्। 'अपि च स्मर्यते' [ ब्र० सू०३।४।३० ]

प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥ [मनु०१०।१०४]

इति स्मरणाच्च सर्वान्नीनत्वमापद्विषयम्। 'शब्दश्चातोऽकामकारे' [ ब्र० सू० ३।४।३१ ]। 'तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजाः' इति कठसंहितायां कामकारप्रतिषेधकशब्ददर्शनात्पाप्मना संसृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबतीति हि तस्याः श्रुतेरर्थः। ननु ब्रह्मविद उषस्तेः प्राणात्यये सर्वान्नीनत्वदर्शनात्प्राणविदः सर्वान्नीनत्वस्याऽऽपद्विषयत्वं कैमुतिकन्यायेन सिध्यतीत्यनुपपन्नम्। वामदेव्योपासननिष्ठस्य सर्वयोषिदपरिहारवत्प्राणविद्यानिष्ठस्य वचनव-

लात्सर्वान्नीनत्वमिति वदन्तं प्रत्येतस्यानुत्तरत्वादिति चेन्न । वामदेव्योपासनस्य 'न कांचन परिहरेत्तद्व्रतम्' [ छा० २।१३।२ ] इति सर्वयोपिदपरिहारेऽपि स्पष्टविधिश्रवणात्, प्रकृते च 'न ह वा एवंविदि किंचनानन्नं भवति' [छा० ५।२।१] इत्यत्र सर्वान्नभक्षणविधेः कल्प्यत्वात्, प्रत्यक्षनिषेधविरोधे च विधिकल्पनानुदयेनार्थवादत्वस्यैव युक्तत्वात्सर्वप्राण्यन्ने 'यत्किंचिदिदमा श्वभ्य आ शकुनिभ्यः' [छा० ५।२।१] इति विहितस्य प्राणान्नत्वचिन्तनस्य स्तुतिमात्रं क्रियते 'न ह वा एवंविदि किंचनानन्नं भवति' इति । न चैवं सति निषेधशास्त्रविरोधात् 'एवंविदि पापं कर्म न श्लिष्यते' [छा० ४।१४।३] इत्यादेरपि स्तुतिमात्रत्वप्रसङ्ग इति वाच्यम् । पाप्मनामश्लेषाभावेऽनिर्मोक्षप्रसङ्गेन सकलपापाश्लेषस्य मोक्षविधिशास्त्रापेक्षितत्वेन फलविधित्वस्य वक्तव्यत्वात्प्राणविद्यायाश्च ज्येष्ठत्वादिफलकत्वेन फलाकाङ्क्षाया अभावादिति स्थितम् । तथा गुणोपसंहारपादे 'लम्भुको ह वासो भवति' [ छा० ५।२।२] इत्यर्थवादोपबृंहितात् 'किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' [छा०५।२।२] इति च्छान्दोग्ये श्रवणाद्वासस्त्वचिन्तनमिति प्रतीयते । बृहदारण्यके काण्वशाखायां 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाऽऽचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' [बृह० माध्य० ६।१।१४ ] इति वाक्येऽनग्नं कुर्वन्त इति श्रवणाद्वासस्त्वचिन्तनमपि प्रतीयते, आचामन्तीत्याचमनविधिरपि प्रतीयते । माध्यंदिनशाखायां 'तस्मादेवंविदशिष्यन्नाचामेदाशित्वा चाऽऽचामेदेतमेव तदनमनग्नं कुरुते' [बृह० माध्य० ६।२।१५] इत्यनग्नत्वचिन्तनाद्वासस्त्वचिन्तनविधिरपि प्रतीयते, आचामेदित्याचमनविधिप्रत्ययश्रवणादाचमनविधिः स्पष्टं प्रतीयते । तत्र द्वयोरपि विधेयत्वे गौरवादेकस्यैव विधेयत्वे वक्तव्य आचामेदित्याचमने स्पष्टविधिप्रत्ययश्रवणात्स्मृत्याचारप्राप्ताचमनातिरिक्तमाचमनान्तरं प्रतीयते, वासस्त्वादिश्रवणं तु कथंचित्स्तुतिरूपतया नेतव्यमिति पूर्वपक्षे प्राप्तेऽभिधीयते—'कार्याख्यानादपूर्वम्' [ब्र० सू० ३।३।१८] । कार्याख्यानाद्विधेरप्राप्तविधानस्वाभाव्यात्, आचमनस्य च स्मृत्याचाराभ्यामेव प्राप्तत्वादाचमनान्तरविधाने विनिगमकानुपलम्भादप्राप्तमाचमनीयास्वप्सु वासस्त्वानुचिन्तनं विधीयते । छान्दोग्य आचमनस्यैवाप्रतीतेः शाखान्तरेऽपि वासस्त्वानुसंधानस्यानुगतत्वात्तदेव विधीयत इति स्थितम् । ननु कथं वागादीनामचेतनानामुक्तिप्रत्युक्तिपरम्परेति चेन्न ।

(४) तदनुप्रविष्ट तदभिमान्याग्न्याद्यभिधानान्नानुपपत्तिः। इति ग्र-
शाखापाठः॥



वागादिशब्दानाम् 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' [ब्र० सू० २।१।५] इति सूत्रोक्तन्यायेन तदभिमानिदेवतापरत्वात्। तत्र हि 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' [ब्र० सू० २।१।४] ब्रह्मणो जगद्विलक्षणत्वेनोपादानत्वं न संभवति। घटरुचकादिषु हि सलक्षणानामेव मृत्सुवर्णादीनामुपादानत्वं दृष्टं प्रकृते च ब्रह्म-जगतोर्विलक्षणत्वं। 'विज्ञानं चाविज्ञानं च' [तै० २।६।१] इति ब्रह्मजगतोर्विज्ञानत्वाविज्ञानत्वप्रतिपादकशब्दादेवावगम्यते। ननु जगतोऽचेतनत्वे 'मृदब्रवीत्' [श० प० ब्रा० ६।१।३।२] इत्यचेतनाया मृदो वक्तृत्वं नोपपद्यते तत्राऽऽह 'अभिमानिव्यपदेशस्तु विशेषा-नुगतिभ्याम्।' [ब्र० सू०२।१।५] मृदादिशब्दैस्तत्तदभिमानिदेवता व्यप-दिश्यन्ते 'हन्ताहमिमास्तिस्रो देवताः' [छा०६।३।२] इति तेजोबन्नानां देवताशब्देन विशेषणादचेतनानां च देवतात्वासंभवात्तदभिमानिनी देवता तेजोबन्नादिशब्दैर्व्यपदिश्यत इत्यध्यवस्यामः। अग्निर्वाग्भूत्वा मुखं प्राविश-दित्यग्नेर्वाच्यनुप्रवेशरूपानुगतिश्रवणाद्वागादिशब्दैस्तदनुप्रवेशेन तदात्मभू-ताग्न्याद्यभिधानान्नानुपपत्तिः। अतश्चेतनस्य ब्रह्मणोऽचेतनजगदुपादा-नत्वं न संभवतीति पूर्वपक्षे प्राप्त उच्यते 'दृश्यते तु' [ब्र०सू०२।१।६]। तुशब्दश्चोद्यव्यावृत्त्यर्थः। विलक्षणेभ्योऽपि गोमयादिभ्यो वृश्चिकादेरुत्प-त्तिदर्शनाद्विलक्षणाद्ब्रह्मणो विलक्षणजगदुत्पत्तिरुपपद्यते। 'असदिति चेन्न प्रतिषेधमात्रत्वात्।' [ब्र० सू०२।१।७] विलक्षणादुपादाना-द्विलक्षणोत्पत्त्यङ्गीकार उपादेयस्योत्पत्तेः प्राग्विलक्षणोपादानात्मन्यव-स्थानस्य वक्तुमशक्यत्वेनासत्कार्यवादप्रसङ्ग इति चेन्न। उपादानोपा-देययोः सालक्षण्यनियमप्रतिषेधमात्र एवास्माकं संरम्भः। सूक्ष्मचिद-चिद्विशिष्टं ब्रह्म स्वस्माद्विलक्षणजगदाकारेण परिणमत इत्येतत्तु न त्यक्तम्। अत्र चोदयति—'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' [ब्र० सू० २।१।८]। ब्रह्मण एव जगद्रूपेण परिणामे तयोरैक्यादप्ययोदिषु सर्वद-शास्वचेतनगता दोषा ब्रह्मणि स्युः। ततश्च ब्रह्मणो निरनिष्टत्वनिरव-द्यत्वप्रतिपादकश्रुत्यसामञ्जस्यं भवति। तत्र सिद्धान्तमाह—'न तु दृष्टान्तभावात्' [ब्र० सू० २।१।९]। न त्वेवं संभवति यथा बालस्य युवानं प्रत्युपादानत्वेऽपि बालयुवादिशब्दैरात्मनोऽभिधानेऽपि बालत्व-युवत्वादिभिर्नाऽऽत्मा दूष्यत एवमेव नाचेतनगतैर्दोषैरात्मा दूष्यते। 'स्वपक्षदोषाच्च' [ब्र० सू० २।१।१०]। निर्विकारस्य चिन्मात्रैकरसस्य

पुरुषस्य प्रकृतिसंनिधानेन प्रकृतिधर्माध्यासनिबन्धना जगत्प्रवृत्तिरिति सांख्यपक्षोऽपि दुष्ट एव । 'तर्काप्रतिष्ठानादपि' [ब्र० सू० २।१।११] । तर्काणामन्योन्यव्याघातेनाप्रतिष्ठितत्वादपि तन्मूलप्रधानकारणवादस्त्याज्य एव। 'अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः' [ब्र०सू० २।१।११]। यथा प्रतिकूलतर्कपराहतिर्न भवति तथा सत्तर्कैः प्रधानकारणत्वमनुमीयत इति चेदेवमपि कालान्तरे त्वत्तोऽतिशयितानां तर्ककुशलानां संभवेन प्रतिकूलतर्कपराहतिदोषानिस्तारात् । तस्माद्ब्रह्मणो जगदुपादानत्वं न दुष्यतीत्युक्तम् । अतो वागादीनां वक्तृत्वे नानुपपत्तिरिति स्थितम् । प्रकृतमनुसरामः ॥ ८ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य द्वितीयः खण्डः ॥ २ ॥

---

प्रकृतिविविक्तजीवयाथात्म्यविषयां पञ्चाग्निविद्यां संसृतिवैराग्याय प्रस्तौति—

श्वेतकेतुर्हाऽऽरुणेयः पञ्चालानाꣳ समितिमेयाय।

अरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयः श्वेतकेतुः पञ्चालानां जनपदानां सभामाजगाम ।

तꣳ ह प्रवाहणो जैवलिरुवाच ।

जीवलस्यापत्यं जैवलिर्नामतः प्रवाहणस्तं श्वेतकेतुमुक्तवान् ।

कुमारानु त्वाऽशिषत्पितेति ।

हे कुमार त्वा त्वां तव पिताऽन्वशिषत्किमनुशिष्टवान्किमित्यपृच्छदित्यर्थः ।

इतर आह—

अनु हि भगव इति ॥ १ ॥

हे भगवः पूजार्हानुशिष्टोऽस्मीति ॥ १ ॥

एवमुक्तो जैवलिः पप्रच्छ—

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति ।

प्रजा इतोऽधीत ऊर्ध्वं यत्प्रयन्ति तद्वेत्थ जानीषे किं कर्मिणां गन्तव्यो देशः क इत्यर्थः । इतर आह—

न भगव इति ।

जान इति शेषः । पुनः पृच्छति—

वेत्थ यथा पुनरावर्तन्त ३ इति ।

कर्मिणां पुनरावृत्तिप्रकारः क इत्यर्थः । इतर आह—

न भगव इति ।

पुनः पृच्छति—

वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति ।

देवयानपितृयाणयोर्व्यावर्तने भेदके रूपे किं वेत्थेत्यर्थः । केन प्रकारेण तयोर्भेद इत्यर्थः । इतर आह—

न भगव इति ॥ २ ॥

पुनः पृच्छति—

वेत्थ यथाऽसौ लोको न संपूर्यता ३ इति ।

अस्माल्लोकादनवरतं गच्छद्भिः पुरुषैः कस्माद्धेतोर्द्युलोको न संपूर्यत इत्यर्थः । वाजसनेयके समानप्रकरणे 'वेत्थ यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता ३ इति' [बृ० ६।२।२] इति श्रवणादमुष्य लोकस्याप्राप्ता क इति प्रश्नस्य फलितार्थः ॥ ३ ॥

इतर आह—

न भगव इति ।

पुनः पृच्छति—

वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति ।

आप इति भूतान्तराणामप्युपलक्षणम् । भूतसूक्ष्माणि पञ्चम्यामाहुतौ यथा येन प्रकारेण पुरुषवचसः पुरुष इति वचो यासां ताः पुरुषवचसः पुरुषशब्दाभिलप्या इत्यर्थः । कस्य पञ्चम्यामाहुतावित्यपेक्षायां पुरुषवचस्त्वभवनकर्तृतया निर्दिष्टा आप एव हूयमानतया संबध्यन्ते । असंनिहितार्थान्तरकल्पने गौरवात् । ततश्चापां पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्यर्थः । ततश्चापामेव पञ्चस्वप्याहुतीषु हूयमानत्वमिति सिध्यतीति द्रष्टव्यम् । इतर आह—

नैव भगवत इति ॥ ३ ॥

अत्र रंहत्यधिकरणे [ब्र० सू० ३ । १ । १] भगवता भाष्यकृता—कर्मिणां गन्तव्यदेशं, पुनरावृत्तिप्रकारं, देवयानपितृयाणपथव्यावर्तने,

अमुष्य लोकस्याप्राप्तारं च वेत्थेति पृष्ट्वा वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति ' पप्रच्छेति भाषितम् ॥ ३ ॥

एवमुक्तवन्तं श्वेतकेतुं राजा प्रत्याह—

अथानु किमनुशिष्टोऽवोचथा यो हीमानि
न विद्यात्कथꣳ सोऽनुशिष्टो ब्रुवीतेति ।

किं कस्मादनुशिष्टोऽस्मीत्युक्तवानसि । यो हीमान्यर्थजातानि न जानीयात्स कथमनुशिष्टोऽस्मीति वदेत् । यद्वा किमनुशिष्टः किमर्थमनुशिष्ट इत्यर्थः ।

स हाऽऽयस्तः पितुरर्धमेयाय ।

स श्वेतकेतू राज्ञा जैवलिनाऽऽयासितः सन्पितुः स्थानमेयाय जगाम ।

तꣳ होवाचाननुशिष्य वाव किल मा
भगवानब्रवीदनु त्वाऽशिषमिति ॥ ४ ॥

गत्वा च तं पितरमित्थमुवाच मामननुशिष्य समावर्तनकालेऽनुशासनीयानि सर्वाण्यननुशिष्यैव त्वामन्वाशिषमिति भगवान्मां प्रत्यब्रवीदित्यर्थः ॥ ४ ॥

तत्कथमित्यत्राऽऽह—

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षी-
त्तेषां नैकंचनाशकं विवक्तुमिति ।

(त्वया सम्यगनुशिष्टस्य कथमियमशक्तिः स्यादिति भावः।)

राजन्यबन्धुर्मां पञ्च प्रश्नानप्राक्षीत्तेषां मध्य एकंचनैकमपि प्रश्नं विवक्तुं विशिष्य वक्तुं नाशकं न शक्तोऽभूवमिति पितरमुवाचेत्यर्थः । राजन्या बन्धवो यस्य स राजन्यबन्धुः, राजन्यानां बन्धुरिति वा । स्वयमराजन्य इत्यर्थः । राजन्याभास इति यावत् ।

स होवाच यथा मा त्वं तदैतानवदो
यथाऽहमेषां नैकंचन वेद यद्यहमि-
मानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥

त्वं मां प्रति तदाऽऽगमनकाल एतान्प्रश्नान्यथाऽवदस्तेषां नैकंचनाशकं विवक्तुमिति यथोक्तवानसि तथाऽहमपि तेषां मध्य एकंच-

नैकमपि यथा यथावत्सत्यमित्यर्थः । न वेद नाज्ञासिषम् । यद्यज्ञासिषं तर्हि ते प्रियाय पुत्राय समावर्तनकाले कुतो नावक्ष्यमिति ॥ ५ ॥

स ह गौतमो राज्ञोऽर्धमेयाय ।

एवमुक्त्वा गोत्रतो गौतम आरुणी राज्ञः स्थानमाजगाम ।

तस्मै ह प्राप्तायार्हां चकार ।

प्राप्ताय तस्मै गौतमाय राजाऽर्हां पूजां चकारेत्यर्थः ।

स ह प्रातः सभाग उदेयाय । (स गौतमः

ततः स प्रातःकाले राज्ञि सभागे सभागते सत्युदेयाय गौतम आजगाम । यद्वा भाजनं भागः पूजा तेन युक्तोऽर्घ्यादिभिः पूज्यमानः समागत इत्यर्थः ।

तꣳ होवाच । राजा गौतमं वक्ष्यमाणमुक्तवानित्यर्थः ।

तꣳ होवाच मानुषस्य भगवन्गौतम वित्तस्य वरं वृणीथा इति ।

हे भगवन्गौतम मनुष्यसंबन्धिवित्तसंबन्धिवरं वृणीष्वेत्युवाचेत्यर्थः ।

स होवाच । स गौतमः प्रत्युवाचेत्यर्थः । तदेवाह — तवैवेत्यादि ।

स होवाच तवैव राजन्मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति ।

हे राजन्मानुषं वित्तं तवैव तिष्ठतु तेन मम न किंचित्प्रयोजनम् । किंतु मत्पुत्रस्य समीपे पञ्चप्रश्नलक्षणां यां वाचमुक्तवानसि तामेव मे ब्रूहीति ।

स ह कृच्छ्री बभूव ॥ ६ ॥

तꣳ ह चिरं वसेत्याज्ञापयांचकार ।

एवमुक्तो राजा गौतमस्याप्रत्याख्येयतां ज्ञात्वा कृच्छ्री दुःखितो बभूव, तं च गौतमं विद्यार्थं चिरं वसेत्याज्ञप्तवान् ।

तꣳ होवाच । एवमाज्ञाप्य राजा तं गौतमं पुनरुवाच ।

तꣳ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति तस्मादु सर्वेषु लोकेषु क्षत्त्रस्यैव प्रशासनमभूदिति ।

हे गौतम त्वं मां यथाऽवदः । तथा करिष्यामीति शेषः । इयं वक्ष्यमाणा विद्या पुरा विद्यमानाऽपि यथा येन प्रकारेण यस्माद्धेतोरिति

गच्छति न) क्षत्रस्यैव प्रशासनमभूत्

यावत्, त्वत्तः प्राग्ब्राह्मणान्न प्राप्तवती तस्मात्सर्वेषु लोकेषु क्षत्रियजातेरेवैतद्विद्योपदेष्टृत्वम् । अतो ब्राह्मणेष्वेतद्विद्याया अभावाद्ब्राह्मणानामेव समीपं गमिष्यामीति बुद्धिर्न कार्या चिरवासाज्ञापनमपि सोढव्यमिति भावः ।

तस्मै होवाच ॥ ७ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य तृतीयः खण्डः ॥ ३ ॥

---

अथ [redacted] चिरकालमुषितवते तस्मै राजा विद्यामुपदिदेशेत्यर्थः ॥ ७ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य तृतीयः खण्डः ॥ ३ ॥

---

तत्र वेत्थ यथा पञ्चम्यामाहुतावाप इति पञ्चमप्रश्नप्रतिवचनस्येतरप्रतिवचनानुकूलत्वात्प्रथमतस्तदेवाऽऽह—

असौ वाव लोको गौतमाग्निः ।

हे गौतमासौ लोकः स्वर्गलोक एवाग्निः ।

तस्याऽऽदित्य एव समित् ।

आदित्येन हि द्युलोको दीप्यते ।

रश्मयो धूमः ।

धूमस्य समित्प्रभवत्वादादित्यरश्मीनां धूमत्वम् ।

अहरर्चिः ।

प्रकाशकत्वात् ।

चन्द्रमा अङ्गाराः ।

अर्चिष्प्रशमकालप्रभवत्वाच्चन्द्रमसोऽङ्गारत्वम् ।

नक्षत्राणि विस्फुलिङ्गाः ।

चन्द्रावयववदुपलभ्यमानत्वाद्विस्फुलिङ्गत्वम् ।

५८

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति ।

आदित्यादिलक्षणसमिदाद्युपेते द्युलोकलक्षणाग्नौ देवा इन्द्रियाणि श्रद्धां 'श्रद्धा वा आपः' इति श्रुतेः श्रद्धाशब्दिता अपो जुह्वति। आत्मधर्मभूतबुद्धिविशेषलक्षणश्रद्धाया होतव्यत्वासंभवाच्छ्रद्धाशब्देनाऽऽप एवोच्यन्त इति द्रष्टव्यम् । न चेन्द्रियाणां द्युलोकाग्नौ भूतसूक्ष्मरूपाहुतिप्रक्षेपकर्तृत्वं कथमिति वाच्यम् । इन्द्रियाणामभावे भूतसूक्ष्माणां जीवं परिष्वज्य द्युलोकगमनासंभवादिन्द्रियाणां होतृत्वमुपपद्यत इति द्रष्टव्यम् । द्युलोकादिप्रापककर्मणामिन्द्रियाधीनत्वाद्वा तथोक्तिरिति द्रष्टव्यम् ।

तस्या आहुतेः सोमो राजा संभवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
चतुर्थः खण्डः ॥ ४ ॥

---

एवं स्वकर्मभिर्द्युलोकं गतो जीवः स्वर्गभोगयोग्यदिव्यदेहयुक्तो भवतीत्यर्थः। न चाप्शब्दितानां भूतसूक्ष्माणां सोमराजभावे कथिते कथं जीवस्य सोमराजभाव उपपद्यत इति वाच्यम् । उत्तरत्र पितृयाणे 'एष सोमो राजा' [छा० ५।१०।४] इति चन्द्रमसं प्राप्तस्य जीवस्य सोमराजभावश्रवणादत्र निर्दिश्यमानसोमराजभावस्यापि भूतसूक्ष्मपरिष्वक्तजीवविषयत्वात् ।

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
चतुर्थः खण्डः ॥ ४ ॥

---

पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो
विद्युदर्चिरशनिरङ्गारा ह्रादनयो विस्फुलिङ्गाः ॥१॥
तस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति
तस्या आहुतेर्वर्षꣳ संभवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

---

पर्जन्यो वृष्टिप्रवर्तको देवः । ह्रादनयो मेघगर्जितानि । अत्र वाय्वादीनां समिदादिकल्पनानिमित्तं यथायोग्यमन्वेषणीयम् । द्युलोकभोगनिमित्तकर्मावसाने सोमराजशब्दितः स देहो द्रवीभूय सह जीवेन मेघमण्डले पततीत्यर्थः । शिष्टं स्पष्टम् ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

---

पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समित् ।

संवत्सरेण कालेन समिद्धा हि पृथिवी सस्यादिनिष्पत्तये भवति ।

आकाशो धूमो रात्रिरर्चिः ।

नीलरूपाश्रयपृथिव्यग्नेरनुरूपत्वाद्रात्रेरर्चिष्ट्वम् ।

दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति
तस्या आहुतेरन्नꣳ संभवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
षष्ठः खण्डः ॥ ६ ॥

---

श्रद्धाशब्दवाच्यानि भूतसूक्ष्माणीन्द्रियसंयुक्तानि स्वर्गभोगयोग्यदेहाकारेण परिणतानि सुकृतक्षये द्रवीभूतानि सन्ति पर्जन्यमवाप्य वर्षरूपाणि भूत्वा पृथिवीं प्राप्य व्रीहियवाद्यन्नानि भवन्तीत्यर्थः ॥१॥२॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
षष्ठः खण्डः ॥ ६ ॥

---

पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो
जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ॥ १ ॥

वाचा हि समिध्यते पुरुषो नावाग्मी, अतो वाक्समित् । एवमन्यद्द्रष्टव्यम् ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति
तस्या आहुते रेतः संभवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
सप्तमः खण्डः ॥ ७ ॥

---

एवं व्रीह्याद्यन्नरूपाणि भूतसूक्ष्माणि जीवसंश्लिष्टानि पुरुषेणाद्यमानानि पुरुषरेतोरूपेण परिणमन्त इत्यर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
सप्तमः खण्डः ॥ ७ ॥

---

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समि-
द्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति
तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥ १ ॥
तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति
तस्या आहुतेर्गर्भः संभवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्या-
ष्टमः खण्डः ॥ ८ ॥

---

उपमन्त्रणं संकेतकरणम् । लोहितत्वाद्योनेरर्चिष्ट्वम् । अन्तःकरणं मिथुनीकरणम् । अभिनन्दास्तज्जन्यसुखलवाः । रेतोरूपाणि तानि योनिद्वारा स्त्रियं प्रविश्य गर्भत्वेन परिणमन्त इत्यर्थः ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्या-
ष्टमः खण्डः ॥ ८ ॥

---

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति ।
उक्तप्रकारेण श्रद्धासोमवृष्ट्यन्नरेतोरूपाहुतीनां मध्ये रेतोरूपायां

पञ्चम्यामाहुतावप्छाब्दितानि भूतसूक्ष्माणि पुरुषशब्दाभिलपनीयानि भवन्तीत्यर्थः । इतिशब्दः पञ्चमप्रश्नप्रतिवचनसमाप्तिद्योतनार्थः ।

स उल्बावृतो गर्भो दश वा मासानन्तः
शयित्वा यावद्वाऽथ जायते ॥ १ ॥

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय
एव हरन्ति यत एवेतो यतः संभूतो भवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
नवमः खण्डः ॥ ९ ॥

---

स गर्भ उल्बेन जरायुणा वेष्टितः सन्दश वा मासान्यावद्वा नव वैकादश वा द्वादश वा मातुः कुक्षौ शयित्वाऽथानन्तरं जायते। जातश्च यावदायुर्जीवति । आयुःक्षयसमय एव तं प्रेतं पुरुषं दिष्टं परलोकाय निर्दिष्टम् । यद्वा दिष्टं कर्मानुसृत्य यतो द्युलोकपर्जन्याद्यग्नेरिहाऽऽगतो यतश्च योषिद्रूपाग्नेरुत्पन्नस्तस्मादग्नय एव देवा हरन्ति । ततश्च द्युपर्जन्यपृथिवीपुरुषयोषित्सु पुनरपि संभवतीत्यर्थः । अयं चोपन्यासो वैराग्यहेतोः । कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्बाशुचिपूर्वावृतस्य शुक्रशोणितबीजस्य मातुराशितपीतरसानुप्रवेशेन विवर्धमानस्य निरुद्धवीर्यबलशक्तितेजःप्रज्ञाचेष्टस्य बहुकालं शयनं, ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिः, कर्मणोपात्तं यावदायुस्तावदेव जीवनं, पुनरपि घटीयन्त्रकुण्डिकान्यायेनाऽऽरोहणावरोहणलक्षणं भ्रमणं हि श्रूयमाणं वैराग्यमापादयति । अत एतदुपन्यस्तमिति द्रष्टव्यम् ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
नवमः खण्डः ॥ ९ ॥

---

अथ वेत्थ पथो दैवयानस्य पितृयाणस्य च व्यावर्तना ३ इति तृतीयं प्रश्नं प्रतिवक्ति—

तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा
तप इत्युपासते तेऽर्चिषमभिसंभवन्ति।

प्राक्प्रस्तुतस्य संसरतो जीवस्य स्वरूपं तदित्यनेन परामृश्यते। तत्प्रत्यगात्मस्वरूपं य इत्थमुक्तप्रकारेण द्युपर्जन्यपृथिवीपुरुषयोषित्सु श्रद्धासोमवृष्ट्यन्नरेतःशरीरकतया देहादिलक्षणप्रकृतिविविक्ततया च ये विदुरित्यर्थः। तत्र ब्रह्मात्मकतया चेत्यपि योजनीयम्। भाष्यकृता—'अप्रतीकालम्बनात्' [ब्र० सू० ४।३।१५] इति सूत्रे "पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणादर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च। अत एव तत्क्रतुन्यायेन प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसंधानं सिद्धमिति" भाषितम्। अरण्ये स्थित्वा श्रद्धां पुरस्कृत्य तपःशब्दितं ब्रह्मोपासत इत्यर्थः। वाजसनेयके समानप्रकरणे 'श्रद्धां सत्यमुपासते' [बृ० ६।२।१५] इति श्रवणात्सत्यशब्दस्य ब्रह्मपरत्वात्तपःशब्दोऽपि ब्रह्मपरः। 'अनियमः सर्वेषाम्' [ब्र० सू० ३।३।३१] इत्यधिकरणे भगवता भाष्यकृता "'तद्य इत्थं विदुः' 'य एवमेतद्विदुः' [बृ० ६।२।१५] इति पञ्चाग्निविद्यानिष्ठान् 'ये चेमे' इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्चोद्दिश्यार्चिरादिका गतिरुपादिश्यते। 'सत्यं ज्ञानमनन्तं ब्रह्म' [तै० २।१।१] सत्यं त्वेव विजिज्ञासितव्यम् [छा० ७।१६।१] इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः। तपःशब्दस्यापि तेनैकार्थ्यात्सत्यतपःशब्दाभ्यां ब्रह्मैवाभिधीयते। श्रद्धापूर्वकं ब्रह्मोपासनं चान्यत्र श्रुतम्। सत्यं त्वेव विजिज्ञासितव्यमित्युपक्रम्य 'श्रद्धा त्वेव विजिज्ञासितव्या' [छा०७।१९।१] इति श्रुतेरिति" हि भाषितम्। उक्तं च व्यासार्यैः—"परमं यो महत्तप इत्यादिषु तपःशब्दस्य ब्रह्मपरत्वमिति"। अत्र वाजसनेयके 'श्रद्धां सत्यम्' [बृ० ६।२।१५] इति श्रद्धाशब्दस्य द्वितीयान्तत्वश्रवणादिहापि श्रद्धाशब्दो द्वितीयान्तः। छान्दसत्वात्सुपां सुलुगिति सुपो लुक्। ततश्च पुरस्कृत्येत्यध्याहारः। श्रद्धां पुरस्कृत्य ब्रह्मोपासत इत्यर्थः। इतिस्त्वविवक्षितः। अथ वैवकारोऽत्राध्याहर्तव्यः। ब्रह्मेत्येव य उपासत इत्यर्थः। ततश्चाब्रह्मोपासनव्यावृत्तिफलकोऽयमितिशब्दो द्रष्टव्यः। यद्वा श्रद्धातपःशब्दयोः प्रसिद्ध एवार्थः। श्रद्धातपःपरायणानां च ब्रह्मविद्यानिष्ठत्वमर्थसिद्धम्। ततश्च ब्रह्मविद्यानिष्ठ इत्यर्थः फलति। अयमर्थस्तदप्यविरुद्धमार्थत्वादपि शाब्दत्वं संभवेद्यु-

क्रमिति वदतां व्यासार्याणामनुमत एव। तेऽर्चिषमभिसंभवन्ति। अर्चिर्देवतामातिवाहिकतया प्राप्नुवन्तीत्यर्थः।

अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान् ॥ १ ॥

मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति।

अत्रार्चिरादिशब्दास्तदभिमानिदेवतापराः। तत्पुरुषो वैद्युतः पुरुषः। अमानवोऽसंसारी। ब्रह्मलोकादागत्यैनान्पूर्वोक्तद्विविधोपासकान्ब्रह्मलोकं प्रापयतीत्यर्थः। 'अमानवः स एत्य ब्रह्मलोकान्गमयति' [बृ० ६।२।१५] इति श्रुत्यन्तरे श्रवणात्।

एष देवयानः पन्था इति ॥ २ ॥

स्पष्टोऽर्थः ॥ २ ॥

अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति।

ये पुरुषा ग्राम एव स्थिता इष्टं यागादि पूर्तं खातादि दत्तं दानम्। इतिशब्दस्तज्जातीयोपवासादिकर्मान्तरपरः। यागदानहोमादीनि कर्माणि येऽनुतिष्ठन्तीत्यर्थः। उक्तप्रकारेणानुतिष्ठन्तीत्यर्थ इति व्यासार्यवचनस्याप्ययमेवार्थः। श्रुतौ पूर्वमनुष्ठानप्रकाराननुवृत्तेः। यद्वा श्रद्धापूर्वकत्वरूपोक्तप्रकारवाचीतिशब्दः। ते धूममभिसंभवन्ति धूमदेवतां प्रतिपद्यन्त आतिवाहिकत्वेनेत्यर्थः।

धूमाद्रात्रिꣳ रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासाꣳस्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥

अत्रापि धूमादिशब्दास्तत्तदभिमानिदेवतापराः। दक्षिणां दिशमादित्य एति। 'दक्षिणादाच्' इत्याजन्तोऽयं शब्दः। दक्षिणायनमासान्प्राप्यापि विद्वांस एव न संवत्सरं प्राप्नुवन्तीत्यर्थः ॥ ३ ॥

पुनः किं प्राप्नुवन्तीत्यत्राऽऽह—

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम् ।

स्पष्टोऽर्थः । 'एतेन वेत्थ यदितोऽधि प्रजाः प्रयन्तीति' [छा० ५।३।२] इति प्रथमः प्रश्नः प्रत्युक्तो भवति ।

एष सोमो राजा ।

अत्रैष इत्यनेन नाभिसंभाव्यश्चन्द्रमाः परामृश्यते चन्द्रमसः सोमराजभावोपदेशस्य व्यर्थत्वात् । अपि त्विष्टादिकार्यभिसंभविता परामृश्यते । 'तस्या आहुतेः सोमो राजा संभवति' [छा० ५।४।२] इति न्यायेन स्वर्भोगयोग्यदिव्यदेहो भवतीत्यर्थः । (क) दिव्यदेहयुक्तो—इति ग्रन्थान्तरपाठः ।

तद्देवानामन्नम् ।

अन्नवत्स देवानामुपकरणभूतो भवतीत्यर्थः ।

तं देवा भक्षयन्ति ॥ ४ ॥

तमिष्टादिकारिणं देवभावमुपगतमाजानसिद्धा देवा भक्षयन्ति स्वकैंकर्येषु पशूनिव विनियुञ्जत इत्यर्थः । सूत्रितं च 'भाक्तं वाऽनात्मवित्त्वात् । [ब्र० सू० ३ । १ । ७] इति ॥ ४ ॥

तस्मिन्यावत्संपातमुषित्वा ।

संपतत्यनेनेति संपातः कर्मशेषः । यावत्कर्मशेषमुषित्वेत्यर्थः । यावच्छब्दः साकल्यार्थः । साकल्यं च फलप्रदानप्रवृत्तकर्मविशेषविषयं न तु सर्वकर्मविषयं द्रष्टव्यम् ।

'वेत्थ यथा पुनरावर्तन्ते' [छा० ५ । ३ । २] इति द्वितीयं प्रश्नं प्रतिवक्ति—

अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम् ।

अथानन्तरमेतमेवाध्वानं धूमादिमार्गं यथेतं यथागतं पुनर्निवर्तन्ते । धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशक्रमेणाऽऽरोहणात्तेनैव विपरीतक्रमेणावरोहणे प्राप्तेऽत्र विशेषमाह—

आकाशमाकाशाद्वायुम् ।

यथाऽऽरोहण आकाशाच्चन्द्रमसमभिसंभवन्त्येवमवरोहणे चन्द्रमस आकाशमभिसंभवन्ति । आरोहणावरोहणयोराकाशाभिसंभवस्त्ववि-

शिष्ट इति भावः । आकाशाद्वायुम् । अभिसंभवन्तीति शेषः । अत्र वायुर्भूत्वा धूमो भवतीत्युत्तरत्र श्रवणादत्राप्यवरोहन्त आकाशो भवन्ति । वायुर्भवन्तीत्येवार्थः । अवरोहतां चाऽऽकाशादिभवनं न तच्छरीरकत्वम् । सर्गाद्यकालमारभ्याऽऽप्रलयमाकाशाद्यभिमानिदेवतानामन्यासां क्लृप्तानां सत्त्वेन प्रतिक्षणमवरोहतामाकाशाद्यभिमानिदेवतात्वानुपपत्तेरतस्तत्सादृश्यमेवार्थः । या आपश्चन्द्रमण्डले दिव्यशरीरमारब्धवत्यस्तासां कर्मक्षये द्रवीभूतानामाकाशगतानां भेदकाकारप्रहाणेनाऽऽकाशसादृश्ये तदुपश्लिष्टा जीवा अप्याकाशसमा उच्यन्ते ताश्चाऽऽप इतश्चामुतश्च वायुना नीयमाना वायुसमा भवन्ति । ततश्च तत्संश्लिष्टो जीवोऽपि वायुर्भवतीत्युच्यते । एवमुत्तरत्रापि द्रष्टव्यम् ।

वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥

अपो बिभर्तीत्यभ्रं मूलविभुजादित्वात्कः । ततश्चाभ्रशब्देन जलधारणावस्थोच्यते ॥ ५ ॥ (१) मेघइति रूपम् । इति पाठः

अभ्रं भूत्वा मेघो भवति ।

ततश्च मिहं सेचन इति धातोः पचाद्यच्प्रत्यये न्यङ्क्वादित्वात्कुत्वे मेघ (१) इति भवति । मेघशब्देन वर्षोन्मुखावस्थोच्यते । एवमेवाभ्रमेघयोर्भेदो व्यासार्यैरुक्तः ।

मेघो भूत्वा प्रवर्षति ।

मेघसंश्लिष्टो भूत्वा वर्षधारारूपेण भूमौ पततीति भावः ।

त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते । जायन्ता इत्यर्थः । अत्र तेन रूपेण

ते वर्षसंश्लिष्टभूतसूक्ष्मपरिष्वक्तजीवाः इह भूमौ पतित्वा व्रीहियवादिरूपेण जननं नाम न स्थावरभावप्रतिपत्तिः स्थावरत्वप्राप्तिहेतुकर्मणामिहाकीर्तनात् । किंतु जीवान्तराधिष्ठितेषु व्रीह्यादिषु संश्लेषमात्रम् । सूत्रितं च 'अन्याधिष्ठितेषु पूर्ववदभिलापात्' [ ब्र० सू० ३ । १ । २२ ] इति ।

अतो वै खलु दुर्निष्प्रपतरम् ।

अतः स्थावरादिभावादतिचिरेण निर्गमनं भवति । अत्र खलन्तादुर्निष्प्रपतशब्दादातिशायनिके तरप्प्रत्यये छान्दसे तशब्दलोपे दुर्निष्प-

५५

पतरमिति रूपम् । ततश्चातिशयस्य प्रतियोग्याकाङ्क्षायां प्रागनुक्रान्ता-काशादीनां बुद्धौ संनिधानात्तेषामेव प्रतियोगित्वेनान्वयः स्यात् । ततश्च व्रीह्यादिष्वाकाशाद्यपेक्षया चिरावस्थानोक्त्याऽऽकाशादिष्ववस्थानस्य तदपेक्षयाऽल्पकालत्वं पर्यवस्यति । उक्तं च भगवता भाष्यकृता—छान्दसस्तशब्दलोपः। दुर्निष्प्रपतरं दुःखनिष्क्रमणतरमित्यर्थ इति । न च 'तयोरेव कृत्यक्तखलर्थाः' इति खलो भावकर्ममात्रविषयत्वात्पतेश्चाकर्मकत्वेन भावार्थस्यैव परिशिष्टत्वात्तत्र च भावार्थस्य प्रकर्षाभावात्तरपो दौर्लभ्यमिति शङ्क्यम् । शिश्येतरामित्यादिप्रयोगाद्भावार्थेऽपि प्रकर्षसंभवात्कर्त्रर्थपचाद्यजन्तात्तरपः संभवाच्च भाष्यस्य नानुपपत्तिः । यद्वा 'आतो युच्' 'छन्दसि गत्यर्थेभ्यः' इति च्छन्दसि विशेषविहितखलर्थयुजन्त एवायं शब्दः । रेफरूपवर्णविकारश्छान्दसः । नन्वस्य तरप्प्रत्ययत्वाभावे पूर्वनिर्दिष्टाकाशादिभ्योऽतिशयस्तेष्वचिरावस्थानं वा कथं सिध्येदिति वाच्यम् । वैशब्दस्यावधारणार्थतयाऽतःशब्दिताद्व्रीह्यादिभावादेव चिरं निष्क्रमणे कथिते ततः पूर्वनिर्दिष्टेभ्य आकाशादिभ्योऽचिरान्निष्क्रमणं सिध्यति तशब्दलोपश्छान्दस इति भाष्यस्यापि वर्णलोपेन वा वर्णविकारेण वा यथाकथंचित्साधुत्वं समर्थनीयमित्यत्र तात्पर्यम् । व्रीह्यादयो हि गिरितटादुदकस्रोतसोह्यमाना नदीं प्राप्नुवन्ति ततः समुद्रं ततो मकरादिभिर्भक्ष्यन्ते तेऽप्यन्यैस्तत्रैव च मकरेण सह समुद्रे विलीनाः समुद्राम्भोभिः सह जलधरैराकृष्टाः पुनर्वर्षधाराभिर्मरुदेशे शिलातले वा हर्म्ये वा पतितास्तिष्ठन्ति । कदाचिद्व्यालमृगादिपीतास्ते भक्षिताश्चान्यैस्तेऽप्यन्यैरित्येवंप्रकाराः परिवर्तेरन् । कदाचिदभक्ष्येषु स्थावरेषु जातास्तत्रैव शुष्येरन् । भक्ष्येष्वपि स्थावरेषु जातानां रेतःसिग्देहसंबन्धो दुर्लभ एव बहुत्वात्स्थावराणामित्यतो दुर्निष्क्रमणत्वम् ।

यो यो ह्यन्नमत्ति यो रेतः सिञ्चति
तद्भूय एव भवति ॥ ६ ॥

अत्र स इत्यध्याहारः । यो व्रीह्यादिसंश्लिष्टोऽवरोहञ्जीवः स यो यो ऽन्नमत्ति, रेतः सिञ्चति, भूयः पश्चात्तद्भवति रेतःसिग्भावं प्राप्नोति आकाशादिभाववद्रेतःसिग्भावोऽप्यौपचारिकः । रेतःसिग्योगी भवतीत्यर्थः । एवमेव व्यासार्यैरुक्तम् ॥ ६ ॥

तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिय-

योनिं वा वैश्ययोनिं वाऽथ य इह कपूयच-
रणा अभ्याशो ह यत्ते कपूयां योनिमापद्येर-
ञ्श्वयोनिं वा सूकरयोनिं चण्डालयोनिं वा ॥७॥

तत्तेषु येऽभ्याशोऽभ्यागन्तारः । अभ्याङ्पूर्वादशेर्धातोः क्विबन्ताद्बहुवचनान्तोऽयं शब्दः । परलोकादिह लोके प्रत्यवतरन्त इत्यर्थः । हेति प्रसिद्धौ । यद्यदा रमणीयचरणाः । चर्यत इति चरणं कर्म रमणीयकर्माणो भुक्तशिष्टपरिपक्कसुकृतकर्मयुक्ता भवन्तीत्यर्थः । अत्र यदाशब्दानुरोधेन तदेत्यप्यध्याहर्तव्यम् । तदा ते रमणीयां ब्राह्मणादियोनिमाप्नुवन्तीत्यर्थः । कपूयचरणाः कुत्सितकर्माण इत्यर्थः । भुक्तशिष्टकर्मानुसारि जन्म प्राप्नुवन्तीत्यर्थः । शिष्टं स्पष्टम् ॥ ७ ॥

वेत्थ यथाऽसौ लोको न संपूर्यत३ इति चतुर्थप्रश्नं प्रतिवक्ति—

अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्रा-
ण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रिय-
स्वेत्येतत्तृतीयꣳ स्थानं तेनासौ लोको न संपूर्यते ।

अथशब्दः प्रतिवचनान्तरोपक्रमे यानि भूतान्युक्तयोरेतयोर्देवयानपितृयाणयोः पथोर्मध्ये कतरेणचन केनापि मार्गेण न गच्छन्ति मार्गद्वयप्राप्तिहेतुभूतविद्याकर्मरहिता इत्यर्थः । तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि सन्ति जायस्व म्रियस्वेति भवन्ति पुनः पुनर्जायन्ते म्रियन्त इत्यर्थः । सक्तून्पिब धानाः खादेत्ययमभ्यवहरतीत्यस्य पुनः पुनः पिबति पुनः पुनः खादतीति ह्ययमर्थस्तद्वत् । 'क्रियासमभिहारे लोट् लोटो हि स्वौ वा च तध्वमोः' इति पौनःपुन्यलक्षणक्रियासमभिहारे लोटस्तध्वमोर्हिस्वादेशविधानाज्जायस्व म्रियस्वेति रूपम् । 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' 'समुच्चये सामान्यवचनस्य' इति भवन्तीति सामान्यशब्दस्यानुप्रयोगः । उक्तं च व्यासार्यैः—'पुरीमवस्कन्द लुनीहि नन्दनमितिवदिति । एतत्तृतीयं स्थानम् । अत्रैतच्छब्देन जायस्व म्रियस्वेति भूतानि भवन्तीति प्रथमान्तशब्देन प्रधानतया निर्दिष्टाः पापकर्माणः परामृश्यन्ते सर्वनाम्नां पूर्वनिर्दिष्टप्रधानपरामर्शित्वात् । स्थानशब्दाभिप्रायेणैकवचनम् । पूर्वनिर्दिष्टद्युलोकब्रह्मलोकापेक्षया क्षुद्रजन्तुभवनादिलक्षणस्थानस्य तृतीयत्वात्तत्स्थानसंबन्धात्पापकर्माणस्तृतीयं स्थान-

मित्युच्यन्ते । तेनासौ लोको न संपूर्यते । तेन तृतीयस्थानशब्दितैः पापकर्मभिरसौ द्युलोको न संपूर्यते न प्राप्यत इत्यर्थः । अत्रैतत्तृतीयं स्थानमित्येतच्छब्देन पूर्वनिर्दिष्टः पौनःपुन्येन जननमरणादिभवनलक्षणो धात्वर्थ एव परामृश्यते तस्यैव तृतीयस्थानत्वम् । ततश्चैतस्य तृतीयस्थानस्य सद्भावादत्रैव स्थाने जीवानां प्रायेण प्रचाराद्द्युलोकगन्तृणामल्पत्वाद्द्युलोको न संपूर्यत इत्युक्तावपि न भाष्यस्य विरोधः । अत एव द्युलोकारोहावरोहाभावेन द्युलोकासंपूर्तिवचनादिति भाषितमिति द्रष्टव्यम् ।

तस्माज्जुगुप्सेत ।

यस्मात्संसारिणां गतिरुक्तरीत्या कष्टतरा तस्मात्संसाराज्जुगुप्सेत । मा भून्म एवंविधसंसारमहोदधौ पात इति निन्देदित्यर्थः ।

मुक्तिफलकपञ्चाग्निविद्यास्वरूपज्ञानस्य फलान्तरं वक्तुमाह—

तदेष श्लोकः ॥ ८ ॥

तच्छब्दः प्रसिद्धपरः । एष वक्ष्यमाणः श्लोकः इत्यर्थः ॥ ८ ॥

स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरो-
स्तल्पमावसन्ब्रह्महा चैते पतन्ति च-
त्वारः पञ्चमश्चाऽऽचरꣳस्तैरिति ॥ ९ ॥

तैराचरन्स्तेनादिभिश्चतुर्भिर्विद्यायोनिसंबन्धमाचरन्नित्यर्थः । शिष्टं स्पष्टम् ॥ ९ ॥

अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

स्तेनादिभिरुक्तमहापातकिभिरपि सह संबन्धमाचरन्पाप्मना न लिप्यते पूर्वोत्तराघशून्यो भवतीत्यर्थः । द्विरुक्तिः प्रश्नप्रतिवचनसमाप्ति-

शिष्ट स्पष्टम् ।

द्योतिका । एतत्खण्डान्तर्गतवाक्यविषयकाण्यधिकरणान्युपन्यस्यन्तेऽर्चिरादिपादे । 'कार्यं बादरिरस्य गत्युपपत्तेः' [ब्र० सू० ४ । ३ । ७] । कार्यं हिरण्यगर्भमुपासीनानेवार्चिरादिर्गणो नयतीति बादरिराचार्यो मन्यते । परिच्छिन्नप्राप्त्यर्थं हि गतिरुपपद्यते नापरिच्छिन्नपरब्रह्मप्राप्तये । न ह्याकाशं प्रेप्सता देशविशेषो गन्तव्यो भवति । 'विशेषितत्वाच्च' [ब्र० सू० ४ । ३ । ८] 'पुरुषो मानस एत्य ब्रह्मलोकान्गमयति (ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति)' [बृ० ६।२।१५] इति गन्तव्यस्य बहुवचनान्तलोकशब्देन विशेषितत्वात्परब्रह्मण एकत्वेन बहुत्वासंभवाल्लोकशब्दस्य देशविशेष एव मुख्यत्वाच्च न परब्रह्मणोऽर्चिरादिप्राप्यत्वम् । ननु 'स एतान्ब्रह्म गमयति' [छा० ५।१०।२] इति नपुंसकलिङ्गब्रह्मशब्देन चतुर्मुखस्य कथं निर्देश इत्यत्राऽऽह—सामीप्यात्तु तद्व्यपदेशः' [ब्र० सू० ४।३।९] । 'यो ब्रह्माणं विदधाति पूर्वम्' [श्वे० ६।१८] इति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्याद्ब्रह्मशब्देनामुख्यया वृत्त्या चतुर्मुखस्य निर्देश उपपद्यत इति भावः । ननु हिरण्यगर्भस्य द्विपरार्धावसाने नाशात्तं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वात् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते' [छा० ४। १५।५] इत्यनावृत्तिप्रतिपादकश्रुतिविरोधस्तत्राऽऽह—'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' [ब्र० सू० ४।३।१०] 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' [मु० ३ । २ । ६] इत्यभिधानात्कार्यस्य ब्रह्मलोकस्यात्यये तदध्यक्षेण ब्रह्मणा सहातो ब्रह्मलोकात्परं ब्रह्म प्राप्नोति । अतश्चानावृत्तिश्रुतिरुपपद्यत इति भावः । 'स्मृतेश्च' [ब्र० सू० ४ । ३ । ११]

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इति स्मृतेश्चायमर्थोऽवसीयते । 'परं जैमिनिर्मुख्यत्वात्' [ब्र० सू० ४ । ३ । १२] । नपुंसकलिङ्गब्रह्मशब्दस्य परस्मिन्ब्रह्मण्येव मुख्यत्वात्परमेव ब्रह्मार्चिरादिः प्रापयतीति जैमिनिराचार्यो मन्यते । तस्य परिपूर्णत्वेऽपि 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' [छा० ८ । ३ । ४] इति श्रुत्यनुसारेण निःशेषाविद्यानिवृत्तेर्देशविशेषविशिष्टब्रह्मप्राप्तिसापेक्षत्वाद्देशविशेषविशिष्टब्रह्मप्राप्तये गतिरुपपद्यते । लोक्यत इति व्युत्पत्त्या लोकशब्दोऽपि ब्रह्मण्युपपन्नः । बहुवचनमप्येकस्मिन्नुप-

चारात्प्रयुज्यते । 'दर्शनाच्च' [ब्र० सू० ४ । ३ । १३ ]। दर्शयति च श्रुतिर्ब्रह्मप्राप्तेर्गतिसापेक्षत्वम् । 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' [छा० ८ । ३ । ४] इति । ननु 'प्रजापतेः सभां वेश्म प्रपद्ये' [छा० ८ । १४ । १]। इत्यर्चिरादिना गतस्य कार्यप्रजापतिविषयाभिसंधिर्दृश्यते तत्राऽऽह–'न च कार्ये प्रत्यभिसंधिः' [ब्र० सू० ४ । ३ । १४ ]। नायं प्रत्यभिसंधिः कार्यहिरण्यगर्भविषयोऽपि तु परब्रह्मविषयः । तस्यैव प्रजापतिशब्दमुख्यवाच्यत्वात् । उत्तरत्र 'यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशाम्' [छा० ८ । १४ । १ ] इति सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसंधानात् 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' [छा० ८ । १३ । १) इति ब्रह्मलोकस्याकृतत्वेन विशेषितत्वाच्च परमेव ब्रह्मार्चिरादिर्नयतीति जैमिनिराचार्यो मन्यते । 'अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च' [ब्र० सू० ४ । ३ । १५ ] अब्रह्मभूतं नामादिकं ये ब्रह्मत्वेनोपासते ते प्रतीकालम्बनास्तद्भिन्नान्, प्रकृतिवियुक्तं प्रत्यगात्मानं ब्रह्मात्मकत्वेन ये पञ्चाग्निविद उपासते, ये च केवलं परं ब्रह्मोपासते तानुभयविधानपि नयतीति बादरायण आचार्यो मन्यते । केवलं परमेवोपासीनान्नयतीति पक्षे कार्यमुपासीनान्नयतीति पक्षे च 'तद्य इत्थं विदुर्ये चेमेऽरण्ये' [छा० ५ । १० । १] इति श्रुतिविरोधप्रसङ्गात् । ननु पञ्चाग्निविद्याया ब्रह्मात्मकप्रत्यगात्मविद्यात्वे किं प्रमाणं तत्राऽऽह–तत्क्रतुश्चेति । पञ्चाग्निविद्याया ब्रह्मविद्यात्वाभावेऽर्चिरादिगतिर्वा तया गत्या ब्रह्मप्राप्तिर्वा न स्यात्तत्क्रतुन्यायविरोधप्रसङ्गात् । ब्रह्मविद्यात्वे तु तत्क्रतुन्यायोऽप्यनुगृहीतो भवति । इयांस्तु विशेषः—पञ्चाग्निविद्या ब्रह्मात्मकस्वात्मविद्या । दहरादिविद्यास्तु प्रत्यगात्मशरीरकपरमात्मविद्याः । विशेषणविशेष्यभावे परं व्यत्यासः । अयं तु भगवतो बादरायणस्य सिद्धान्त इति स्थितम् । तथा लोके ग्रामादिगन्तॄणामिमं वृक्षं गत्वेमां नदीं गत्वाऽसौ ग्रामो गन्तव्य इति तत्तद्देशिकोपदेशस्वरूपत्वादस्यापि वाक्यस्यार्चिरादयो मार्गचिह्नभूताः । अथ वा 'अग्निलोकमागच्छति स वायुलोकम्' [कौ० १।३ ] इति लोकशब्दश्रवणादर्चिराद्या भोगभूमय इत्येवं पूर्वपक्षे प्राप्त उच्यते—'आतिवाहिकास्तल्लिङ्गात्' [ब्र० सू० ४।३।४ ] इति ।

विदुषामतिवाहे परमपुरुषेण नियुक्ता देवताविशेषा आतिवाहिका गन्तॄणां गमयितार इति यावत् । तल्लिङ्गात् । 'तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति' [ छा० ५ । १०।२ ] इति वैद्युतपुरुषस्य गमयितृत्वसिद्धवत्कारेण ब्रह्मगमयितृत्वमात्रविशेषप्रतिपादनपरेण वाक्येनेतरेऽपि गमयितार इति प्रतीतेः । अर्चिरादिशब्दानां च 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्, [ ब्र० सू० २ । १ । ५ ] इति सूत्रेण तदभिमानिदेवतापरत्वसंभवात् । ननु वैद्युतपुरुषस्यैव ब्रह्मगमयितृत्वे विद्युत ऊर्ध्वं कौषीतकिवाक्यानुसारेण निवेशितानां वरुणेन्द्रप्रजापतीनां कथं संबधस्तत्राऽऽह–'वैद्युतेनैव ततस्तच्छ्रुतेः, [ ब्र० सू० ४ । ३ । ६ ] ततो विद्युत उपरि वैद्युतेनैव ब्रह्मप्राप्त्यतिवाहनम् । 'स एनान्ब्रह्म गमयति' [ छा० ५ । १० । २ ] इति श्रुतेर्वरुणादयोऽपि तदनुग्राहका भवन्तीति द्रष्टव्यमिति स्थितम् । तथा वैराग्यपादे लोकान्तरं गच्छतो जीवस्य देहारम्भकभूतसूक्ष्माणां तत्रैव सुलभतया न भूतसूक्ष्मपरिष्वक्ततया गमनमिति पूर्वपक्षे प्राप्त उच्यते—' तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्' [ ब्र० सू० ३ । १ । १ । ] पूर्वत्र 'संज्ञामूर्तिक्लृप्तिः' [ ब्र० सू० २ । ४ । २० । ] इति सूत्रे मूर्तिशब्देन निर्दिष्टो देहस्तच्छब्देन परामृश्यते । तदन्तरप्रतिपत्तौ देहान्तरप्रतिपत्त्यर्थं जीवो भूतसूक्ष्मैः परिष्वक्त एव रंहति गच्छतीत्यर्थः । पञ्चाग्निविद्यायां 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' [ छा० । ५ । ३ । ३ । ] इति पञ्चस्वप्याहुतिष्वप्छब्दितानां भूतसूक्ष्माणां हूयमानतया संबन्धं सिद्धवत्कृत्वैवापां पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति कथं वेत्थेति प्रश्नाद्द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपेष्वग्निष्वापः श्रद्धासोमवृष्ट्यन्नरेतोरूपेण हूयमानाः सत्यः पञ्चम्यां रेतआहुतौ पुरुषाकारेण परिणमन्त इति प्रतिवचनदर्शनाच्चाप्छब्दितभूतसूक्ष्मपरिष्वक्त एवाऽऽरोहावरोहयोः संभ्रवतीति भावः । नन्वापः पुरुषवचसो भवन्तीत्यपामेव पुरुषवचस्त्वं प्रतिपाद्यते न भूतान्तराणामिति तत्राऽऽह—'त्र्यात्मकत्वात्तु भूयस्त्वात्' [ ब्र० सू० ३ । १ । २ । ] तुशब्दश्चोद्यव्यावृत्त्यर्थः । केवलानामपां देहारम्भकत्वासंभवेन त्र्यात्मकत्वादप्छब्दो भूतान्तरस्याप्युपलक्षकः । तर्हि कुतोऽप्छब्देन निर्देश इत्यत्राऽऽह—भूयस्त्वात् । तेजोबन्नलक्षणभूतत्रयमध्ये देहस्य रोहितप्रचुरतयाऽपां भूयस्त्वादप्छब्देन निर्देश इति भावः । 'प्राणगतेश्च' [ ब्र० सू० ३ । १ । ३ । ] 'तमु-

त्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' [बृ० ४।४।२।] इतीन्द्रियाणामपि सहगतिश्रवणात्, भूतसूक्ष्मपरिष्वक्ततया जीवगमनाभावे निराश्रयाणामिन्द्रियाणां गमनासंभवाद्भूतसूक्ष्मपरिष्वक्तस्यैव गमनमभ्युपगन्तव्यम्। स्मर्यते च—

गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात्। इति।

इन्द्रियाणां च नयनस्य स्मरणात्तेषां चाऽऽश्रयतया भूतसूक्ष्माणां गतिरभ्युपगन्तव्या। 'अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्, [ब्र० सू० ३।१।४] यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्, [बृ० ३।२।१३] इत्यादिना प्राणानां मरणकालेऽग्न्यादिष्वप्ययश्रवणान्न प्राणानां जीवेन सह गतिः संभवतीति चेन्न। अग्न्यादिष्वप्ययश्रवणस्य भाक्तत्वात्। 'ओषधीर्लोमानि वनस्पतीन्केशाः' [बृ० ३।२।१३] इति लोमकेशानामप्योषधिवनस्पत्यप्ययश्रवणस्य च प्रत्यक्षबाधितत्वेन, ओषधिवनस्पतिषु लोमकेशाप्ययस्य भाक्तत्वस्याभ्युपगन्तव्यत्वात्, तत्सहचरितानामग्न्यादिषु वागाद्यप्ययानामपि भाक्तत्वमेव। ततश्चाग्निं वागप्येतीत्यस्यायमर्थः—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' [ऐ० २।४।] इत्यग्नेर्वागधिष्ठातृतया मुखप्रवेशप्रतिपादनान्मरणकालेऽग्निर्म्रियमाणपुरुषवागधिष्ठातृतां परित्यज्यानधिष्ठातृरूपेण वर्तत इत्यर्थः। 'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः' [ब्र० सू० ३।१।५]। यदुक्तं प्रश्नप्रतिवचनाभ्यां द्युपर्जन्यादिषु भूतसूक्ष्मपरिष्वक्तस्यैव जीवस्य गमनमिति तन्नोपपद्यते। प्रणव एव विस्वर इति न्यायेन प्रथमाहुतावेव 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' [छा० ५।४।२] इति प्रथमपर्याये श्रद्धाया एव होम्यत्वश्रवणेनाप्छब्दितभूतसूक्ष्माणां होम्यत्वाश्रवणादिति चेन्न। यदि प्रथमे पर्यायेऽप्छब्दितव्यतिरिक्तायाः श्रद्धाया होम्यत्वं तर्हि प्रश्नप्रतिवचनयोरपां पञ्चम्यामाहुताविति निर्देशो नोपपद्यते, अपां पञ्चमाहुतिसंबन्धो हि तदितराहुतिचतुष्टयसंबन्ध एवोपपद्यते। बुद्धिविशेषलक्षणश्रद्धाया आत्मनो निष्कृष्य होम्यत्वानुपपत्तेश्च। श्रद्धाशब्देनाऽऽप एवोच्यन्ते। 'श्रद्धा वा आपः' [तै सं० १।६।८।१] इति श्रुतेः। 'अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः' [ब्र० सू० ३।१।६]। द्युपर्जन्यादिषु प्रश्नप्रतिवचनवशाद्भूतसूक्ष्माणां गमनसंभवेऽपि न तत्परिष्वक्तस्य जीवस्य गमनम्। अश्रुतत्वादिति चेन्न। उत्तरत्र पितृयाणवाक्ये 'मासेभ्यः पितृलोकं पितृलोकादा-

काशमाकाशाच्चन्द्रमसमेष सोमो राजा' [छा० ५। १०। ४] इति द्युलोकं प्राप्तस्येष्टादिकारिणो जीवस्य सोमराजभावश्रवणादत्रापि 'तस्या आहुतेः सोमो राजा संभवति' [छा० ५।४।२] इति द्युलोकं प्रविष्टानां भूतसूक्ष्माणां सोमराजभावश्रवणादत्रापि 'आपः पुरुषवचसो भवन्ति' [छा० ५।३।३] इत्यप्छब्देन न केवलं भूतसूक्ष्ममात्रमुच्यते, अपि तु तत्परिष्वक्तो जीवः। पुरुषशब्दाभिलपनीयत्वमपि तत्परिष्वक्तस्य जीवस्यैव। ततश्चाऽऽपः पुरुषवचसो भवन्तीत्यत्राबादिशब्दानां तत्परिष्वक्तजीवपरत्वाद्भूतसूक्ष्मपरिष्वक्तस्यैव जीवस्य गमनं सिद्धम्। ननु 'तं देवा भक्षयन्ति' [छा०।५।१०।४] इति सोमराजभावं प्राप्तस्य भक्ष्यमाणत्वश्रवणाज्जीवस्यानदनीयत्वात्पितृयाणमार्गे सोमराजशब्दनिर्दिष्टो न जीव इत्यत्राऽऽह—'भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति' [ब्र० सू० ३। १। ७] देवभक्ष्यमाणत्ववचनं भाक्तं केवलेष्टादिकारिणामनात्मवित्त्वात्। अनात्मविदां च 'यथा पशुरेवं स देवानाम्।' [बृ० १। ४। १०] इति श्रुतिदर्शनेन पशुवद्भोगोपकरणत्वात् 'तं देवा भक्षयन्ति [छा० ५। १०। ४।] इत्युक्तिरुपपद्यते। अतो भूतसूक्ष्मपरिष्वक्त एव जीवो गच्छतीति स्थितम्। समनन्तराधिकरणे 'यावत्संपातमुषित्वा' [छा० ५। १०। ५] इति संपातशब्दितसर्वकर्मफलस्य तत्रैवोपभोक्तव्यत्वश्रवणात्। 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' [बृ० ४।४।६] इति बृहदारण्यके श्रवणात्सर्वं कर्मफलं भुक्त्वा निरनुशय एवावरोहति जीवः। अनुशयो भुक्तशिष्टं कर्म। एवं पूर्वपक्षे प्राप्त उच्यते—'कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च' [ब्र० सू० ३। १। ८] कृतस्य कर्मणोऽत्ययेऽवसानेऽनुशयवानेव प्रत्यवरोहति जीवः। दृष्टस्मृतिभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। 'तद्य इह रमणीयचरणा अभ्याशो ह यत्।' [छा० ५। १०। ७।] इति श्रुतेः। 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता विनश्यन्ति' [गौ० ध० शा० ११। २९।] इति स्मरणाच्च। अतः सानुशया एवावरोहन्ति। 'यावत्संपातमुषित्वा' [छा० ५। १०। ५] इत्यादिकं तु फलदानप्रवृत्तकर्मविशेषविषयम्। तत्र च 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशम्।' [छा० ५।१०।५।] इति श्रवणाद्यथाग-

मनं प्रत्यागमनम् । 'आकाशाद्वायुं वायुर्भूत्वा धूमो भवति' [छा० ५।१०।५] इति श्रवणादनेवं च । येन प्रकारेण गतं तदन्येन प्रकारेण चावरोहन्तीत्यर्थः । 'चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः' [ब्र० सू० ३।१।९] ननु 'रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ।' [छा० ५ । १०।७] इत्यादिना सदसच्चरणयोरेव सदसद्योनिप्राप्तिहेतुत्वं श्रूयते । चरणमाचारः शीलं वृत्तमिति पर्यायाः । ततश्च 'रमणीयचरणाः' इति श्रुतिवशादवरोहतां सदसद्योनिजन्महेतुभूतचरणशब्दिताचारानुवृत्तावपि न कर्मशेषानुवृत्तौ प्रमाणमिति चेन्न । चरणश्रुतिः कर्मोपलक्षणार्थेति कार्ष्णाजिनिराचार्यो मन्यते । केवलाच्चरणशब्दितादाचारात्सुखदुःखहेतुभूतयोनिप्राप्त्यसंभवात् । 'आनर्थक्यमिति चेन्न तदपेक्षत्वात् ।' [ब्र० सू० ३।१।१०] ननु संध्यावन्दनाद्याचारस्य सुखदुःखहेतुत्वाभाव आनर्थक्यं स्यादिति चेन्न । तदपेक्षत्वादग्निहोत्रादिपुण्यकर्मणः ।

संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।

इति श्रवणादाचारवत एव वैदिककर्मण्यधिकारात् । 'सुकृतदुष्कृते एवेति तु बादरिः' [ब्र० सू० ३।१।११] पुण्यं कर्माऽऽचरति पापं कर्माऽऽचरतीति सुकृतदुष्कृतकर्मसु चरतिशब्दप्रयोगाच्चर्यत इति चरणमिति व्युत्पत्त्या सुकृतदुष्कृते एव चरणशब्दाभिधेये । 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि । यान्यस्माकꣳ सुचरितानि तानि त्वयोपास्यानि' [तै०१।११।२] इति कर्माचारयोः पृथङ्निर्देशस्तु गोबलीवर्दन्यायादुपपद्यते । वैतानिकानि तु कर्माणि कर्माणीत्युच्यन्ते । इतराणि त्वाचारशब्देनाभिलप्यन्ते । अतश्चरणशब्देन सुकृतदुष्कृतयोरेवाभिलाप इति बादरिराचार्यो मन्यत इति स्थितम् । तथा यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवतीत्यादावाकाशादिभावोऽपि देवमनुष्यादिभाववत्तच्छरीरकत्वलक्षण एवास्त्विति पूर्वपक्षे प्राप्त उच्यते— 'तत्स्वाभाव्यापत्तिरुपपत्तेः ।' [ब्र० सू० ३।१।२२] तत्स्वाभाव्यापत्तिराकाशादिसादृश्यापत्तिरित्यर्थः । स्वभाव एव स्वाभाव्यं वर्तमानसामीप्य इत्यादिवत्स्वार्थिकः ष्यञ् । अतस्तत्स्वाभाव्यापत्तिस्तत्सादृश्यापत्तिरित्यर्थः । चन्द्रमण्डले शरीरारम्भकाणां भूतसूक्ष्माणां कर्मक्षये द्रवीभूतानामाकाशगतानां भेदकाकारप्रहाणेनाऽऽकाशादिसादृश्ये तदुपश्लिष्टानुशयिनोऽप्याकाशसमा भवन्तीत्यर्थः । कुतः ।

उपपत्तेः । सुखदुःखोपभोगाय हि तच्छरीरसंसर्गः । न ह्यनुशयिनं प्रत्याकाशादेर्जीवान्तरशरीरभूतस्य तद्भोगाश्रयत्वमस्ति युगपद्भोक्तृद्वयसमावेशे तयोः परस्परविरुद्धभोगार्थितया शरीरोन्मथनप्रसङ्गात् । नन्ववरोहन्तो जीवा एव तत्तदभिमानिदेवता भवन्त्विति चेन्न । सर्गाद्यकालमारभ्याऽऽप्रलयमाकाशाद्यभिमानिदेवतानामनुशयिभ्योऽन्यासां क्लृप्तानां सत्त्वेनानुक्षणमवरोहतामनुशयिनामाकाशाद्यभिमानिदेवतात्वानुपपत्तेरिति स्थितम् । तदुत्तराधिकरणे, आकाशप्राप्तिप्रभृतियावद्व्रीह्यादिप्राप्तिः किं तत्र तत्र नातिचिरं तिष्ठत्युतानियम इति । विशये नियमहेत्वभावादनियम इति प्राप्त उच्यते—'नातिचिरेण विशेषात्' [ ब्र० सू० ३ । १ । २३ । ] आकाशादितो नातिचिरेण निष्क्रमणम् । कुतः । विशेषात् । उत्तरत्र व्रीह्यादिप्राप्तौ 'अतो वै खलु दुर्निष्प्रपतरम् ।' [छा०५।१०।६] इति विशिष्यकृच्छ्रनिष्क्रमणाभिधानादिति स्थितम् । तदुत्तराधिकरणे 'व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' [ छा० ५ । १०।६ ] इत्यनेनानुशयिनां व्रीह्यादिभाव उच्यते । तत्र देवो जायते मनुष्यो जायत इतिवदिह तिलमाषा इति जायन्त इति श्रवणाद्व्रीह्यादिशरीरका एवानुशयिनो भवन्तीति प्राप्त उच्यते—'अन्याधिष्ठिते पूर्ववदभिलापात् ।' [ब्र०सू०३।१।२४] अवरोहतां जीवानां जीवान्तराधिष्ठिते व्रीह्यादौ संश्लेषमात्रम् । कुतः । पूर्ववदभिलापात् । 'आकाशाद्वायुं वायुर्भूत्वा धूमो भवति' [ छा० ५ । १० । ५ ] इत्यादावाकाशादिभावे हेतुभूतकर्मकीर्तनाभावाद्यथाऽऽकाशादिषु संश्लेषमात्रमेवं व्रीह्यादिस्थावरभावहेतुभूतकर्मकीर्तनाभावादुत्तरत्रैव 'रमणीयचरणा अभ्याशो ह यत्' [ छा० ५ । १० । ७ ] इति ब्राह्मणादिभाव एव हेतुभूतस्य कर्मणः कीर्तनाद्व्रीह्यादौ जीवान्तराधिष्ठिते संश्लेषमात्रमेव । 'अशुद्धमिति चेन्न शब्दात्' [ ब्र० सू० ३ । १ । २५ ] इष्टादिकर्मणां पशुहिंसामिश्रत्वाद्धिंसायाश्च न हिंस्यादिति निषिद्धत्वेनानिष्टसाधनत्वेन पापतया तन्मिश्रतया सुकृतकर्मणामशुद्धत्वात्सुकृतांशस्य फलं स्वर्गेऽनुभूय हिंसांशस्य स्थावरादिभावलक्षणं फलमवरोहन्ननुभवतु । ननु न हिंस्यादिति निषेधो विहितक्रत्वर्थहिंसाव्यतिरिक्तहिंसाविषयोऽस्त्विति चेन्न । पुष्टयादिरूपेष्टसाधनघृतपानादौ मोहादिरूपानिष्टसाधनत्वस्य च दर्शनेनोत्सर्गापवादन्यायस्यात्रानवतारात् । अतो यागाद्यनुप्रविष्टहिंसाफलत्वेन स्थावरभावोऽनुभोक्तव्य इति चेन्न । प्रवर्तनानिवर्तनारूपविधिनिषेधयो-

रविरोधस्य वक्तुमशक्यतया सति च विरोधे सामान्यविशेषन्यायेन निषेधस्य विहितहिंसाव्यतिरिक्तविषयत्वात् । वस्तुतस्तु यागीयपशुहिंसाया हिंसात्वस्यैवाभावात् । 'नवा उ एतन्म्रियसे न रिष्यसि' इति मन्त्रवर्णाद्धिंसात्वाभावस्यैव प्रतिपादनात् । न रिष्यसि न हिंस्यस इति हि तस्यार्थः । ननु न रिष्यसीति मन्त्रवर्णाद्धिंसात्वाभावाभ्युपगमेन म्रियस इति मन्त्रवर्णात्तन्मरणस्य मरणत्वमपि न स्यात् । ततश्च न म्रियस इतिवन्न रिष्यसीत्युक्तिरप्यौपचारिकीत्येवाऽऽश्रयणीयं मरणोद्देश्यकमरणानुकूलव्यापारत्वस्यैव हिंसात्वरूपत्वादिति चेन्न । न मरणोद्देश्यकमरणानुकूलव्यापारत्वं हिंसात्वम् । कशाताडनतप्तसंदंशिनीपाटनक्रकचदारणादीनां मरणोद्देश्यकमरणानुकूलव्यापारत्वाभावेन हिंसात्वाभावप्रसङ्गात् । अतस्तीव्रदुःखजननौपयिकव्यापारत्वस्यैव हिंसापदप्रवृत्तिनिमित्तत्वे वक्तव्ये व्रणादिचिकित्सके तादात्विकतीव्रवेदनोत्पादके हिंसकत्वव्यपदेशाभावेन बलवत्ताद्धिताजनकत्वे सति तद्वेदनाजनकव्यापारत्वं तद्धिंसात्वमित्याश्रयणीयम् । ततश्च व्रणचिकित्सया जायमानस्याऽऽरोग्यरूपहितस्य तादात्विकवेदनापेक्षया बलवत्त्वान्न हिंसात्वमिति स्थिते पशुमरणानुकूलव्यापारस्य पशुवेदनाजनकत्वेऽपि स्वर्गप्राप्त्यादिलक्षणस्य पशुहितस्य बलवत्त्वान्न हिंसात्वम् । अतो न हिंस्यादितिनिषेधाविषयत्वात्क्रत्वर्थपशुहिंसाया न पापजनकत्वमिति तद्वशेनावरोहतोऽनुशयिनो न व्रीह्यादिभावापत्तिरिति । 'रेतःसिग्योगोऽथ' [ब्र० सू० ३ । १ । २६] इतश्चौपचारिकं व्रीह्यादिजन्मवचनम् । व्रीह्यादिभाववचनानन्तरं 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' [छा०५।१०।६] इति रेतःसिग्भावोऽनुशयिनां श्रूयमाणो यथा न मुख्य एवं व्रीह्यादिभावोऽपीत्यर्थः । 'योनेः शरीरम्' [ब्र० सू० ३ । १ । २७] योनिप्राप्तेः पश्चादेवानुशयिनां ब्राह्मणादिशरीरप्राप्तिश्रवणात्ततः प्राङ्न शरीरपरिग्रहः किंतु संश्लेषमात्रम् । यत्र पुण्यापुण्यकर्मणी तत्रैव सुखदुःखे । यत्र सुखदुःखे तत्रैव तद्धेतुभूतं शरीरम् । ततश्चाऽऽकाशादिषु कर्मकीर्तनाभावेन तत्फलभूतसुखाद्यनुभवाभावान्न तद्धेतुभूतं शरीरमिति न योनिप्राप्तेः प्राक्छरीरपरिग्रह इति स्थितम् । प्रकृतमनुसरामः ॥ १० ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य दशमः खण्डः ॥ १० ॥

(१) भल्लविशब्दात् बाह्वादेराकृतिगणत्वादपत्येऽर्थे इञ्। तदन्ता-कुम्भादेराकृतिगणत्वात् ढक्।



वैश्वानरविद्या प्रस्तूयते—

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषि-
रिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो
बुडिल आश्वतराश्विस्ते हैते महाशाला
महाश्रोत्रियाः समेत्य मीमाꣳसां चक्रुः
को न आत्मा किं ब्रह्मेति ॥ १ ॥

उपमन्युसुतः प्राचीनशालनामा पुलुषसुतः सत्ययज्ञनामा भाल्लविसुत(१) इन्द्रद्युम्ननामा शर्कराक्ष्यसुतो जननामाऽश्वतराश्वसुतो बुडिलनामा त एते पञ्चापि महाशाला महागृहस्थतया विस्तीर्णशालासंपन्नाः प्रसिद्धा इति यावत्। महाश्रोत्रिया अतीव श्रुताध्ययनसंपन्नाश्चैकत्र संभूयाऽऽस्माकमन्तर्यामितयाऽऽत्मभूतं ब्रह्म किमिति (मीमांसां चक्रुः) विचारं कृतवन्त इत्यर्थः ॥१॥

ते ह संपादयांचक्रुः।

त एवं मीमांसित्वा निश्चयमलभमाना आत्मभूतब्रह्मोपदेष्टारं कंचित्संपादितवन्तो निश्चितवन्त इत्यर्थः। किमिति तत्राऽऽह—

उद्दालको वै भगवन्तोऽयमारुणिः संप्रतीम-
मात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्याग-
च्छामेति तꣳ हाभ्याजग्मुः ॥ २ ॥

हे भगवन्तः। अरुणसुत उद्दालकनामेदानीं वैश्वानरमात्मानमध्येति। इक् स्मरण उपास्त इत्यर्थः। यद्वा, इण गताविति गत्यर्थानां ज्ञानार्थत्वादवगच्छतीत्यर्थः। तमुद्दालकमभ्यागच्छामेति (निश्चित्य) तं हाभ्याजग्मुस्तमभ्यागतवन्त इत्यर्थः ॥ २ ॥

स ह संपादयांचकार प्रक्ष्यन्ति मामिमे
महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव
प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति॥३॥

(नुशासानि उ)

स होद्दालकस्तानागतान्दृष्ट्वैते महाशाला महाश्रोत्रिया मां वैश्वानरमात्मानं प्रक्ष्यन्ति नाहं तत्सर्वं प्रतिपद्य तेभ्यो वक्तुं शक्नोमि। अतोऽन्यं तदभिज्ञं कंचिदुपदिशानीत्येवं संपादितवान्निश्चितवानित्यर्थः ॥ ३ ॥

तान्होवाच ।

स उद्दालक औपमन्यवादीन्प्रत्याह । किमिति—

अश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति त१ँ हन्ताभ्यागच्छामेति ।

केकयस्यापत्यं कैकेयः । शिष्टं स्पष्टम् ।

त१ँ हाभ्याजग्मुः ॥ ४ ॥

तमश्वपतिमुद्दालकषष्ठास्तेऽभ्यागतवन्त इत्यर्थः ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार ।

प्राप्तेभ्यस्तेभ्यो महर्षिभ्यः कैकेयः पृथक्पृथक्पूजाः भृत्यैः पुरोहितादिभिश्च कारितवान् ।

स ह प्रातः संजिहान उवाच ।

अन्येद्युः प्रातःकाले स्वभवनं संजिहानस्त्यजन्, स्वभवनान्निर्गत्य तत्समीपमेत्येति यावत् । तान्महर्षीनुवाचेत्यर्थः । किमिति तत्राऽऽह—

न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥

हे भगवन्तः पूजार्हा मदधिष्ठिते जनपदे चोरो वा दानशून्यो वा मद्यपायी वा सत्यां योग्यतायामनाहिताग्निर्वा वेदाध्ययनादिशून्यस्त्रैवर्णिको वा परदारगन्ता वा पुंश्चली वा, एवमाद्या दुष्टा न सन्ति न हि तैर्दत्तं धनमुपजीवामि । अतो मम प्रतिग्रहयोग्यताऽस्ति । अचिरेणैव कालेन यागं करिष्यामि । तत्र याग एकैकस्मा ऋत्विजे यावद्धनं दास्यामि तावद्भगवद्भ्यः प्रत्येकं दास्यामि तावत्कालमत्रैव वसन्तु यागं च पश्यन्त्विति प्रार्थितवानित्यर्थः । भगवता च भाष्यकृता—न मे स्तेन इत्यादिना यक्ष्यमाणो ह वै भगवन्तोऽहमस्मीत्यन्तेनाऽऽत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धस्य परिहरणीयतां विहितस्य कर्तव्यतां च प्रतिज्ञाप्य यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इत्यवोचदिति भाषितम् ॥ ५ ॥

ते होचुः

त ऋषयो राजानं प्रत्यूचुः। किमिति तदाह—

येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेदात्मानमेवेमं वैश्वानरꣳ संप्रत्यध्येषि तमेव नो ब्रूहीति॥६॥

येनार्थेन प्रयोजनेन यत्प्रयोजनमुद्दिश्य पुरुष आगच्छति तमेव पुरुषार्थं तस्य कुर्यात्। समीहितं हि कर्तव्यं भवति। अस्माकं वैश्वानर आत्मा जिज्ञासितव्यः। त्वं च तमात्मानमधुनोपास्से। न च ते तज्ज्ञानमपलापार्हं तमेव न उपदिश न प्रयोजनान्तरमित्यर्थः। विश्वान्नरान्नयतीति विश्व एनं नरा नयन्तीति वा विश्वानरः। विश्वानर एव वैश्वानरः। रक्ष एव राक्षसः, वय एव वायस इतिवत्॥६॥

तान्होवाच प्रातर्वः प्रतिवक्तास्मीति।

तेषामभिमानं परिशोध्य श्वः प्रतिवचनं दास्यामीति मत्वा प्रातः प्रश्नस्य प्रतिवचनं कर्तास्मीत्युवाचेत्यर्थः।

ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे।

ते च राज्ञोऽभिप्रायज्ञाः समिद्भारहस्ता अपरेद्युः पूर्वाह्णे राजानं शिष्यभावमेत्योपागतवन्तः।

तान्हानुपनीयैवैतदुवाच॥७॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्यैकादशः खण्डः॥११॥

---

राजा तु तान्समित्पाणीनुपयामेति वदतस्त्यक्तस्वजात्यभिमानानुद्वीक्ष्य तेषामुपदेशयोग्यतां ज्ञात्वाऽब्राह्मणेन न ब्राह्मण उपनेतव्य इति शास्त्रार्थं ज्ञात्वा तैः समर्पितं समिदाद्युपायनमस्वीकृत्यैव मैत्र्यैवैतद्वक्ष्यमाणमुवाचेत्यर्थः। यत एवं महाशाला महाश्रोत्रिया ब्राह्मणाः सन्तो महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थितयोपजग्मुस्तस्मात्तथाऽन्यैर्विद्योपादित्सुभिर्भवितव्यमित्याख्यायिकया सूच्यते॥७॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्यैकादशः खण्डः॥११॥

अथ कैकेयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मन्येतैः किंचिज्ज्ञातं किंचिदज्ञातमिति विज्ञाय ज्ञातांशबुभुत्सया तानेकैकशः प्रष्टुमुपक्रमते । तत्रौपमन्यवं पृच्छति—

औपमन्यव कं त्वमात्मानमुपास्स इति
दिवमेव भगवो राजन्निति होवाच ।

हे भगवः, द्युलोकशरीरकं वैश्वानरमहमुपास्स इत्युवाचेत्यर्थः । कैकेय आह—

एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से ।

यं द्युलोकावच्छिन्नं वैश्वानरमात्मानं त्वमुपास्से, एष वैश्वानर आत्मा सुतेजाः शोभनं तेजो यस्य स सुतेजाः । द्युलोको हि सूर्यचन्द्रादितेजोयुक्ततया सुतेजा भवति । यतश्च द्युलोकावच्छिन्नोवैश्वानर आत्मा त्वयोपास्यमानः सुतेजस्त्वगुणयोगेन सुतेजोनामा वैश्वानरः ।

तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

अत्र सुतप्रसुतासुतशब्दा एकाहाहीनसत्रकर्मगताभिषवणपराः सुतशब्दवत्त्वसाम्यात् सुतेजस्त्वोपासनायाः सुतादिफलकत्वोपपत्तिः॥ १॥

अत्स्यन्नं पश्यसि प्रियम् ।

तदुपासनावैभवेनान्नं लौकिकं भोग्यमनुभवसि प्रियं पुत्रादिकं च पश्यसीत्यर्थः । एवमन्योऽपि यस्त्वमिव त्वदुपास्यवैश्वानरमुपास्ते सोऽपि त्वमिवान्नादनप्रियदर्शनब्रह्मवर्चसशालिसंतानवांश्च भवतीत्याह—

अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं
कुले य एतमेवमात्मानं वैश्वानरमुपास्ते ।

उक्तोऽर्थः । एवं तदुक्तमर्थमङ्गीकुर्वन्निव फलदर्शनेन तमभिमुखीकृत्य तत्र वक्तव्यमंशमुपदिशति—

मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते
व्यपतिष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

———

त्वया वैश्वानरबुद्ध्योपास्यमान एष द्युलोकः परिच्छिन्न आत्मनो वैश्वानरस्याऽऽत्मनो मूर्धाऽवयवभूतो न तु स एव वैश्वानर आत्मा । एतदर्थनिर्णयार्थं तव मत्समीपानागमने तत्र वैश्वानरात्ममूर्धरूपावयवभूते द्युलोके कृत्स्नवैश्वानरबुद्धिं कुर्वतस्तव विपरीतविद्यावशादनर्थः स्यात् । अतः साध्वकार्षीर्यतो मामागतोऽसीत्यभिप्रायः ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इति ।

प्राचीनयोग्येति सत्ययज्ञस्य नामान्तरम् ।

आदित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचाऽन्धो भविष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

---

रूप्यत इति रूपं विश्वं रूपं प्रकाश्यं यस्य स विश्वरूपः । आदित्यस्य विश्वप्रकाशकत्वाद्विश्वरूपत्वम् । एतदुपासनात्तव कुले बहु विश्वरूपं विश्वप्रकाशकं पुत्ररत्नादिकं दृश्यते । अश्वतरीभिर्युक्तो रथोऽश्वतरीरथः । प्रवृत्तस्त्वामनुवृत्तः । दासीभिर्युक्तो निष्को हारः * दासीनिष्कस्त्वामनुप्रवृत्तः । शिष्टं पूर्ववत् ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

---

(१)

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य चतुर्दशः खण्डः ॥ १४ ॥

---

वायोर्विविधगतिस्वभावत्वात्पृथग्वर्त्मत्वम् । त्वां पृथङ्नानादिक्स्था वस्त्रान्नादिलक्षणा बलय आयन्त्यागच्छन्ति रथपङ्क्तयोऽपि त्वामनुयान्ति ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य चतुर्दशः खण्डः ॥ १४ ॥

---

अथ होवाच जनꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च॥ १॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानर-

(१) व्याघ्रपद्यस्यापत्यं वैयाघ्रपद्यः । भाल्लवेरेव व्याघ्रपद्य इति नामान्तरम् इति पाठो ग्रन्थाक्षरकोशे दृश्यते तत्र — व्याघ्रपदो गोत्रापत्यं वैयाघ्रपद्यः । भल्लवेरेव व्याघ्रपादिति नामान्तरम् — इति पाठो भाति ... गर्गादि गणे पाठात् ।

मुपास्ते संदेहस्त्वेष आत्मन इति होवाच संदेहस्ते व्यशीर्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

भूतान्तरेभ्य आकाशस्य महत्त्वाद्बहुलत्वम् । संदेहो मध्यकायः । मध्यकायो ह्युत्तरापरकाययोः क्वानुप्रविष्ट इति संदिह्यमानत्वात्संदेह इत्युच्यते । व्यशीर्यद्विशीर्णोऽभविष्यत् । शिष्टं स्पष्टम् ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान्पुष्टिमानसि ॥ १ ॥ वैयाघ्रपद्य व्याघ्रपद्गोत्रापत्येत्यर्थः

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
षोडशः खण्डः ॥ १६ ॥

---

अपां वेगत्वाद्रयित्वम् । विसर्गश्छान्दसः । धनप्राप्तिहेतुत्वाद्वा रयित्वं रयिमान्धनवानित्यर्थः । बस्तिर्मूत्रस्थानं शिष्टं स्पष्टम् ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
षोडशः खण्डः ॥ १६ ॥

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मान-
मुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष
वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से
तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥
अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भव-
त्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानर-
मुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ
ते व्यम्लास्येतां यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
सप्तदशः खण्डः ॥ १७ ॥

---

प्राण्याधारत्वात्पृथिव्याः प्रतिष्ठात्वम् । व्यम्लास्येतां म्लानौ श्लथा-
वभविष्यतां शिष्टं स्पष्टम् ॥ १ ॥ २ ॥

इति च्छादोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
सप्तदशः खण्डः ॥ १७ ॥

---

तान्होवाच ।

अथ राजा तानृषीन्पुनरुवाचेत्यर्थः ।

एते वै खलु यूयं पृथगिवेममा-
त्मानं वैश्वानरं विद्वांसोऽन्नमत्थ ।

एतादृशा यूयमिमं वैश्वानरमात्मानं पृथगिव विद्वांसो भिन्नाभिन्नतयो-
पासीनास्तदानुरूप्येण लौकिकं भोगमनुभवथ । पूर्वत्रात्स्यन्नं पश्यसीति
प्रतिपुरुषमुक्तस्यात्रात्थेति बहुवचनेन निर्देशः । अत्रान्नमत्थेत्येतत्प्रियं
पश्यथेत्यस्याप्युपलक्षणम् ।

यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं

वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

सर्वाभिव्याप्ततया विगतमानं विश्वेषां नराणां नेतारमेतमात्मानं प्रादेशमात्रं द्युलोकादिप्रदेशसंबन्धिनी प्रादेशी । प्रादेशी मात्रा यस्य तं द्युप्रभृतिप्रदेशपरिच्छिन्नं य उपास्ते स सर्वलोकसर्वभूतसर्वात्मवर्तिब्रह्मरूपमन्नमत्ति । अनुभवतीत्यर्थः । अनेन वैश्वानरोपासनस्य ब्रह्मप्राप्तिफलकत्वमुक्तं भवति । भगवता भाष्यकृता—"सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु च वर्तमानं यदन्नं भोग्यं तदत्ति । सर्वत्र वर्तमानं स्वयमेवानवधिकातिशयानन्दं ब्रह्मानुभवति । यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यत" इति भाषितम् । अत्र 'प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नास्तथा तु व एतान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति । स होवाच । मूर्धानमुपदिशन्नुवाचैष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाचैष वै सुतेजा वैश्वानर इति । नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानर इति । मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वानर इति । चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति' [शत० १० । ६ । १ । १० । ११] इति वाजसनेयकोक्तमूर्धचुबुकान्तरालप्रतिष्ठितत्वलभ्यं प्रादेशमात्रत्वं नोपजीव्यं द्युप्रभृतिप्रदेशसंबन्धित्वमात्रस्य यौगिकार्थस्य प्रकरणतः प्रतीतेः । उक्तं च व्यासार्यैः सर्ववेदान्तप्रत्ययाधिकरणे—यस्त्वेतमिति न वाजसनेयिकोक्तानुवादः, स्वशाखावाक्य एव पूर्वप्रतिपादितस्यानुवादेन फलसमर्पकत्वोपपत्तेरिति । न चापरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसंबन्धिन्यामात्रया कथं परिच्छिन्नत्वमिति चोदनीयम् । परिच्छिन्नत्वे बुद्धिसौकर्यलक्षणाभिव्यक्तेः संभवात् । सूत्रितं च 'अभिव्यक्तेरित्याश्मरथ्यः' [ब्र० सू० १ । २ । २९] इति । बुद्धिसौकर्यलक्षणाभिव्यक्तेर्हेतोरभिविमानस्यापि ब्रह्मणः प्रादेशमात्रत्वमुपदिश्यत इत्याश्मरथ्य आचार्यो मन्यत इति सूत्रार्थः । अभिव्यक्त्यर्थं परिच्छिन्नत्वोपदेशेऽपि मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति न चोदनीयं तथोपासनार्थत्वात् । सूत्रितं च 'अनुस्मृतेर्बादरिः' [ब्र० सू० १ ।

२ । ३० ] इति । अनुस्मृतिरुपासनम् । अनुस्मृतेर्हेतोः पुरुषविधत्वनिरूपणमिति बादरिराचार्यो मन्यत इति सूत्रार्थः ॥ १ ॥

अथ प्राणाहुत्याधारत्वत्रिविधाग्नित्वपरिकल्पितजाठराग्निशरीरकद्युमूर्धत्वादिविशिष्टात्मभाविते स्वशरीरे क्रियमाणप्राणाद्याहुतिभिर्वैश्वानरविद्यानिष्ठेन परमात्मा समाराधनीय इति प्रतिपादयति—

तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्याष्टादशः खण्डः ॥ १८ ॥

———

एतस्याऽऽत्मन उपासकस्याऽऽत्मनो मूर्धैव तस्य वैश्वानरस्य 'मूर्धा त्वेष आत्मनः' [ छा० ५ । १२ । २ ] इति वैश्वानरात्ममूर्धत्वेन निर्दिष्टः सुतेजा इत्यर्थः । न चात्र तस्य ह वा एतस्येति पदयोः सामानाधिकरण्यमेवास्तु न त्वेतस्येति शब्दस्योपासकपरामर्शित्वमिति शङ्क्यम् । उर एव वेदिरित्यादावुपासकोरःपरामर्शस्यावश्यंभावात् । मूर्धैवेत्यत्राप्युपाकस्य मूर्धैव परामृश्यते । तस्मादेतस्येति शब्दस्योपासकपरत्वमेव सिद्धम् । इह हि भगवता भाष्यकृता 'आमनन्ति च' [ ब्र०सू० १।२।३२ ] इति सूत्रव्याख्याने—एनं पुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरमस्मिन्नुपासकशरीरे प्राणाहुत्याधारत्वायाऽऽमनन्ति च 'तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाः' [ छा० ५ । १८ । २ ] इत्यादिना । अयमर्थः—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' [ छा० ५ । १८ । १ ] इति त्रैलोक्यशरीरकस्य परमात्मनो वैश्वानरस्योपासनं विधाय सर्वेषु लोकेष्वित्यादिना ब्रह्मप्राप्तिफलमुपदिश्यास्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं तस्य ह वा एतस्येत्यादिनोपदिशति । यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतान्द्युप्रभृतीनादित्यादीन्सुतेजोविश्वरूपादिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु संपादयति । मूर्धैव सुतेजा उपासकस्य मूर्धैव परमात्ममूर्धभूता

द्यौरित्यर्थः । चक्षुर्विश्वरूपः । आदित्य इत्यर्थः । प्राणः पृथग्वर्त्मा । वायुरित्यर्थः । संदेहो बहुलः । उपासकस्य मध्यकाय एव परमात्ममध्यकायभूताकाश इत्यर्थः । बस्तिरेव रयिः । अस्य बस्तिरेव तदवयवभूता आप इत्यर्थः । पृथिव्येव पादौ । अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवमुपासकस्य शरीरे परमात्मानं त्रैलोक्यशरीरकं वैश्वानरं संनिहितमनुसंधाय स्वकीयान्युरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान्परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' इत्यादिनोपदिश्यत"इति भाषितम् । उरःप्रभृतीनां वेद्यादित्वोपदेशश्च प्राणाहुतेरग्निहोत्रत्वसंपत्त्यर्थ इति 'संपत्तेरिति जैमिनिस्तथा हि दर्शयति' [ ब्र० सू० १।२।३ ] इति सूत्रितम् । 'स य इदमविद्वानग्निहोत्रं जुहोति' [छा० ५।२४।१] इति दर्शिताग्निहोत्रत्वसंपत्तेर्हेतोर्वेद्यादित्वोपदेश इति जैमिनिर्मन्यत इति सूत्रार्थः । हृदयं गार्हपत्यः । हृदयकमलावच्छिन्नजाठराग्निर्गार्हपत्यः । मनोऽन्वाहार्यपचनः । मनइन्द्रियावच्छिन्नजाठराग्निर्दक्षिणाग्निः । आस्यमाहवनीयः । आस्यावच्छिन्नजाठराग्निराहवनीय इत्यर्थः । गार्हपत्यादिपरिकल्पनस्य सजातीयजाठर एवोचितत्वाद्वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियत इति भाषितत्वाच्चोक्त एवार्थः । अत्र च हृदयादिशब्दास्तत्तदवच्छिन्नजाठराग्निशरीरकपरमात्मपर्यन्ता इति द्रष्टव्यम् ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्याष्टादशः खण्डः ॥ १८ ॥

---

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम् । (दुपन्मे)

तत्तस्य पुंसो यद्भक्तं यदन्नं भोजनकाले प्रथमत आगच्छेत्तद्धोमीयं होमसाधनं तेन होतव्यमित्यर्थः ।

स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥

प्राणाय स्वाहेति प्रथमायामाहुतौ हुतायां प्राणस्तृप्यतीत्यर्थः ॥ १ ॥

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किंच द्यौश्चाऽऽदित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्यैकोनविंशः खण्डः ॥ १९ ॥

---

एवं प्राणे तृप्ते सति क्रमाच्चक्षुरादित्यौ द्यौश्च तृप्यन्ति । ततश्च द्य्वादित्याभ्यामधिष्ठितं वस्तुजातं च तृप्यतीत्यर्थः । तस्मिन्सर्वस्मिंस्तृप्ते तस्य तृप्तिमनु प्रजापश्वादिभिर्होताऽपि तृप्यतीत्यर्थः । अत्र प्राणचक्षुरादिशब्दास्तत्तदभिमानिदेवतापरा अचेतनानां तृप्तेरसंभवादिति । एवमुत्तरत्रापि द्रष्टव्यम् ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्यैकोनविंशः खण्डः ॥ १९ ॥

---

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥

व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य विंशः खण्डः ॥ २० ॥

---

अथ यां तृतीयां जुहुयात्तां जुहुयाद-
पानाय स्वाहेत्यपानस्तृप्यति॥ १ ॥

अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्या-
मग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां
तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठ-
तस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया
पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्यै-
कविंशः खण्डः ॥ २१ ॥

---

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्स-
मानाय स्वाहेति समानस्तृप्यति ॥ १ ॥

समाने तृप्यति मनस्तृप्यति मनसि तृप्यति
पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति
विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चा-
धितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति
प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति।

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य द्वाविंशः
खण्डः ॥ २२ ॥

---

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदा-
नाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥

उदाने तृप्यति त्वक्तृप्यति त्वचि तृप्यन्त्यां
वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्या-

काशे तृप्यति यत्किंच वायुश्चाऽऽकाशश्चा-
धितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति
प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य त्रयो-
विंशः खण्डः ॥ २३ ॥

---

ब्रह्मवर्चसेन तेजसा वृत्ताध्ययननिमित्ततेजसेत्यर्थः ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य
त्रयोविंशः खण्डः ॥ २३ ॥

---

स य इदमविद्वानग्निहोत्रं जुहोति ।

उरःप्रभृतीनामग्निहोत्रोपकरणवेद्यादितामजानन्यः प्राणाग्निहोत्रमनुतिष्ठतीत्यर्थः ।

यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥ १ ॥

तदनुष्ठानं भस्माहुतिसमानं स्यादित्यर्थः । निष्फलमिति यावत् ॥१॥

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु
सर्वेषु लोकेष्वि- त्यादिना लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

सर्वात्मकभगवदाराधनेन सर्वमाराधितं भवतीति हुतप्रकर्षोक्तिः॥२॥

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ
हास्य सर्वे पाप्मानः प्रदूयन्ते य
एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥

यथा इषीकाया मुञ्जान्तर्वर्तितृणविशेषस्य तूलमग्नौ प्रक्षिप्तं सद्यो दह्यत एवं सर्वाणि पापान्येतादृशविद्यापूर्वकप्राणाग्निहोत्रानुष्ठानेन दग्धानि भवन्तीत्यर्थः । ब्रह्मोपासनफलस्य सर्वपापप्रदाहस्य प्राणाग्निहोत्रे कीर्तन-

मङ्गिफलेनाङ्गस्य स्तुत्यर्थम् । ततश्चानेनापि प्राणाग्निहोत्रस्य वैश्वानर-विद्याङ्गत्वं ज्ञापितं भवति ॥ ३ ॥

वैश्वानरविद्यां स्तौति—

तस्माद्‌ु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छे-
दात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति ।

उच्छिष्टप्रदानायोग्याय चण्डालायोच्छिष्टप्रदानमपि वैश्वानरे आत्मन्यन्नं जुहोमीति बुद्ध्याऽनुष्ठितत्वान्नाधर्माय भवतीत्यर्थः ।

तदेष श्लोकः ।

तदुक्तप्राणाग्निहोत्रविषय एष श्लोकः श्रूयत इत्यर्थः ॥ ४ ॥

यथेह क्षुधिता बाला मातरं पर्युपासत एवꣳ सर्वाणि
भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥५॥

इति च्छान्दोग्योपनिषदि पञ्चमप्रपाठकस्य
चतुर्विंशः खण्डः ॥ २४ ॥

---

इति च्छान्दोग्योपनिषदि पञ्चमः प्रपाठकः
समाप्तः ॥ ५ ॥

---

यथा बुभुक्षिता बालाः कदा माताऽन्नं प्रयच्छतीति मातरं परित उपासत एवं सर्वाणि भूतान्येवंविदः प्राणाग्निहोत्रमुपासत इति विदुषः प्राणाग्निहोत्रस्तुत्यर्थोऽयं श्लोक इत्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था । एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते समन्वयाध्याये—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' [छा० ५।१८।१] इत्यत्र श्रुतस्य वैश्वानरशब्दस्य नार्थो निर्णेतुं शक्यः । 'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते' [बृ० ५।९।१] इति वैश्वानरशब्दस्य जाठराग्नावपि प्रयोगदर्शनात् । 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' [ऋ० सं० १०।८८।१२] इति भूततृतीयेऽपि प्रयोगदर्शनात् 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' [ऋ० सं० १।९८।१] इति देवतायामपि प्रयोगदर्शनात् 'तदा-

त्मन्येवाग्नौ वैश्वानरे प्रास्यति' 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' [प्र० १।७] इति परमात्मन्यपि प्रयोगदर्शनात्...र्थो निर्णेतुं शक्य इति पूर्वपक्षे प्राप्त उच्यते—'वैश्वानरः साधारणशब्दविशेषात्' [ब्र० सू० १।२।२४] वैश्वानरः परमात्मा साधारणस्य वैश्वानरशब्दस्य परब्रह्मासाधारणैः 'को न आत्मा किं ब्रह्म' [छा० ५।११।१] 'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' [छा० ५।१८।१] 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते' [छा० ५।२४।३] इति वाक्यश्रुतात्मत्वब्रह्मत्वब्रह्मप्राप्तिफलकोपासनविषयत्वसर्वपापप्रदाहकत्वादिधर्मैर्विशेष्यमाणत्वात्। 'स्मर्यमाणमनुमानं स्यादिति' [ब्र०सू०१।२।२५] 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' [मु० २।१।४] इत्यथर्वणादिषु परमात्मसंबन्धितया निर्दिष्टं रूपमस्यां विद्यायां तदिदमिति स्मर्यमाणं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं ज्ञापकं स्यादित्यर्थः। अग्निरिह द्युलोकः। 'असौ वाव लोको गौतमाग्निः' [छा० ५।४।१] इत्यादिश्रुतेः 'शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते' [१।२।२६]। अग्निरहस्ये वैश्वानरप्रकरणे 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' [शतप० ब्रा० १०।६।१।११] इति वैश्वानरशब्दसमानाधिकरणाग्निशब्दश्रवणादग्नित्रयपरिकल्पनप्राणाहुत्याधारत्वरूपजाठराग्निलिङ्गाच्च। वाजसनेयके—'स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' [श०प०ब्रा० १०।६।१।११] इति पुरुषान्तःप्रतिष्ठितत्वश्रवणाच्च जाठर एव भवितुमर्हतीति चेन्न। परमात्मलिङ्गानामिह सत्त्वेनाग्निशब्दलिङ्गानां तच्छरीरकपरमात्मोपासनपरतयाऽप्युपपत्तेः। तथा दृष्ट्युपदेशात्। तथोपासनस्योपदिष्टत्वादित्यर्थः। त्रैलोक्यशरीरकत्वादीनां च परमात्मधर्माणां जाठरे संभवात्। वाजसनेयके—'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' [श०प०ब्रा० १०।६।१।११] इति पुरुषशब्दश्रवणात्।

भगवानिति शब्दोऽयं तथा पुरुष इत्यपि।
निरुपाधी च वर्तेते वासुदेवे सनातने॥

इति निरुपाधिकपुरुषत्वस्यान्यत्रासंभवादचेतने जाठराग्नौ सर्वात्मनाऽसंभवान्न जाठराग्निः। 'अत एव न देवता भूतं च' [ब्र०सू०१।२।२७]। उक्तैरेव हेतुभिर्भूततृतीयदेवताविशेषयोरपि न प्रसक्तिरित्यर्थः।

एवं सूत्रकारोऽग्नित्रयपरिकल्पनादिजाठराग्न्याद्यनन्यथासिद्धलिङ्गैः 'प्राणस्तथाऽनुगमात्' [ ब्र० सू० १ । १ । २८ ] इत्यधिकरणोक्तन्यायेन जाठराग्निविशिष्टः परमात्मैवेहोपास्य इति तथा हष्ट्युपदेशादिति सूत्रखण्डेन सिद्धान्तमाविष्कृत्य लिङ्गान्यथासिद्धिं संभावयतो जैमिनेरग्निशब्दनिर्वाहप्रकारं दर्शयति—'साक्षादप्यविरोधं जैमिनिः' [ ब्र०सू० १।२।२८ ]। मामुपास्स्व प्राणोऽस्मि प्रज्ञात्मेत्यादिशब्दवदग्निशब्दस्यापर्यवसानवृत्त्या न तच्छरीरकपरमात्मपरत्वमाश्रयणीयम् । अग्रं नयतीत्यग्निरिति योगव्युत्पत्त्याऽग्निशब्दस्याग्निव्यवधानमन्तरेण साक्षादेवाग्निशब्दस्य परमात्मपरत्वसंभवं जैमिनिराचार्यो मन्यते । अत्र व्यासार्यैः—अग्निलिङ्गे विद्यमानेऽग्निशब्दस्यापर्यवसानवृत्त्योऽग्निशरीरकपरमात्मपरत्वमेवोचितं तादृशानन्यथासिद्धलिङ्गराहित्यस्थलेऽयमपि न्यायोऽस्तीति व्युत्पादनार्थमिहैतदुपन्यस्तं न तु प्रकृतोपयुक्ततयेत्युक्तम् । 'अभिव्यक्तेरित्याश्मरथ्यः' [ ब्र० सू० १।२।२९]। 'अनुस्मृतेर्बादरिः' [ ब्र० सू० १।२।३० ]। 'संपत्तेरिति जैमिनिस्तथा हि दर्शयति' [ ब्र०सू० १ । २ ३१ ]। 'आमनन्ति चैनमस्मिन्' [ ब्र०सू०१।२।३२ ] इति चत्वार्यपि सूत्राणि पूर्वत्र व्याख्यातानि । अतो वैश्वानरः परमात्मेति स्थितम् ॥१॥

तथा गुणोपसंहारपादे द्युमूर्धादिव्यस्तोपासनेष्वौपमन्यवादिभिरुक्तेषु 'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते' [ छा०५।१२।२ ] इति व्यस्तोपासनेषु फलश्रवणाद्व्यस्तोपासनमेव प्रामाणिकम् । 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' [ छा०५।१८।१ ] इति व्यस्तोपासनसमुदायानुवाद एव न तु समस्तोपासनविधिः । अथवाऽनेन वाक्येन समस्तोपासनमपि विधीयतेऽतो द्वयमपि प्रामाणिकम् । अल्पफलार्थिभिर्व्यस्तोपासनं कर्तव्यमिति पूर्वपक्षे प्राप्त उच्यते—'भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति' [ ब्र० सू०३।३।५७ ] भूम्नः सामस्त्यस्य ज्यायस्त्वं प्रामाणिकत्वम् । तथा हि दर्शयति श्रुतिर्व्यस्तोपासनेऽनर्थं ब्रुवती 'मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽगमिष्य इति' [ छा०५।१२।२ ] 'अन्धोऽभविष्यो यन्मां नाऽऽगमिष्य इति' [ छा०५।१३।२ ] इत्यादिना । न चेदं न हि निन्दान्यायेन समस्तोपासनस्य प्रशंसार्थमेव किं न स्यादिति वाच्यम् । अग्निहोत्रं प्रकृत्य श्रुतेन 'जर्तिलयवाग्वा जुहुयाद्गवीधुकयवाग्वा वा जुहुयान्न ग्राम्यान्प-

विस्पष्टलिङ्प्रत्ययेन- इति ग्रन्थाक्षर कोशे न दृश्यते।



शून्हिनास्ति नाऽऽरण्यान्' इति वाक्येन जर्तिलगवीधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोर्विकल्पेनाग्निहोत्राहुतौ द्रव्यत्वविधाने विस्पष्टलिङ्गप्रत्ययेन ग्राम्यारण्यपशुहिंसारहिततया तयोः स्तवने च प्रतीयमानेऽपि 'अथो खल्वाहुः अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' 'पयसाऽग्निहोत्रं जुहुयात्' इति तदनन्तरं जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात्तदेकवाक्यतया जर्तिलयवाग्वा जुहुयादित्यादेर्ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हा अपि जर्तिला गवीधुकाश्च यदपेक्षया दुष्टास्तत्पय एव प्रशस्तमिति पयःस्तुत्यर्थत्वमेकवाक्यानुरोधादिति। 'न चेदन्यं प्रकल्पयेत्'। 'प्रक्लृप्तावर्थवादः स्यात्' [जै०१०।८।४।७] इति पूर्वतन्त्राधिकरणे किंचिद्विधिपूर्वकं तन्निन्दायां विध्यन्तरश्रवणे सति तदेकवाक्यतानुरोधात्पूर्वप्रवृत्तयोर्विधिनिन्दयोस्तदर्थवादत्वमिति समर्थितं तद्वदेवेहापि युक्तम्। ननु जर्तिलगवीधुकयोः पयसा सह संबन्धाभावाज्जर्तिलगवीधुकयवागूविधानयोरर्थवादतयैव विध्येकवाक्यता समर्थनीयेति तत्र तथाऽस्तु नाम। इह तु भूमविद्यायां नामादीनां सत्येन ब्रह्मणा सह भूयस्त्वावधित्वेन संबद्धानां प्रासङ्गिकतदुपासनाविधिवत्समस्तोपासनविषयेण वैश्वानरात्मना द्युप्वादित्यादीनां तदवयवत्वेन संबद्धानां प्रासङ्गिकोपासनाविधिः किं न स्यादिति चेन्मैवम्। व्यस्तोपासननिन्दनेन 'मूर्धा त्वेष आत्मन इति होवाच' [छा० ५।१२।२] इत्यादिवाक्येषु तुशब्दकृतेन द्युप्वादित्यादीनां स्वतन्त्रोपास्यत्वव्यवच्छेदेन 'तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ' [छा०५।१८।१] इति व्यस्तोपासनानां भ्रममूलत्वोद्घाटनेन च भूमविद्यावैषम्यस्य बहुविधस्य सत्त्वेन जर्तिलयवागून्यायस्यैव प्रवृत्त्यौचित्यात्क्रतुवत्। यथा—'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति विहितस्य क्रतोर्यदष्टाकपालो भवतीत्यादिरर्थवादो न त्वष्टाकपालादिद्रव्यविधायकः। एवमत्त्यन्नं पश्यति प्रियमित्यादिव्यस्तोपासनश्रवणमप्यर्थवाद एवेति स्थितम्। प्रकृतमनुसरामः ॥ ५ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकस्य चतुर्विंशः खण्डः ॥ २४ ॥

---

इति च्छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमप्रपाठकः समाप्तः ॥ ५ ॥

---

सद्विद्यामुपदेष्टुमाख्यायिकामाह—

श्वेतकेतुर्हाऽऽरुणेय आस ।

ह: प्रसिद्ध्यर्थः । अरुणपुत्रस्योद्दालकस्य पुत्रः श्वेतकेतुनामा बभूवेत्यर्थः ।

तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥ १ ॥

उद्दालकः तं

पिता द्वादशवर्षमनुपनीतमनधीतिनं पुत्रं श्वेतकेतुं प्रति हे सोम्य सोमार्ह प्रियदर्शनेति वाऽर्थः । श्वेतकेतो क्वचिद्गुरावध्ययनार्थं ब्रह्मचर्यं वस । अस्मत्कुले प्रसूतः कोऽप्यननधीत्य ब्रह्मबन्धुरिव न भवतीत्युवाचेत्यर्थः । यः स्वयमब्राह्मण एव सन्ब्राह्मणान्बन्धुत्वेन व्यपदिशति स ब्रह्मबन्धुरित्युच्यते । अत्र स्वयं गुणवत एव पितुर्गर्भाष्टमाद्युपनयनकालातिक्रमेऽप्युपनेतृत्वाभावे हेतुः प्रवासादिलक्षणात्यन्तानुपपत्तिरिति द्रष्टव्यम् ॥ १ ॥

स ह द्वादशवर्ष उपेत्य चतुर्विꣳशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय ।

स श्वेतकेतुर्द्वादशवर्षः सन्गुरुमुपेत्य गुरुकुले द्वादशसंवत्सरानुषित्वा सर्वान्वेदानधीत्य महामनाः प्रौढमतिः, अनूचानमान्यात्मानं साङ्गवेदाध्यायिनं मन्यमानः, स्तब्धः परिपूर्ण इव तृणीकृतजगत्त्रयश्चतुर्विंशतिवर्षयुक्त एयाय प्रत्यागतः ।

तꣳ ह पितोवाच ॥ २ ॥

स्पष्टोऽर्थः ॥ २ ॥

उक्तिमाह—

श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि ।

हे सोम्य महामना अनूचानमानी स्तब्धोऽसीतीदं यद्यस्माद्धेतोः स क इत्यर्थः । तस्य ब्रह्मज्ञानरहिततां जानन्नप्यारुणिर्जगदभिन्ननिमित्तोपादानभूतब्रह्मज्ञानवानेव पूर्णो नान्य इति तस्मै ज्ञापयित्वा पूर्णत्वा-

भिमानं तदीयमपनुद्य ब्रह्मणि जिज्ञासां संपादयितुं तदनुजिघृक्षया पृच्छति।

उत तमादेशमप्राक्ष्यो येनाश्रुतꣳ श्रुतं भव-
त्यमतं मतमविज्ञातं विज्ञातमिति ।

अत्र व्यासार्याः। उपक्रमे तावत्—'उत तमादेशमप्राक्ष्यः' इत्यत्राऽऽदेशशब्देन प्रशासिताऽभिधीयते। अत्र श्लोकावाचार्यपादैरुक्तौ—

छान्दोग्ये केचिदाहुर्दिशतिरुत तमादेशमप्राक्ष्य इत्य-
त्राऽऽङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्तिं घञन्तः।
नो कर्तर्यस्ति कर्मण्यगणि घञिह सत्कर्तृशास्तौ न कर्म
स्यात्तत्कर्मोपदेशे तदिदमुत तमादेशवाचोपदेश्यम् ॥ १ ॥
अत्र ब्रूमः प्रशास्तिं वदति दिशिरसावाङ्मुखो नोपदेशं
शास्ता सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसङ्गः।
युक्तोऽसाधारणोक्त्या घञगणि करणेऽप्यत्र वैवक्षिकत्वं
शाब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षा॥२॥ इति।

आदेशशब्देनोपदेश्यमुच्यते। प्रकृत्यर्थ उपदेशः प्रत्ययार्थः कर्मत्वम्। अकर्तरि च कारके संज्ञायामिति कर्तृव्यतिरिक्तकारके घञो विहितत्वात्, उपदेशे ब्रह्मणः कर्मत्वोपपत्तेश्च। प्रशासने तु ब्रह्म न कर्मापि तु कर्तृ। कर्तृव्यतिरिक्तकारके हि घञ्प्रत्ययविधिः। न चात्रेगुपधलक्षणः कप्रत्यय उपपद्यते क्ङिति चेति गुणप्रतिषेधादादेशशब्दरूपासिद्धेः। नापि पचाद्यच्प्रत्यय उपपद्यते दिशिधातोरिगुपधत्वेनेगुपधेत्यपवादसूत्रेण कप्रत्यये प्राप्ते गुणाभावात्। अतो घञ्प्रत्ययान्त एवायमादेशशब्दः। स च प्रत्ययोऽकर्तर्येव विहित इति कर्मार्थकत्वस्यैव युक्तत्वादुपदेश्यमेवाऽऽदेशशब्दवाच्यमिति। अत्रोच्यते—प्रकृत्यर्थः शासनं प्रसिद्धिप्राचुर्यात्। अन्यथा स्वारस्यभङ्गात्। "आङ्पूर्वो दिशातिर्नियोक्तृप्रयोजनवचनः, उपपूर्वस्तु नियोज्यप्रयोजनवचन" इति हि न्यासकारः। नियोक्तरि प्रयोजनं यस्य तस्यार्थस्य वाचक इत्यर्थः। एवमन्यत्रापि। किंचोपदेश्यत्वं लौकिकालौकिकधर्मब्रह्मभागार्थसाधारणम्। शासितृत्वं तु ब्रह्मणोऽसाधारणम्। 'अन्तः प्रविष्टः शास्ता जनानाम्' 'एतस्य वा अक्षरस्य प्रशासने गार्गि' [बृ० ३।८।९] इत्यादिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात्। निरुपाधिकोपदेश्यत्वं ब्रह्मण

इत्यसाधारण्यमिति चेन्न । इष्टप्राप्त्यनिष्टनिवारणतत्साधनेषु साधारण्यात् । यद्यप्यमितसुखदुःखनिवृत्त्यादिसाक्षादुपदेश्यं स्यात्तथाऽपि संसारनिवृत्तिब्रह्मतदुपासनानामुपदेश्यत्वं साधारणम् । प्रष्टव्यस्योपदेश्यत्वमर्थसिद्धम् । अत उपदेश्यत्वकथने वैयर्थ्यं च । ननु ‘येनाश्रुतम्’ [छा० ६।१।३] इत्यादिनैकवाक्यत्वात् स्वज्ञानेनान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणमिति चेत् । तथाऽपि तादृशमुपदेश्यत्वं प्रतिज्ञावाक्येन प्रष्टव्यत्वोक्त्या चार्थसिद्धमित्यनपेक्षितोपदेश्यत्वकथनादप्यपेक्षितं प्रशासितृत्वमेव वाच्यमिति युक्तम् । येनाश्रुतमित्युपादानत्वे सिद्धे प्रशासितृत्वेन हि निमित्तत्वं सिध्येत् । निमित्तान्तरे सति ह्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते । अतः प्रतिपिपादयिषितवस्तुनोऽपेक्षितासाधारणाकारविशिष्टतयैव प्रतिपादनमुचितम् । घञ्प्रत्ययस्य करणेऽप्युपपन्नत्वाद्विवक्षातः कारकाणां प्रवृत्तिरिति शाब्दोक्तन्यायेन कर्तर्यैव करणान्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते । अकर्तरीति सूत्रस्य प्रयोजनं करणत्वविवक्षां विना कर्तर्यसाधुत्वेन प्रयोगनिवृत्तिः । उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यमर्थानौचित्यं च । प्रशासनपक्षे प्रत्ययास्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम् । अतः प्रशासनमेवाऽऽदेशशब्दाभिधेयमिति स्वीकर्तुं युक्तमिति । अत्रेदं विचार्यते । यत्तावदुच्यते प्रसिद्धिप्राचुर्यात्प्रकृत्यर्थः शासनमिति सत्यमेव तत् । शासनं विविच्य ज्ञापनमिति धातुवृत्तिकृता व्याख्यातत्वादुपदेश एव पर्यवसानम् । ‘उपदेशेऽजनुनासिक इत्’ स्थानिवदादेशोऽनल्विधावित्यादिसूत्रेषु दिशिरुच्चारणक्रिय इति महाभाष्योक्तेः । ‘अथातोऽहंकारादेशः [छा० ७।२५।१] इत्यादावादेश उपदेश इत्यर्थः । इदं शास्त्याचार्य इति भाष्यस्येदमुपदिशतीति ह्यर्थः । तदाशिष्यमित्यादावववक्तव्यमिति व्याख्यातम् । ततश्चाऽऽदेशनं शासनमुपदेशस्तत्कर्मत्वं च ‘अनु म एतां भगवो देवतां शाधि’ [छा० ४।२।२] इति ब्रह्मणः सिद्धमिति प्रकृतिप्रत्यययोरविरोधसंभवात्प्रत्ययास्वारस्यानुसरणस्यायुक्तत्वात् । नचानुशासनकर्मत्वेऽपि न शासनकर्मत्वमिति वाच्यम् । शासु अनुशिष्टाविति शासनस्यैवानुशासनरूपत्वात् । ततश्च करणत्वस्याऽऽरोपेण घञ्प्रत्ययस्य समर्थनमप्यनुचितमारोपस्यानुचितत्वात् । ननु करणत्वस्य नाध्यारोपस्तस्यापि सत्त्वादिति चेन्न । तथा सति सिद्धान्ते प्रत्ययास्वारस्याभ्युपग-

मस्यायुक्तत्वात् । अत एवासिश्छिनत्तीत्यादौ सौकर्यातिशयविवक्षया 'ब्रह्मदृष्टिरुत्कर्षात्' [ब्र० सू० ४ । १ । ५] इति न्यायेन करणे कर्तृत्वारोपेऽपि न कर्तरि करणत्वारोपसंभवः । तथा सति राजनि भृत्यत्वारोपस्यैवानर्थावहत्वात् । अत एव साधकतमं करणमिति सूत्रेऽधिकरणस्थाल्यास्तनुकपालतया साधकतमत्वविवक्षया स्थाल्या पचतीति प्रयोगमुपपाद्य, न चैवं कर्तुरपि करणत्वविवक्षाप्रसङ्गः । भिन्नजातीयत्वात् । सकलसाधनविनियोगकारी खल्वसौ । न हि शतधनो निष्कधनेन स्पर्धितुमर्हतीति कर्तुः करणत्वविवक्षाभावस्यैवोपपादितत्वात् । निक्षेपरक्षायां भगवतो रक्षाकरणत्वानुसंधानं प्रपत्तिरिति पक्षे करणस्य कर्तृत्वासंभवेन जीवस्यैव रक्षकत्वमापतेदिति कर्तृत्वकरणत्वविरोधस्य भगवति करणत्वानुसंधानस्य 'ब्रह्मदृष्टिरुत्कर्षात्' [ब्र० सू० ४ । १ । ५] इतिन्यायविरोधस्य च प्रतिपादितत्वात् । 'शक्तिविपर्ययात्' [ब्र० सू० २ । ३ । ३८] इति सूत्रेऽन्तःकरणस्य कर्तृत्वे ततोऽन्यत्करणं स्यादित्यन्तःकरणातिरिक्तं करणान्तरमभ्युपगन्तव्यं स्यादिति परैरप्युक्तत्वाच्च । किं च प्रशासनकर्तुः करणत्वसंभवे परमात्मनः प्रशासनकर्मत्वस्यापि तथा संभवात्तदसंभवोक्तिर्विरुध्येत । किं च करणत्वे विवक्षिते करणाधिकरणयोश्चेति परेण ल्युटा बाधितत्वेन घञोऽप्रसङ्गात् । न च हलश्चेत्यनेन घञः प्रसङ्गः । तत्रापि संज्ञायामित्यनुवृत्तेः । न च त्वन्मतेऽपि कर्मणि घञ्न स्यात्, अकर्तरि च कारके संज्ञायामिति संज्ञायामेव घञो विधानादिति वाच्यम् । अकर्तरि चेत्यत्र चकारस्य भिन्नक्रमत्वमाश्रित्यासंज्ञायामप्यस्तीति पदमञ्जर्यादौ समर्थितत्वात्, संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनादिति वार्तिककृतोक्तत्वाच्च । किं च घञः करणार्थत्वे 'उपक्रम आदेशशब्देन प्रशासिताऽभिधीयते' इति यदभिहितं तद्विरुध्येत । प्रशासनकरणत्वस्यैवाभिहितत्वेन प्रशासनकर्तुरनभिहितत्वात् । यच्चोक्तं प्रशासितृत्वमसाधारणमिति तदपि न । आदेशशब्देन प्रशासनकरणत्वमात्राभिधानेन प्रशासितृत्वानभिधानात् । तदभिधानेऽपि निरुपाधिकप्रशासितृत्वस्यैव मुख्योपदेश्यत्वस्य ब्रह्मासाधारणत्वात् । अत एव 'ब्रह्मजिज्ञासा' [ब्र० सू० १ । १ । १] इति सूत्रे ब्रह्मण इति कर्मणि षष्ठीपरिग्रहाद्ब्रह्मण एवाऽऽभिधानिकं जिज्ञासाकर्मत्वं तदुपासनादीनां त्वाक्षेप्यमित्युक्तम् । किं चाऽऽदेशशब्दमात्रस्य ह्यतिप्रसङ्गमाश-

श्च तमित्येवं विशेषणोपादानादवश्यं तमित्यस्याऽऽदेशविशेषकत्वमभ्युपेयम् । यदि त्वादेशशब्दस्यैव निरुपाधिकप्रशासितृत्वमर्थः, तदा तस्य परमात्मासाधारणत्वात्तच्छब्दो विशेषको न स्यात् । यदपि चोक्तं प्रष्टव्यत्वकथनेनोपदेश्यत्वं सिद्धमिति तत्कथनस्यानपेक्षितत्वात्प्रशासितृत्वमेवार्थ इति तन्न । यद्यपि पूर्वं नाप्राक्षम् । अधुना स्वयमेव ज्ञास्यामीति बुद्धिं व्युदसितुमुपदेष्टव्यत्वकथनस्यैवापेक्षितत्वात् । अत एव 'तं त्वौपनिषदं पुरुषं पृच्छामि' [ बृ० ३ । ९ । २६ ] इत्यादौ प्रष्टव्यस्योपदेश्यत्वलक्षणौपनिषदत्वकथनं॥यच्चोक्तं सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं निमित्तत्वमपेक्षितमिति तन्न । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाबलादुपादानत्वस्यैव तदन्यथानुपपत्त्या निमित्तत्वस्यापि लाभसंभवेन तस्य पृथग्वक्तव्यत्वाभावात्तदनुपपत्तेर्भवतैवोक्तत्वादिति । अत्रोच्यते—'एष आदेश एष उपदेशः' [ तै० १ । ११ । ४ ] इत्येवं पृथगुपदिष्टयोः 'न वायुक्रिये पृथगुपदेशात्' [ ब्र० सू० २ । ४ । ९ ] इति न्यायेनाऽऽदेशोपदेशयोर्भेदावश्यंभावान्निमन्त्रणामन्त्रणयोरिव वृक्षवनस्पतिशब्दयोरिव च स्नेहभक्तिशब्दयोरिव च क्वचिदेकविषये प्रयोगमात्रेणानुभवभेदस्य दुरपह्नवत्वात् । आदिशतीत्युक्ते हि यद्वाक्योल्लङ्घने दण्डो भवति तादृशशब्दप्रयोक्तृत्वं नियमयितृत्वमाज्ञापयितृत्वं प्रतीयते । अत आदिशतीति व्यवहारः प्रभुविषय एव । अत एव न्यासकारेणाऽऽदेशोपदेशयोर्भेदो वर्णितः—आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः । उपपूर्वस्तु नियोज्यप्रयोजनवचन इति । 'अन्तः प्रविष्टः शास्ता जनानाम्' इत्यादौ तथैव प्रतीतेः । ततश्च प्रकृतिस्वारस्येन नियमनापरपर्याया-ज्ञापनरूपार्थे प्रतीते घञ्प्रत्ययस्य कर्तृव्यतिरिक्तकारकमात्रवाचिनो योग्यतावशात्त्वन्मते कर्मार्थकत्ववदस्मन्मतेऽपि कारकवाचिनो घञ्प्रत्ययस्य सकलकारकप्रयोक्तृकर्तृलक्षणा समाश्रीयते प्रष्टव्यवस्तुनस्तादृग्रूपत्वात् । असंजातविरोधिमुख्यप्रकृत्यर्थानुग्रहेण जघन्यप्रत्ययलक्षणाया आश्रयणीयत्वात् । पञ्चपञ्चाशतस्त्रिवृतः संवत्सरा इत्यादावहःपरत्वस्वरसात्त्रिवृदादिपदमुख्यत्वानुसारेण जघन्यसंवत्सरपदस्यैव सौरचान्द्रमसाद्यनेकार्थसाधारण्येन निश्चयासमर्थस्याजहल्लक्षणाया अभ्युपेतत्वात् । तथा प्रयाजशेषेण हवींष्यभिघारयतीत्यादौ प्रयाजशेषप्रातिपदिकानुरोधेन तृतीयाया द्वितीयार्थलक्षणाया आश्रितत्वात् । तथा प्राणा वा ऋषय इत्यादावृषिशब्दानुसारेण बहुवचनश्रुतेः पाशन्यायेन गौणार्थक-

त्वस्य 'गौण्यसंभवात्' 'तत्प्राक्श्रुतेश्च' [ब्र० सू० २।४।२।३] इत्यत्रोपपादितत्वाच्च । नन्वादेशपदस्य प्रशासनापरपर्यायाज्ञापनरूपादेशप्रसिद्धस्योपदेशप्रसिद्धिप्राचुर्याभावेऽप्युपदेशार्थकत्वे प्रकृतेः सर्वात्मना मुख्यार्थत्यागाभावात्प्रत्ययस्य त्वन्मते कर्तृलक्षणायां मुख्यार्थत्यागात्कांस्यभोजिन्यायेन जघन्यद्यावापृथिव्येककपालानुरोधेन मुख्येन्द्राग्न्यादीनां प्रसूनबर्हिर्नियमाश्रयणवदेकधा ब्रह्मण उपहरतीत्यत्र सक्तूनां सहत्वसाधारणस्यैकधाशब्दस्य प्रक्षान्तरप्रापकदुर्बलचोदकानुग्रहेण सहत्वार्थस्वीकारवत्सप्तदश प्राजापत्यानित्यत्र प्रजापतिसंबन्धविशिष्टान्वययोग्यस्यापि बहुत्वस्यैकपशुनिष्पन्नैकादशावदानप्रापकदुर्बलचोदकानुसारेण विशिष्टान्वयाभ्युपगमेन द्रव्यदेवतासंबन्धाक्षिप्तयागभेदाभ्युपगमवच्च जघन्यघञ्प्रत्ययानुसारेण मुख्यदिशेरुपदेशार्थकत्वमेव युक्तम्, प्रकृते मुख्यार्थत्यागाभावात् । प्रचुरप्रसिद्धमुख्यार्थत्यागमात्रं त्ववशिष्यते तत्तु न दोषाय । अत एव पत्नय उपगायन्तीत्यादौ गीतिशब्दस्य शारीरगाने प्रसिद्धिप्राचुर्ये सत्यप्यशारीरवादित्रादिगानस्यापि गीतिशब्दप्रयोगविषयत्वेन मुख्यार्थत्वात्संनिहितदुन्दुभ्यादिगानस्यैव काण्डवीणादिभिरुपचयं कुर्वत्यः पत्न्यो नर्त्विजां निवर्तिका इति दशमे सिद्धान्तितमिति चेन्नैवम् । गानशब्दस्य बर्हिराज्याधिकरणन्यायेन गीतिमात्रवाचित्वाद्युक्तं तत्र संनिहितदुन्दुभ्यादिगानवाचित्वम् । इह त्वादेशशब्दस्य क्वचिदपि शिष्यो गुरुमादिदेशेत्यादिप्रयोगाभावेन साधारणोच्चारणार्थकत्वाभावादुपदेशातिदेशशब्दयोरिवाऽऽदेशोपदेशशब्दयोरपि भिन्नार्थकत्वेनाऽऽदेशशब्दस्योपदेशार्थकत्वे मुख्यार्थत्यागस्यावर्जनीयत्वेन जघन्यप्रत्यय एव लक्षणाया उचितत्वात् । वस्तुतस्तूपदेशोऽजनुनासिक इदिति सूत्रे करणाधिकरणयोश्चेति ल्युटा बाधितस्य घञोऽकर्तरि च कारक इत्यनेनाप्रसङ्गमाशङ्क्य कृत्यल्युटो बहुलमिति घञो भाष्यकृता समर्थितत्वात्तन्न्यायेन कर्तर्यपि तेनैव सूत्रेण घञिसिद्धौ लक्षणाया अप्रसङ्गात्प्रशासितृत्वार्थकत्वमेवाऽऽदेशशब्दस्य युक्तम् । आदेशनमादेश इति घञन्ताद्भाववाचिन आदेशशब्दादर्शआद्यजन्तादपि प्रशासितृत्वार्थकत्वमेवाऽऽदेशशब्दस्य युक्तमिति वयमुत्पश्यामः । ततश्च 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः '[बृ०३।८।९] प्रशासितारं सर्वेषामित्यादिश्रुतिस्मृतिप्रतिपन्नं परमात्मधर्मभूतं प्रशासितृत्वमिहाऽऽदेशशब्दार्थः । एतत्सर्वमस्माभिर्भावप्रकाशिकायां प्रपञ्चितं तत्रानुसंधेयम् । प्रशासनेन च धारकत्व-

लक्षणमात्मत्वं फलितम् । ततश्चाऽऽदेशशब्द आत्मत्वपर्यन्तः । 'येनाश्रुतं श्रुतं भवति [ छा० ६ । १ । ३ ] इत्यत्र 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' [ मु० १ । १ । ३ ] 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इद१ँ सर्वं विदितं भवति' [ बृ० ४ । ५ । ६ ] इति मुण्डकबृहदारण्यकवाक्यानुसारेण येन श्रुतेन मतेन विज्ञातेनाश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवतीति वाक्यपर्यवसितोऽर्थः । ब्रह्मस्वरूपसत्तामात्रस्याश्रुतश्रुतत्वादिहेतुत्वाभावादत्राश्रुतामतादिशब्दानाम् 'इद१ँ सर्वं विदितं भवति' इतिश्रुत्यन्तरानुसारात्सर्वार्थकत्वं द्रष्टव्यम् । ततश्च येन श्रुतेन सर्वं श्रुतं भवतीत्यर्थः । ततश्चाश्रुतं श्रुतं भवतीत्यश्रुतस्य श्रुतत्वप्रतिपादनं कथमिति शङ्काया नावकाशः । अश्रुतशब्दस्य सर्वपरत्वात् । यद्वाऽवस्थाविशिष्टतयाऽश्रुतं स्वरूपेण श्रुतं भवतीत्यर्थः । अत्र विज्ञानशब्दो निदिध्यासनपरः, श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति क्रमप्रत्यभिज्ञानादिति द्रष्टव्यम् । अत्र येनाश्रुतं श्रुतमित्यनेन किमुपादानमिति पृष्टं भवति । प्रशासितृत्वार्थकेनाऽऽदेशशब्देन चाऽऽत्मस्वरूपं पृष्टं भवति । ततश्चाऽऽत्मभूतमुपादानं किमिति प्रश्नस्य फलितार्थः । अत एव श्रीविष्णुपुराणे—

यन्मयं च जगद्ब्रह्मन्यतश्चैतच्चराचरम् ।

इति श्लोके यन्मयमित्यात्मस्वरूपं यतश्चैतच्चराचरमित्युपादानं च पृष्टम् । अत एव 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' [छा० ६।८।४] इति प्रतिवचनेन सदायतना इति सत आत्मत्वं सन्मूलाः सत्प्रतिष्ठा इति सत उपादानत्वं च प्रतिपाद्यत इति द्रष्टव्यम् । अत एव 'अथातोऽहंकारादेशः' [छा० ७।२५।१]। 'अथात आत्मादेशः' [छा० ७।२५।२] 'अथात आदेशो नेति नेति' [बृ० २।३।६] 'आदित्यो ब्रह्मेत्यादेशः' [छा० ३।१९।१] 'उभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च' [ छा० ३।१८।१ ] इत्यादाविवाऽऽदेशशब्दस्योपदेशार्थकत्वमेवास्तु न प्रशासनार्थकत्वमिति शङ्का पराकृता । अतो जगदुपादानभूतं जगदात्मानं किं पृष्टवानसीत्यर्थः । अत्र ज्ञातवानसीत्यनुक्त्वा पृष्टवानसीत्युक्तवतः

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ [गी०४।३४]

इत्युक्तरीत्या प्रणिपातादिप्रसन्नाचार्योपदेशगम्य एव सोऽर्थः। न तु प्रकारान्तरेण ज्ञातुं शक्य इत्यभिप्रायः। अन्यज्ञानेनान्यज्ञानासंभवादेकविज्ञानेन सर्वविज्ञानासंभवं मन्वानश्चोदयति—

कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥

हे भगव ईदृश आदेशः कथं भवेदित्यर्थः ॥ ३ ॥

उपादानोपादेययोस्तत्संभवतीत्यभिप्रायेणोत्तरमाह—

यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्यात्।

यथोपादानभूते मृत्पिण्डे ज्ञाते तदुपादेयघटशरावादिकं ज्ञातं भवति तद्वदित्यर्थः। नैयायिकरीत्याऽसदेव घटादिकं मृत्पिण्डेनोत्पद्यते। अतश्चोपादानोपादेययोर्भेदान्न मृत्पिण्डे ज्ञाते सर्वमृन्मयानां ज्ञातत्वं संभवतीति मन्वानं प्रत्याह—

वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥

घटत्वादिलक्षणो विकारो घटशरावादिनामधेयं च। आरभ्यते स्पृश्यत इत्यारम्भणं कर्मणि ल्युट्। तेनैव मृद्द्रव्येण घटशरावादिलक्षणो विकारो घटशरावादिनामधेयं च स्पृश्यत इत्यर्थः। आरम्भणशब्दस्य पुंनपुंसकलिङ्गान्तविकारनामधेयविशेषणत्वेऽपि नपुंसकैकशेषैकवद्भावाभ्यां वा लिङ्गसामान्यादिविवक्षया वाऽऽरम्भणमिति नपुंसकैकवचननिर्देशः। मृद्द्रव्येण विकारनामधेये कस्मै प्रयोजनाय स्पृश्येते इत्यत्राऽऽह—वाचेति। प्रयोजनस्य हेतुत्वविवक्षया तृतीया। वाक्शब्दश्चाजहल्लक्षणया वागादिव्यवहारपरः। ततश्च वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते मृत्पिण्ड एव नामरूपभाग्भवतीत्यर्थः। अत्र यद्यपि मृत्पिण्डमृन्मयाभेदप्रतिपादनं वाचाऽऽरम्भणं विकार इत्येतावन्मात्रेणापि सिध्यतीति न नामधेयस्यापि स्पृश्यत्वं वक्तव्यं तथाऽपि संज्ञाभेदादुपादानोपादेययोर्भेदशङ्काव्युदासाय नामापि मृद्द्रव्येण स्पृश्यत इत्युक्तिरपेक्षितेति द्रष्टव्यम्। कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह—मृत्तिकेत्येव सत्यम्। मृन्मयं घटादिकं मृत्तिकेत्येव प्रमाणप्रतिपन्नं न तु तद्भिन्नत्वेनेत्यर्थः। यद्वा मृन्मयं मृत्तिकेति वाक्यमेव सत्यमबाधितार्थकमित्यर्थः। ततश्चोपादानोपादेययोरभेदादुपादाने ज्ञात उपादेयस्य ज्ञातता भवतीत्यर्थः। एतेन "विकारो वाचाऽऽरम्भणं वागालम्बनमात्रं नामधेयं स्वार्थे धेयप्रत्ययः, नामैव केवलं न विकारो नाम वस्त्वस्ति मृत्तिकेत्येव सत्यमिति

यत्परैरुक्तं तदपास्तम्। वाचाऽऽरम्भणमित्यस्य वागालम्बनमित्येतदर्थकत्वे प्रमाणाभावात्, वागालम्बनमात्रमित्यतो नामधेयमित्यनेनातिरिक्तार्थाप्रतिपादनात्पुनरुक्तिश्च, मृत्तिकासत्यत्वमात्रत्वविवक्षायामितिशब्दवैयर्थ्यं च। उक्तं चाभियुक्तैः—

वाचाऽऽरम्भणमित्युक्तेर्मिथ्येत्यश्रुतकल्पनम्।
पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता ॥ इति।

किं च परमते 'येनाश्रुतं श्रुतं भवति' [छा० ६।१।३] इति संदर्भोऽपि न युज्यते। शुक्तितत्त्वे ज्ञाते तदध्यस्तरजतादेर्निवृत्तावपि रजतस्य ज्ञातत्वादर्शनेन ब्रह्मणि ज्ञाते तदध्यस्तप्रपञ्चस्य निवृत्तावपि ज्ञातत्वासंभवात्। ननु शुक्तौ ज्ञातायां रजतस्य तत्त्वं ज्ञातमेव शुक्तिव्यतिरिक्तरजतत्वस्याभावात्। एवं ब्रह्मणि ज्ञाते प्रपञ्चस्य तत्त्वं ज्ञातमेवेति चेन्न। परमार्थशुक्तेरपरमार्थरजततत्त्वरूपत्वाभावात्। न हि शुक्तौ ज्ञातायां रजततत्त्वं ज्ञातमिति व्यवहारो दृष्टचर इत्यास्तां तावत्। ननु सर्वं मृन्मयं विज्ञातं स्यादित्यत्र विकारार्थमयट्प्रत्ययेन घटत्वशरावत्वाद्यवस्थावद्द्रव्यरूपो विकार एवाभिधातव्यो न तु घटत्वशरावत्वाद्यवस्थारूपो विकारः। तस्य मृत्पिण्डापेक्षया भिन्नत्वेन तज्ज्ञानेन ज्ञातत्वासंभवात्। ततश्च तदुपपादके वाचाऽऽरम्भणं विकार इति वाक्येऽपि विकारशब्देनावस्थावद्द्रव्यलक्षणस्यैव विकारस्याभिधानमुचितं न त्ववस्थालक्षणविकारस्येति चेत्सत्यम्। तस्यैवाभिधानमुचितम्। तथाऽपि मृद्द्रव्येण घटशरावादिलक्षणस्यावस्थावतो द्रव्यस्य स्पर्शासंभवात्। न ह्यात्मैवाऽऽत्मना स्प्रष्टुं शक्यः। अतो मृन्मयमित्यत्र विकारवाचिमयट्प्रत्ययेनावस्थावतोऽभिधानेऽपि तदुपपादके वाचाऽऽरम्भणं विकार इति वाक्ये विकारशब्देनावस्थाया एव ग्रहणमुचितम्। तथा मृत्तिकेत्येव सत्यमित्यत्र विशेष्याकाङ्क्षायां सत्यमिति नपुंसकलिङ्गानुरोधादवस्थावद्द्रव्यवाचि मृन्मयमित्येतद्विशेष्यतयाऽनुषज्यते। ततश्च सर्वं मृन्मयं मृत्तिकेत्येव सत्यमित्यत्रावस्थावद्द्रव्यमेव विकारवाचिना मयट्प्रत्ययेनाभिधीयत इति न कश्चिद्दोष इति द्रष्टव्यम् ॥ ४ ॥

**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥ ५ ॥**

लोहमणिः स्वर्णपिण्डविशेषः ॥ ५ ॥

यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यम्।

नखनिकृन्तनशब्देन कार्ष्णायसपिण्डो लक्ष्यते । शिष्टं पूर्ववत् ।

एवꣳ सोम्य स आदेशो भवतीति ॥ ६ ॥

मयोक्त आदेशो मृत्पिण्डादितुल्य इत्यर्थः ॥ ६ ॥

एवमुक्तः पुत्र आह—

न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेव मे तद्ब्रवीत्विति ।

भगवन्तः पूजावन्तो मम गुरव एतत्स्वरूपं न ज्ञातवन्तः, यद्येतद्वस्तुतो जानीयुस्तर्हि भक्ताय गुणवते मह्यमुपदिशेयुर्हि । नोपदिष्टवन्तस्तु ते तेनाहं मन्ये न विदितवन्त इतीत्यर्थः । एवमवाच्यमपि गुरोर्न्यूनं पुनर्गुरुकुलं प्रति प्रेषणभयादुक्त्वा भगवानेव तद्वस्तूपदिशत्विति पितरं प्रार्थयामासेत्यर्थः ।

तथा सोम्येति होवाच ॥ ७ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य

प्रथमः खण्डः ॥ १ ॥

---

पिताऽपि तत्तथैव वदामीत्युक्तवानित्यर्थः ॥ ७ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य

प्रथमः खण्डः ॥ १ ॥

---

प्रतिज्ञातस्यैकविज्ञानेन सर्वविज्ञानसमर्थनाय जगतो ब्रह्मैककारणतां प्रतिपादयितुं प्रवृत्तो यथा लोकेऽपराह्णे प्रसारितानां घटशरावोदञ्चनादीनां च मृत्पिण्डैकोपादानतां प्रतिपिपादयिषुः पूर्वाह्ण एतद् घटशरावादिकं मृत्पिण्ड एवाऽऽसीदिति प्रतिपादयति तथा प्रतिपादयति—

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ।

इदं विभक्तनामरूपं बहुत्वावस्थं जगदग्रे सृष्टेः प्रागेकमेवाविभक्तनामरूपतयैकत्वावस्थापन्नमेवाद्वितीयमधिष्ठात्रन्तरशून्यं सदेवाऽऽसीदित्यर्थः । अत्र सच्छब्दो न [illegible] संबन्धयोग्यत्वलक्षणं सत्त्वं प्रवृत्तिनिमित्ती-

(छेत्र-चाक्षरेऽपि चकारो द्रष्टव्यः)

कृत्य परमात्मनि वर्तते। अयं च सच्छब्दो विशेष्यभूतपरमात्मवाचकोऽपि कारणविषयत्वसामर्थ्यात्कारणत्वौपयिकगुणविशिष्टप्रकृतिपुरुषकालशरीरकं परमात्मानमुपस्थापयति 'देवाँ आज्यपाँ आवह' इत्यादौ विशेष्यवाचिन एवाऽऽज्यशब्दस्य विकृतिषु पृषदाज्यवाचित्वस्य दाशमिकन्यायसिद्धत्वात्। अत्र सदेवेत्येवकारेण नैयायिकाभिमतमुत्पत्तेः प्राग्जगतोऽसत्त्वं व्यावर्त्यते। सदेवेत्येवकारस्य नैयायिकाभिमतोत्पत्तिप्राक्कालीनकार्यासत्त्वव्यावर्तकत्वं 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यसत्कार्यवादिदर्शनप्रतिक्षेपपरोत्तरवाक्यसंदर्भादवसीयते। एकमेवेत्येवकारेण 'बहु स्याम्' [छा० ६। २। ३] इति वक्ष्यमाणा स्रक्ष्यमाणकार्यबहुत्वावस्था व्युदस्यते। 'तदैक्षत' 'तत्तेजोऽसृजत' [छा० ६। २। ३] इत्युत्तरवाक्यसंदर्भे सच्छब्दितस्यैव निमित्तत्वकथनादद्वितीयमित्यनेन निमित्तान्तरं निषिध्यते। ततश्चैकमद्वितीयमितिपदाभ्यामभिन्ननिमित्तोपादानत्वं सिद्धं भवति। ततश्चायमर्थः—इदं बहुत्वावस्थं विभक्तनामरूपं प्रत्यक्षतया दृश्यमानं जगत्सृष्टेः प्राङ्निमित्तान्तरशून्यमविभक्तनामरूपतयैकं सच्छब्दितं ब्रह्मैवाऽऽसीदित्यर्थः। यद्यपीदानीमपि जगत्सदेव तथाऽप्यविभक्तनामरूपसद्भावापत्तिः सृष्टेः प्रागेवेत्यग्र इत्यस्य नानुपपत्तिः। न च सच्छब्दस्य सूक्ष्मप्रकृतिकालजीवशरीरकब्रह्मपरत्वेन सच्छब्दस्य कार्यभूते जगति सृष्टेः प्राक्ताहृशब्रह्मत्वबोधकत्वेऽपि जगति सत्तासंबन्धबोधकत्वाभावेनासत्कार्यवादव्युदासकत्वं कथमिति वाच्यम्। सृष्टेः प्राक्सच्छब्दितब्रह्माभेदबोधने नैयायिकाभिमतासत्त्वव्युदासस्याप्यर्थसिद्धत्वात्। एतेनैकमेवाद्वितीयमित्येतत्प्रपञ्चमिथ्यात्वे प्रमाणयन्तः परे प्रत्युक्ताः। तस्य ब्रह्मव्यतिरिक्तमिथ्यात्वपरत्वे सदेव सोम्येदमग्र आसीदिति कालप्रापकेण पूर्वेणाग्रपदेन 'तदैक्षत नामरूपे व्याकरवाणि' [छा० ६। ३। २] इतीक्षणनामरूपात्मकप्रपञ्चप्रापकेणोत्तरेण च विरोधप्रसङ्गात्। किं चेदंशब्दोदितं सर्वं जगत्सृष्टेः प्रागेकमेवाद्वितीयं सदेवाऽऽसीदिति परैर्व्याख्यातत्वेन सृष्टिप्राक्कालेऽद्वितीयपदेन द्वितीयासत्त्वबोधनेऽपि सृष्ट्युत्तरकालं तस्यासत्त्वाप्रतिपादनेन जगतो मिथ्यात्वासिद्धेः, घटशरावादिकं सर्वं सृष्टेः प्रागद्वितीयैकमृत्पिण्ड एवाऽऽसीदित्युक्त्या घटशरावादीनां मिथ्यात्वप्रतिपादनादर्शनात्प्रागसत्त्वप्रतिपादनेन ह्यनित्यत्वमात्रं सिध्येन्न तु मिथ्यात्वम्। न च 'नेह नानाऽस्ति' [बृ० ४। ४। १९] इति वाक्यात्सृष्ट्युत्तर-

कालमप्यसत्त्वावेदनान्मिथ्यात्वसिद्धिरिति वाच्यम् । 'न स्थानतोऽपि परस्य' [ब्र० सू० ३ । २ । ११] इत्यधिकरणे तस्य वाक्यस्य ब्रह्मगतनानात्वनिषेधपरतया परैरेव व्याख्यातत्वात् । नन्वनित्यत्वमेव मिथ्यात्वम् 'अनित्यस्य धर्मिणोऽनित्यत्वमसत्यत्वम्' इति वाचस्पतिमिश्रोक्तेः । विद्यारण्ययतिनाऽपि तथैवोक्तत्वात् ।

अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ॥
परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ।

इति पराशरस्मरणादप्यनित्यत्वमेव मिथ्यात्वमिति चेत् । ईदृशस्य प्रामाणिकस्य प्रत्यक्षाविरुद्धस्य प्रपञ्चमिथ्यात्वस्यास्माभिरप्यप्रतिक्षेप्यत्वादित्यास्तां तावत् । सदेवाऽऽसीदिति सृष्टिप्राक्काले ब्रह्माभेदप्रतिपादनमुखेन सत्कार्यवादमुक्त्वा तद्विरोध्यसत्कार्यवादं नैयायिकाभिमतं वाचारम्भणमित्यादिना प्रतिक्षिप्तमपि कण्ठतः प्रतिक्षेप्तुं तन्मतमुपन्यस्यति—

तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् ।

इदं जगदग्रे सृष्टेः प्रागसदेवाऽऽसीन्न तु सदासीदित्यर्थः । नामरूपविभागाभावलक्षणस्यासत्त्वस्य सिद्धान्तेऽपि संमतत्वादाह—एकमेवाद्वितीयम् । प्रागभावव्यतिरेकेणावस्थाया वाऽवस्थाश्रयस्य वा कस्यापि सत्त्वं नास्तीत्यर्थः । यद्वाऽसदेवेत्यत्र, अ, इत्येतत्सत्पदेनासमस्तं सत् 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, इति वाक्यार्थप्रतिक्षेपकम् ।

सत्त्वेत्यर्थः तस्मादसतः सज्जायत ॥ १ ॥

सदिति भावप्रधानो निर्देशः । यस्माद्धेतोरुत्पत्तेः प्रागवस्थाश्रयस्याप्यभावस्तस्माद्धेतोरसतः सत्त्वरूपोत्पत्तिरजायताभवदित्यर्थः । पर्यवसन्नमिति यावत् । जायतेत्यत्राडभावश्छान्दसः ॥ १ ॥

तन्मतं प्रतिक्षिपति—

कुतस्तु खलु सोम्यैवꣳ स्यादिति
(कुतः) होवाच कथमसतः सज्जायेतेति ।

केन प्रमाणेनासत उत्पत्तिः प्रतीयेत तदेवेदमिति प्रत्यभिज्ञाविरोधेन प्रमाणस्यानवतारादिति भावः । अतः कथमसतो द्रव्यस्य सत्ता भवेत् ।

अतोऽसतः सत्त्वमुत्पत्तिर्न भवत्यपि तु सत एव द्रव्यस्य प्रथमक्षणावच्छिन्नावस्थान्तरसंबन्ध एवोत्पत्तिरित्यर्थः। एवं परपक्षं प्रतिक्षिप्य स्वमतमुपसंहरति—

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्।

नन्विदंशब्देन जगन्मात्रपरामर्शे तस्य सच्छब्दितब्रह्माभिन्नत्वेन सदेवेदमग्र आसीदिति प्रतिपादितब्रह्माभेदानुपपत्तिः। नापीदंशब्देनेदंशब्दितजगच्छरीरकब्रह्मप्रतिपादनं संभवति, अश्रुतवेदान्तं प्रतीदमादिशब्दानां ब्रह्मपर्यन्तप्रत्यायकत्वासंभवादिति चेदस्याः शङ्कायाः परिहारो मुण्डकप्रकाशिकायामेव प्रपञ्चितः। अत्रापि च स्वावसरे करिष्यामस्तत्रैवानुसंधातव्यः॥ २॥

तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत।

तदेतत्सच्छब्दवाच्यं परं ब्रह्म विचित्रानन्तचिदचिन्मिश्रव्यष्टिजगद्रूपेणाहमेव बहु स्यां तदर्थं तेजोबन्नादिसमष्टिरूपेण प्रकर्षेण जायेयेति संकल्प्य तेजः ससर्ज।

तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत।

अत्राचेतनस्य तेजआदेरीक्षितृत्वासंभवात्तेजआदिशब्दास्तच्छरीरकपरमात्मपरा द्रष्टव्याः। भाष्यकृता 'गौणश्चेन्नाऽऽत्मशब्दात्' [ ब्र० सू० १। १। ६ ] इति सूत्रे तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः। 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इति मुख्य एवेक्षणव्यपदेश इति भाषितम्। तथा 'तदभिध्यानादेव तु तल्लिङ्गात्सः' [ ब्र०सू० २। ३। १३ ] इतिसूत्रे 'तत्तेज ऐक्षत'' ता आप ऐक्षन्त' इति श्रूयमाणमीक्षणं तच्छरीरकस्य परस्यैव ब्रह्मण उपपद्यत इति भाषितम्। 'संज्ञामूर्तिक्लृप्तिस्तु' [ ब्र० सू० २। ४। २० ] इत्यधिकरणे च 'तत्तेज ऐक्षत' इति तेजःशरीरकं परं ब्रह्मैवाभिधीयत इति च भाषितम्। न च तत्तेज ऐक्षतेत्यत्र तेजःशब्दस्य तेजःशरीकब्रह्मपरत्वे 'तत्तेजोऽसृजत' इति वाक्येऽपि तेजःशब्दस्य ब्रह्मपरत्वं स्यात्। न चेष्टापत्तिर्ब्रह्मणः सृज्यत्वाभावादिति चेन्न। तेजःशरीरकब्रह्मणः कार्यत्वेन सृज्यत्वे दोषाभावात्। तेजसो जलहेतुत्वं उपपत्तिं दर्शयति—

तस्माद्यत्र क्वचन शोचति स्वेदते वा पुरुष-
स्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥

यत्र क्वचन देशे काले च पुरुषः संतप्यते प्रस्विद्यते वा तत्तदा तेजस एवाऽऽपोऽधिजायन्त इत्यर्थः ॥ ३ ॥

ता आप ऐक्षन्त बह्व्यः स्याम
प्रजायेमहीति ता अन्नमसृजन्त ।

अत्रान्नशब्देन महाभूताधिकारात्पृथिव्युच्यते। सूत्रितं च 'पृथिव्यधिकाररूपशब्दान्तरेभ्यः' [ब्र० सू० २ । ३ । १२] इति । अधिकारो महाभूताधिकारः । रूपं 'यत्कृष्णं तदन्नस्य' [छा० ६ । ४ । १] इति। तैत्तिरीयके 'अद्भ्यः पृथिवी' [तै० २ । १ । १] इति शब्दान्तरम् । एतच्च सूत्रमन्यत्र व्याकृतम् । अपामन्नहेतुत्वे युक्तिमाह—

तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति ।

तदेव तत्रैवेत्यर्थः ।

अद्भ्य एव तदध्यन्नाद्यं जायते ॥ ४ ॥

---

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
द्वितीयः खण्डः ॥ २ ॥

---

तत्तस्मात्पृथिव्येकदेशस्य व्रीहियवादिलक्षणस्यान्नस्य वृष्टिप्रभवत्वदर्शनादेव हेतोरन्नाद्यमन्नप्रभृतिपृथिवीत्वावच्छिन्नमप्यद्भ्य एवाधिजायत इत्यर्थः । एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते द्वितीयाध्याये। छान्दोग्ये 'तत्तेजोऽसृजत' [छा० ६ । २ । ३] इति तेजस एव प्रथमतः सृष्ट्यभिधानादाकाशोत्पत्तेरश्रुतेराकाशो नोत्पद्यत इति 'न वियदश्रुतेः' [ब्र० सू० २ । ३ । १] इति सूत्रेण पूर्वपक्षे प्राप्त उच्यते 'अस्ति तु [ब्र०सू०२ । ३ । २] आकाशस्याप्युत्पत्तिरस्त्येव तैत्तिरीयके 'आत्मन आकाशः संभूतः' [२ । १ । १] इत्युत्पत्तेः श्रवणात् । पुनश्चोदयति 'गौण्यसंभवाच्छब्दाच्च' [ब्र० सू० २ । ३ । ३ । ४] 'आत्मन आकाशः संभूतः' इत्युत्पत्तिश्रुतिर्गौणी निरवयवाकाशोत्पत्तेश्छान्दोग्ये चाश्रुतायाः प्रतिपादनासंभवात् 'वायुश्चान्तरिक्षं चैतदमृत-

मुभयम्' [बृ० २ । ३ । ३] इत्याकाशस्यामृतत्वश्रवणाच्चेत्यर्थः । नचाऽऽत्मन आकाशः संभूत इत्यत्राऽऽकाशे संभूतशब्दस्य गौणत्वे 'आकाशाद्वायुः । वायोरग्निः' [तै० २ । १ । १] इत्यादौ श्रुतस्य संभूतत्वस्यापि गौणत्वं स्यादित्यत आह—'स्याच्चैकस्य ब्रह्मशब्दवत्' [ब्र० सू० २ । ३ । ५] । एकस्यैव संभूतशब्दस्याऽऽकाशे गौणत्वं वायोरग्निरित्यादावनुषक्तस्य संभूतशब्दस्य मुख्यत्वं च संभवति । यथा मुण्डके 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' [मु० १ । १ । ९] इति प्रधाने गौणतया प्रयुक्तस्य ब्रह्मशब्दस्य तस्मिन्नेव प्रकरणे 'तपसा चीयते ब्रह्म,' [मु० १ । १ । ८] इति ब्रह्मणि मुख्यतया प्रयोगदर्शनात् । परिहरति—'प्रतिज्ञाहानिरव्यतिरेकात्' [ब्र० सू० २ । ३ । ६] आकाशस्यापि ब्रह्मोपादेयतया ब्रह्मव्यतिरेके सत्येवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अहानिर्भवति ब्रह्माकार्यस्यापि वस्तुनः सत्त्व एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं हीयेतेत्यर्थः । 'शब्देभ्यः' [ब्र० सू० २ । ३ । ६] । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' [छा० ६ । २ । १] । 'ऐतदात्म्यमिदं सर्वम्' [छा० ६ । ८।७] । इत्यादिशब्दैः सर्वस्यापि वस्तुनो ब्रह्मकार्यत्वब्रह्मात्मकत्वप्रतिपादनपरैश्चायमर्थो विधीयते । 'यावद्विकारं तु विभागो लोकवत् ।' [ब्र० सू० २ । ३ । ७] । तुशब्दश्चार्थे छान्दोग्ये—'ऐतदात्म्यमिदं सर्वम्' । इत्यादिभिराकाशादेः सर्वस्यापि विकारत्वप्रतिपादनादेव विभागशब्दितोत्पत्तिरप्युक्तैव । यथा लोक एते सर्वे देवदत्तपुत्रा इत्यभिधाय तेषु केषांचिदुत्पत्तिप्रतिपादनेऽपि सर्वेषामुत्पत्तिः प्रतिपादितैव भवति तद्वत् । 'वायुश्चान्तरिक्षं चैतदमृतम् ।' [बृ० २ । ३ । ३] । इति तु देवानामिव चिरकालस्थायित्वाभिप्रायम् । 'एतेन मातरिश्वा व्याख्यातः' [ब्र० सू० २ । ३ । ८] । आकाशोत्पत्तिप्रतिपादनेनैव वायोरप्युत्पत्तिः प्रतिपादितैवेत्यर्थः । 'असंभवस्तु सतोऽनुपपत्तेः' [ब्र० सू० २ । ३ । ९] । तुशब्दोऽवधारणार्थः । असंभवोऽनुत्पत्तिः सतो ब्रह्मण एव तद्व्यतिरिक्तस्य कृत्स्नस्याव्यक्तमहदहंकारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्यैकविज्ञानेन सर्वविज्ञानादिभिरवगतकार्यभावस्यानुत्पत्तिर्नोपपद्यत इत्यर्थ इति स्थितम् । प्रकृतमनुसरामः ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
द्वितीयः खण्डः ॥ २ ॥

सर्वस्येतरस्यापि तेजोबन्नात्मकबीजत्रयप्रसूतत्वं दर्शयति—

तेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥

आण्डजम् । अण्डजं पक्षिसर्पादि स्वार्थेऽण् । जीवजं गर्भवेष्टनलक्षणजरायुजं पुरुषपश्वादि । उद्भिज्जम् । उद्भिनत्तीत्युद्भित्स्थावरं ततो जातमुद्भिज्जम् । न च स्वेदजानामत्र संकीर्तनाभावात्कथं त्रीण्येव बीजानीत्यवधारणमिति शङ्क्यम् । उद्भिज्जशब्देन स्वेदजस्यापि संग्रहोपपत्तेः । सूत्रितं च 'तृतीयशब्दावरोधः संशोकजस्य' [ ब्र० सू० ३ । १ । २१ ] इति । संशोकजस्य स्वेदजस्याऽऽण्डजं जीवजमुद्भिज्जमित्यत्र तृतीयेनोद्भिज्जशब्देनावरोधः संग्रह इत्यर्थः । इदं च सूत्रमन्यत्र व्याख्यातम् । अण्डजादिशब्दनिर्दिष्टानामेषां भूतानां तेजोबन्नानि त्रीण्येव बीजानीत्यर्थः । तदेवं परस्माद्ब्रह्मणोऽनन्यत्वं जगतोऽभ्युपगन्तव्यमिति स्थितम् ॥ १ ॥

तदेवोपपादयति—

सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥

अत्र 'संज्ञामूर्तिक्लृप्तिः' [ ब्र० सू० २ । ४ । २० ] इत्यधिकरणे भगवता भाष्यकृता—सेयं देवतेत्यादिवाक्यस्यायमर्थः—सेयम् । सच्छब्दिता परदेवता, इमास्तेजोबन्नरूपास्तिस्रो देवता अनेन जीवेन जीवसमष्टिविशिष्टेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणीति भाषितम् । 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' [ब्र० सू० २।१५] इति सूत्रे 'हन्ताहमिमास्तिस्रो देवताः' इति तेजोबन्नानि देवताशब्देन विशेष्यन्त इति भाषितत्वादत्र देवता इत्यभिमानिदेवतापरत्वं द्रष्टव्यम् । ततश्चेमास्तिस्रो देवता इत्यस्यायमर्थः—स्वस्वाभिमानिदेवताधिष्ठितानि तेजोबन्नानीति । तेजोबन्नाभिमानिदेवतानां परमात्मव्यतिरिक्तत्वे प्रमाणाभावात्परमात्मनश्च सर्वाभिमानिदेवतात्वसंभवाच्च परमात्मरूपदेवताधिष्ठिता इत्यर्थः । परमात्मव्यतिरिक्तदेवताभ्युपगमेऽपि देवताशब्दस्य तदधिष्ठि-

तत्वमेवार्थः । न च 'तत्तेजोऽसृजत तत्तेज ऐक्षत' [ छा० ६।२।३ ] इत्यादौ तेजआदिशब्दानां परमात्मपरत्वात्तेजोबन्नावस्थापन्नपरमात्मनां तत्तदुपहितत्वाद्यवस्थाधीनबहुत्वाश्रयाणामेवेमास्तिस्रो देवता इति देवताशब्देन परामर्शोऽस्तु न तु देवताशब्दस्य तदधिष्ठितपरामर्शित्वमिति वाच्यम् । तत्तदवस्थपरमात्मसु जीवस्य प्रवेशासंभवेन प्रवेशयोग्यतेजोबन्नानामेवाभेदोपचारेण लक्षणया वा देवताशब्देन निर्देष्टव्यत्वात् । महासिद्धान्ते तदैक्षतेति सर्वज्ञत्वमसृजतेति निमित्तत्वं बहु स्यामित्युपादानत्वं तदुभयानुगुणं सर्वशक्तित्वं सत्यसंकल्पत्वं चानेन जीवेनाऽऽत्मनाऽनुप्रविश्येति सर्वान्तरत्वं चोक्तं भवति । जीवेनाऽऽत्मनेति जीवशरीरकेण मयेत्यर्थः ।

सिंहेन भूत्वा बहवो मयाऽत्ता व्याघ्रेण भूत्वा बहवो मयाऽत्ताः ।

इतिवत्सार्वज्ञ्यादिगुणकस्य तद्विपरीताकारजीवैक्यासंभवात्, यस्याऽऽत्मा शरीरमित्यादिवचनात्तदनुप्रविश्येत्यचेतन इव जीवेऽप्यनुप्रवेशश्रवणाच्च शरीरवाचिशब्दस्य शरीरिपर्यन्तत्वमुख्यताया उपपन्नत्वाच्चायमेवार्थ इति व्यासार्यैरुक्तम् । ननु जीवशरीरकेण मया प्रविश्य व्याकरवाणीत्यर्थो न संभवति व्याकरवाणीति तिङा कर्तुरभिहितत्वेनानभिहिताधिकारविहिततृतीयानुपपत्तेः । न च व्याकरणक्रियाकर्तुस्तिङाऽभिहितत्वेऽपि प्रवेशक्रियाकर्तुरनभिहितत्वात्तृतीया भविष्यतीति वाच्यं तर्हि मया भुक्त्वा व्रजामीत्यपि प्रयोगः साधुः स्यात्, व्रजिक्रियाकर्तुरभिधानेऽपि भुजिक्रियाकर्तुरनभिहितत्वात् । स्वादुमि णमुलिति सूत्रे कैयटेन क्त्वाप्रत्ययस्य भावार्थत्वात्पक्त्वौदनं भुङ्क्ते देवदत्तः, पक्त्वौदनो भुज्यते देवदत्तेनेत्यत्र च क्त्वाप्रत्ययेन पचिक्रियाकर्तृकर्मणोरनभिधानात्तृतीयाद्वितीये कुतो न भवत इत्याशङ्क्याऽऽख्यातपदवाच्या क्रिया विशेष्यत्वात्प्रधानमितरा तु विशेषणत्वादप्रधानम् । तत्क्रियासाधनयोरपि शक्त्योस्तद्वारको गुणप्रधानभावः । तत्र प्रधानक्रियाशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत्प्रकाशते प्रधानानुरोधाद्गुणानां पृथक्तद्विरुद्धस्वकार्यारम्भायोगाच्चेत्युक्तत्वादिति चेत्सत्यम् । मयेत्यस्य स्वरूपेणेत्यर्थः । आत्मशब्दः स्वरूपपरः । यद्यपि जीवशरीरकं स्वरूपं व्याकरणकर्तुर्न भिद्यते तथाऽपि त्व

व्यपदेशिवदेकस्मिन्बुध्या नानार्थकल्पना ।

इति न्यायेन कल्पितभेदमादायानभिहिताधिकारविहिततृतीयोपपत्तेः। घटः स्वेन रूपेणेतरव्यावृत्तिं करोतीत्यादिप्रयोगदर्शनात्करोतीति तिङा कर्तुरभिहितत्वात्। ननु तत्र करणार्थे तृतीया करणं च न तिङाऽभिहितमिति चेत्तर्हि प्रकृतेऽपि तथाऽस्तु। "तेनेशस्तद्विशिष्टस्वकरणकतयाऽनुप्रवेशेऽपि कर्ता," इत्यधिकरणसारावल्युक्तश्चायमेवार्थः। यद्वाऽऽरम्भणाधिकरणे—अनेन जीवेनाऽऽत्मना मदात्मकजीवेनाऽऽत्मतयाऽनुप्रविश्य, एतद्विचित्रनामरूपभाक्करवाणीति भाषितत्वेन जीवशब्दस्य परमात्मपर्यन्तत्वाभावस्यापि प्रदर्शितत्वात्तदनुसारेण जीवेनेत्यस्य जीव एवार्थः। आत्मशब्दस्य शरीरत्वमर्थः। शरीरभूतेनानेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणीत्यर्थः। आत्मशब्दस्य शरीरवाचित्वमभिप्रेत्यैव मदात्मकजीवेनेति भाषितम्। आत्मतयाऽनुप्रविश्येति भाष्यस्यायमर्थः—आत्मतयेति हेतौ तृतीया हेतुत्वं च प्रयोजनत्वेन विवक्षितमात्मत्वार्थमनुप्रविश्येत्यर्थः। प्रविश्य नियन्तृत्वाभाव आत्मत्वासंभवाच्च चारेणानुप्रविश्य परबलं संकलयानीतिवदिति। यद्वा 'अनेन जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' [ छा० ६।११।१ ] इत्यत्रेवानेन जीवेनाऽऽत्मनाऽनुप्रविश्येत्यत्रापि जीवात्मनेत्येवार्थः। अस्मिन्पक्षेऽनेनेतिशब्दस्य प्रमाणप्रतिपन्नपुरोवर्तिवाचिनो मच्छरीरभूतेनेत्यर्थः। अनयोः पक्षयोश्चारेणानुप्रविश्य परसैन्यं संकलयानि देवदत्तेन पक्त्वा चैत्रेण भुज्यत इत्यत्रेव विशिक्रियाप्रयोजककर्त्रा परमात्मना व्याप्रियमाणस्य जीवात्मनः करणतया तृतीयासंभवात्तृतीयाया नानुपपत्तिः। इयांस्तु विशेषः—नामरूपव्याकरणस्य 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' इति वक्ष्यमाणेन त्रिवृत्करणेन समानकर्तृकत्वावगमान्नामरूपव्याकरणांशे साक्षात्कर्तृत्वमप्यस्ति। प्रवेशे तु सर्वव्यापकस्य परमात्मनः साक्षात्कर्तृत्वासंभवात्प्रयोजककर्तृत्वमेव। एवं चानुप्रवेशनामरूपव्याकरणयोः समानकर्तृकत्वसंभवात्क्त्वाप्रत्ययस्यापि नानुपपत्तिरिति द्रष्टव्यम्। एतेनान्तःकरणविशिष्टस्याहमर्थत्वं वदन्तः परे प्रत्युक्ताः। बहु स्यां हन्ताहमिमा इति संकल्पसमये तस्याभावादित्यास्तां तावत्।

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति।

अत्र संज्ञामूर्तिक्लृप्त्यधिकरणे भगवता भाष्यकृता—तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोबन्नानां विशेषसृष्ट्यसमर्थानां तत्सामर्थ्याय

कैकां त्रिवृतं त्रिवृतं करवाणीतीत्येतद्वाक्यार्थ उक्तः । अत्र तदर्थमित्यस्य देवादिविचित्ररूपाणां तन्नामधेयानां च करणार्थमित्यर्थः पूर्वं देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणीत्युक्तेरिति द्रष्टव्यम् । अत्रेतिशब्दस्य सेयं देवतैक्षतेति पूर्वेण संबन्धः । एवमीक्षित्वा परा देवता यथासंकल्पमकरोदित्याह—

सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥
तासां त्रिवृतं त्रिवृतमेकैकामकरोत् ।

अत्र त्रिवृत्करणाधीनत्वान्नामरूपव्याकरणस्यार्थक्रमानुरोधेन पाठक्रमो बाध्यते । तत्र तेजोबन्नदेवतास्वेकैकां त्रिवृतं त्रिवृतं कृत्वा नामरूपव्याकरणमकरोदित्यर्थः । अत्र व्यापकस्य परमात्मनः स्वरूपेण स्वापृथक्सिद्धसर्ववस्तुप्रवेशस्य सर्वदा सत्त्वेऽपि स्वशरीरभूतजीवेनानुप्रवेशस्य पूर्वमभावाज्जीवेनानुप्रविश्य नामरूपे व्याकरोदित्यस्य नानुपपत्तिः । चारस्य राजशरीरत्वाभावान्न चारेणानुप्रविश्येति वाक्यसाम्यं च ।

यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य तृतीयः खण्डः ॥ ३ ॥

---

देवताधिष्ठितानां तेजोबन्नानां त्रिवृत्करणप्रकारं मे निगदतः शृण्वित्यर्थः । व्यासार्यैरानन्दमयाधिकरणे—अनुप्रविश्य नामरूपे व्याकरवाणीत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वमवगम्यते । 'तत्सृष्ट्वा तदेवानुप्राविशत्' [ तै० २ । ६ । १ ] इत्यत्रानुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते । तस्मात्समानकर्तृकत्वमेव विवक्षितं न पौर्वापर्यमपि । अत एव हि 'तस्य त्वष्टा विदधद्रूपमेति' इति सृष्ट्यनुप्रवेशयोः समानकालीनत्वमेव प्रतीयते । अथ वा 'तत्सृष्ट्वा तदेवानुप्राविशत्' [ तै० २ । ६ । १ ] इति सृष्ट्यनन्तरत्वेन श्रूयमाणानुप्रवेशः स्थित्यर्थोऽन्य एवेत्युक्तम् । व्यापकस्यापि परमात्मनोऽन्तर्यामिविग्रहद्वाराऽनुप्रवेश उपपद्यत

इति केचित् । जीवद्वारैवानुप्रवेशो न तु स्वत इति केचित् । प्रतिवस्तु तत्तद्वस्तुमात्रपूर्णपरमात्मकार्यकारित्वात्तत्र प्रविष्ट इवेत्युक्तिरिति केचित् ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

---

यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपम् ।

अग्नेर्यद्रोहितं स्वरूपं रोहितो भागो दृश्यते तदत्रिवृत्कृतस्य तेजसः स्वरूपम् ।

यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य ।

स्पष्टोऽर्थः ।

अग्नेस्तेजोबन्नसमुदायरूपत्वे यावत्तेजोबन्नावस्थानमग्निरूपेणोपलम्भः प्राप्नोतीत्यत्राऽऽह—

अपागादग्नेरग्नित्वम् ।

तेष्वेव तेजोबन्नेष्वग्न्याद्यवस्थानाशकसामग्रीसंनिधानेऽग्नित्वावस्थाऽपेता भवत्यवस्थान्तरं प्रादुर्भवति ।

वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥

अतस्तेजोबन्नैरेवाग्नित्वाद्यवस्थालक्षणो विकारोऽग्न्यादिनामधेयं च वाक्पूर्वकव्यवहारसिद्धये तेजोबन्नैरेव स्पृश्यते । अतस्तेजोबन्नस्वरूपाण्येवाग्निरिति सत्यमित्यर्थः ॥ १ ॥

यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपं
यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापा-
गादादित्यादादित्यत्वं वाचारम्भणं विकारो
नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ २ ॥

यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां
यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं
विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥

यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥

पूर्ववदर्थः ॥ ४ ॥

एतद्ध स्म वै तद्विद्वाꣳस आहुः
पूर्वे महाशाला महाश्रोत्रियाः ।

उपादानादुपादेयं न भिद्यत इत्येतत्स्वरूपज्ञा महागृहस्थाः सर्ववेदपारगा वक्ष्यमाणप्रकारेणोक्तवन्त इत्यर्थः । 'लट्स्मे' इति स्मयोगाद्भूतार्थेऽप्याहुरिति लडुपपत्तिः ।

न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदांचक्रुः ॥ ५ ॥

तेजोबन्नान्येव ज्ञातवतां नोऽस्माकमेभ्यस्तेजोबन्नेभ्योऽतिरिक्तमश्रुतममतमविज्ञातं कोऽपि नोदाहर्तुं शक्नोतीति तेजोबन्नेभ्य एव सर्वं ज्ञातवन्त इत्यर्थः ॥ ५ ॥

सर्वस्यापि तत्रान्तर्भावमेव प्रदर्शयति—

यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदांचक्रुर्यदु शुक्लमिवाभूदित्यपाꣳ रूपमिति तद्विदांचक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदांचक्रुः॥ ६ ॥

यद्वविज्ञातमिवाभूदित्येतासामेव देवतानाꣳ समास इति तद्विदांचक्रुः ।

रोहितशुक्लकृष्णत्वेन भासमानं तेजोबन्नात्मकमेवेति ज्ञातवन्तः । यत्तूक्तेन रूपेणाज्ञायमानमभूत्तदपि पीतमाञ्जिष्ठधूसरशोणादिरूपवत्त्वेन ज्ञायमानमपि लोहितशुक्लकृष्णतेजोबन्नसमुदायात्मकमेव न तु ततोऽतिरिक्तमिति ज्ञातवन्त इत्यर्थः । एवं सर्वस्यापि प्रपञ्चस्य त्रिवृत्कृततेजोबन्नरूपत्वेन तदभेदं प्रसाध्याध्यात्मं मांसलोहितमज्जास्थिलक्षणस्य देहस्येन्द्रियमनःप्राणानां च त्रिवृत्कृततेजोबन्नाभेदं दर्शयितुं प्रस्तौति—

यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य चतुर्थः खण्डः ॥ ४ ॥

---

तेजोबन्नानि पुरुषेण भुज्यमानानि पुरुषं प्राप्य यथा त्रिधा त्रिधा परिणमन्ते तं परिणामप्रकारं शृण्वित्यर्थः ॥ ७ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य चतुर्थः खण्डः ॥ ४ ॥

---

अन्नमशितं त्रेधा विधीयते ।

पुरुषेण भुक्तं जाठराग्निना पच्यमानमन्नं स्थविष्ठमध्यमाणिष्ठरूपेण त्रेधा विभक्तं भवति ।

तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः ॥ १ ॥

स्थूलांशः पुरीषतामापद्यते मध्यमांशस्तु मांसताम्, अणिष्ठांशस्तु मनस आप्यायकतामापद्यते । मनस आहंकारिकत्वेनान्नविकारत्वाभावादिति भावः ॥ १ ॥

आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥ २ ॥

तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ॥ ३ ॥

तैलघृतादिकं तेजःशब्देनोच्यते । मज्जाऽस्थ्यन्तर्गतः स्नेहो धातुविशेषः । घृततैलादेः पीतस्य सूक्ष्मांशो वागाप्यायक इत्यर्थः ॥ ३ ॥

अन्नमयꣳ हि सोम्य मन आपो-
मयः प्राणस्तेजोमयी वागिति ।

उक्तरीत्या मनःप्राणवाचामन्नजलतेजःसूक्ष्मांशाप्यायितत्वान्मनोऽन्नमयं प्राणोऽम्मयस्तेजोमयी वागित्यर्थः । ननु केवलान्नभक्षाणामाखुप्रभृतीनामपि वाग्मित्वप्राणवत्त्वदर्शनादम्मात्रभक्षाणामपि मत्स्यादीनां मनस्वित्ववाग्मित्वदर्शनाद्घृततैलमात्रभक्षाणामपि मनस्वित्वप्राणवत्त्वदर्शनात्कथमन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागित्युपपद्यत इति चेत्सर्वस्यापि त्रिवृत्कृतत्वेन सर्वस्यापि भक्ष्यस्य तेजोबन्नरूपतयाऽन्नमयं सोम्येत्याद्युक्तेर्विरोधाभावात् । एवं प्रत्यायितः श्वेतकेतुराह—

भूय एव मा भगवान्विज्ञापयत्विति ।

एवमशितानां तेजोबन्नानां सूक्ष्मांशा वागाद्याप्यायकाः सन्तीत्यत्र न मनसो विस्रम्भः। अतः पुनरपि सम्यग्दृष्टान्तैरमुमर्थं दर्शयेत्यर्थः ।

तथा सोम्येति होवाच ॥ ४ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

---

आचार्योऽपि तथाऽस्त्वित्युवाचेत्यर्थः ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

---

दध्नः सोम्य मथ्यमानस्य योऽणिमा स
ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥
एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा
स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥

यथा मथ्यमानस्य दध्न ऊर्ध्वं उद्गतोऽणिमा सूक्ष्मांशो घृतं भवत्येव-

मश्यमानस्यान्नस्योर्ध्वं उद्गतः सूक्ष्मांशो मनो भवति मनआप्यायको भवतीत्यर्थः । समुदीषति, ईष गतिहिंसादर्शनेष्विति हि धातुः ॥१॥२॥

अपाꣳ सोम्य पीयमानानां योऽणिमा स
ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥
तेजसः सोम्याश्यमानस्य योऽणिमा स
ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥

पूर्ववदर्थः ॥ ३ ॥ ४ ॥

अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजो-मयी वागिति भूय एव मा भगवान्विज्ञापयत्विति ।

मनसोऽन्नमयत्वं यथा बुद्ध्यारूढं भवति तथा प्रदर्शयेत्यर्थः ।

तथा सोम्येति होवाच ।

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
षष्ठः खण्डः ॥ ६ ॥

---

पूर्ववदर्थः ॥ ६ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
षष्ठः खण्डः ॥ ६ ॥

---

षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः पिबाऽऽपोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ १ ॥

षोडशांशयुक्तमनआदिकलायुक्तः पुरुषः । ततश्च मनआदिषोडशांशाः प्रत्यहं भुज्यमानैरन्नादिभिराप्यायितो भवन्ति । तत्र पञ्चदश दिनानि मा भुङ्क्थाः । यथेष्टं जलं पिब जलपानेन प्राणविच्छेदोऽपि न भविता जलमयत्वात्प्राणस्येत्याचार्य उवाचेत्यर्थः ॥ १ ॥

स ह पञ्चदशाहानि नाऽऽश ।

एवं पित्रोक्तः पुत्रः पञ्चदशाहानि न भुक्तवान् ।

अथ हैनमुपससाद किं ब्रवीमि भो इति ।

षोडशेऽहनि पितरमुपसन्नः शिष्यो भगवन्किं ब्रवीमीत्युक्तवान् । इतर आह—

ऋचः सोम्य यजूꣳषि सामानीति ।

अधीतान्वेदान्पठेत्युक्तवानित्यर्थः ।

स होवाच न वै मा प्रतिभान्ति भो इति ॥ २ ॥

मां प्रति वेदा न भान्तीतीतरः प्रत्युक्तवान् ॥ २ ॥

तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यै-
कोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन
ततोऽपि न बहु दहेदेवꣳ सोम्य ते षोडशानां
कलानामेका कलाऽतिशिष्टा स्यात्तयैतर्हि
वेदान्नानुभवस्यशानाथ मे विज्ञास्यसीति ॥ ३ ॥

हे सोम्य यथा लोके महत इन्धनैरभ्याहितस्य शान्तस्याग्नेरेकोऽङ्गारः खद्योतमात्रः परिशिष्टो भवेत्तेनाङ्गारेण खद्योतमात्रपरिमाणात्किंचिदपि बहु न दहेदेवमेव खलु सोम्य तेऽन्नोपचितानां षोडशानां मनसोंऽशानामेकोंऽशोऽवशिष्टः । पञ्चदशदिनेषु पञ्चदशकलानां क्षीणत्वादिति भावः । अतोऽल्पीयसा तेनांशेनेदानीं वेदान्न प्रतिपद्यसे भुङ्क्ष्व तत ऊर्ध्वं मदुक्तं ज्ञास्यसीत्यर्थः ।

स हाऽऽशाथ हैनमुपससाद ।

भुक्त्वा पितरमुपसन्नः ।

तꣳ ह यत्किंच पप्रच्छ सर्वꣳ ह प्रतिपेदे ॥ ४ ॥

यद्यत्पृष्टवांस्तत्तत्सर्वं स ज्ञातवानित्यर्थः ॥ ४ ॥

तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यै-
कमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरु-
पसमाधाय प्राज्वालयेत्तेन ततोऽपि बहु दहेत् ।
एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽति-

शिष्टाऽभूत्साऽन्नेनोपसमाहिता प्राज्वालीत्तयै-
तर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य मन
आपोमयः प्राणस्तेजोमयी वागिति ।

यथा शान्तस्य वह्नेरेकमङ्गारं खद्योतमात्रं परिशिष्टं तृणादिभिरुपसमिध्य प्रकर्षेणाऽऽ समन्ताद्वर्धयेत्तेन चेद्धेनाङ्गारेण ततोऽपि पूर्वपरिमाणाद्बहु दहेत् । एवं हे सोम्य ते षोडशानां मनोंशानामेकोंऽशोऽन्नेनाऽऽप्यायितः प्रज्वलितः स्वकार्यकरणसमर्थः अतो वेदान्प्रतिपद्यसे । अतोऽन्नमयमेव मनः । अनयैव रीत्याऽऽपोमयः प्राणस्तेजोमयी वागिति ।

तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
सप्तमः खण्डः ॥ ७ ॥

---

तत्, मनआदीनामन्नमयत्वादिकमस्योपदेशाज्ज्ञातवानित्यर्थः । द्विरभ्यासस्त्रिवृत्करणप्रकारसमाप्त्यर्थः । प्रकृतविषयाण्यधिकरणानि लिख्यन्ते द्वितीयाध्यायान्ते—'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति' [ छा० ६ । ३ । २ ] इति स्वांशत्वेनाऽऽत्मभूतस्य जीवस्यानुप्रवेशव्याकरणकर्तृत्वाभिधानात्परदेवतायाः स्वेन रूपेणानुप्रवेशानुक्तेर्हिरण्यगर्भस्य नामरूपव्याकर्तृत्वस्य पुराणादिषु प्रसिद्धत्वात्परमात्मांशभूतो हिरण्यगर्भ एव प्रवेशनामरूपव्याकरणयोः कर्ता । न चैवं व्याकरवाणीति परमात्मनोऽभिसंधिर्नोपपद्यत इति वाच्यम् । जीवसमष्ट्याश्रयस्य प्रवेशव्याकरणकर्तुर्हिरण्यगर्भस्य परमात्मांशतयाऽत्यन्ताभिन्नत्वाभावेन तद्गतनामरूपव्याकर्तृत्वस्य प्रवेशसमानाधिकरणस्य स्वनिष्ठतया परमात्मनोऽनुसंधानोपपत्तेः प्रयोजककर्तृतयाऽपि व्याकरवाणीत्यभिसंध्युपपत्तेश्च । यदि पुनः परमात्मनः साक्षात्कर्तृभावो भवेत्तर्ह्यनेन जीवेनेत्यनर्थकम् । जीवस्य कर्तृत्वाभावेन चारेणानुप्रविश्य परसैन्यं संकलयानीतिवत्करणत्व एव तृतीया वाच्या । करणत्वं च तदैवोपपद्यते यदि परमात्मा प्रयोजककर्ता जीवश्च प्रयोज्यकर्ता स्यात् ।

प्रयोजककर्तुर्हि साक्षात्कर्ता करणं भवति प्रधानक्रियोद्देशेन प्रयोजकेन प्रयोज्यकर्तुर्व्याप्रियमाणत्वात् । अतो जीवेनेति करणत्वेन निर्दिश्यमानो जीवः साक्षात्कर्तेत्यवसीयते । अतस्तेजोबन्नानि प्रविश्य हिरण्यगर्भ एव नामरूपे व्याकरोति । अतो हिरण्यगर्भकर्तृकैव नामरूपा व्याक्रियेति प्राप्त उच्यते—'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' [ब्र० सू० २ । ४ । २० ]। संज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणं त्रिवृत्करणं कुर्वतः परमात्मन एव न हिरण्यगर्भस्य 'अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्' 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' [ छा० ६ । ३ । ४ ] इति त्रिवृत्करणनामरूपव्याकरणयोः समानकर्तृकत्वावगमात् । न च त्रिवृत्करणं हिरण्यगर्भकर्तृकं संभवति, हिरण्यगर्भस्य त्रिवृत्कृततेजोबन्नोत्पादितब्रह्माण्डसृष्टत्वावेदनेन तस्य त्रिवृत्करणकर्तृत्वासंभवात् । अतो जीवसमष्टिशरीरकः सन्परमात्मा नामरूपे व्याकरोदिति सिद्धम् । अनेन जीवेनाऽऽत्मनाऽनुप्रविश्येत्यस्योपपत्तिस्तु तद्वाक्यविवरणदशायामेवोक्ता तत्रैवानुसंधेया । ननु 'यदग्ने रोहित९ रूपं तेजसस्तद्रूपम्' [ छा० ६ । ४ । १ ] 'अन्नमशितं त्रेधा विधीयते' [ छा० ६ । ५ । १ ] इत्युत्तरत्र चतुर्मुखसृष्टाग्न्यादिषु त्रिवृत्करणप्रकारप्रदर्शनात्त्रिवृत्करणमपि चतुर्मुखकर्तृकमेवेत्यत्राऽऽह—'मांसादि भौमं यथाशब्दमितरयोश्च' [ ब्र० सू०२ । ४।२१ ]। यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवादिविषयोऽयं 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' [ छा० ६।३।४ ] इति त्रिवृत्करणोपदेश इति तन्नोपपद्यते । अन्नमशितं त्रेधा विधीयत इत्यत्र मांसमनसोः पुरीषादणुत्वेनाणीयस्त्वेन च व्यपदिष्टयोराप्यत्वतैजसत्वप्रसङ्गाद्यद्यदपेक्षया सूक्ष्मं तत्तस्य कारणम् । अत एव हि पार्थिवाप्यतैजसानामुत्तरोत्तरसूक्ष्मतयोत्तरोत्तरकारणत्वम् । ततश्च पुरीषस्य स्थविष्ठत्वात्पार्थिवत्वम् । ततः सूक्ष्मस्य मांसस्याऽऽप्यत्वम् । ततोऽणिष्ठस्य मनसस्तैजसत्वमभ्युपगन्तव्यम् । तथा—'आपः पीताः' [ छा० ६ । ५ । २ ] इत्यत्रापि स्थविष्ठस्य मूत्रस्य पार्थिवत्वं मध्यमस्य लोहितस्याऽऽप्यत्वं ततोऽप्यणीयसः प्राणस्य तैजसत्वमभ्युपगन्तव्यम् । तथा—तेजोऽशितमित्यत्रापि स्थूलस्यास्थ्नः पार्थिवत्वं मध्यमाया मज्ज्ञाया आप्यत्वमणिष्ठाया वाचस्तैजसस्त्वमभ्युपगन्तव्यम् । न चैवमिष्यते । प्रथमपर्याये पुरीषवन्मांसमनसी अपि पार्थिवे एव प्रतिपाद्येते, अन्नमशितं त्रेधा विधीयत इति

प्रक्रमात् । तथा द्वितीये पर्याये मूत्रलोहितप्राणानामब्विकारत्वं प्रतिपाद्यते । तृतीयपर्यायेऽस्थिमज्जावाचां तेजोविकारत्वमेव प्रतिपाद्यते। अतस्तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्युक्तत्रिवृत्करणप्रकारोऽन्नमशितमित्यादिना न प्रदर्श्यते तथा सति हि मनःप्राणवाचां तिसृणामप्यणीयस्त्वेनान्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति विरुध्येत । अतः प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानामन्नमशितमित्यादिनैकैकस्य त्रेधा परिणाम उच्यते । अण्डसृष्टेः प्रागेव तेजोबन्नानां त्रिवृत्करणेन भवितव्यमत्रिवृत्कृतानां तेषां कार्यारम्भासामर्थ्यात् । अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यं तदेव च त्रिवृत्करणम् । तथा च स्मर्यते—

नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यानोन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते । इति ॥

अत एव च 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्' 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' [ छा० ६।३।४ ] इति पाठक्रमोऽप्यर्थक्रमेण बाध्यते । अण्डान्तर्वर्तिसृष्ट्यादिषु त्रिवृत्करणप्रदर्शनं तु श्वेतकेतोः शुश्रूषोरण्डान्तर्वर्तित्वेन तस्य बहिष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात्त्रिवृत्कृतानां कार्येष्वग्न्यादिषु त्रिवृत्करणप्रदर्शनं कृतमित्यविरोधः । नन्वण्डान्तर्गतानां सर्वेषां त्रिवृत्कृततेजोबन्नरूपत्वे व्यवस्थिततेजोबन्नव्यवहारः कथं स्यादित्यत्राऽऽह—'वैशेष्यात्तु तद्वादस्तद्वादः' [ ब्र० सू० २।४।२२ ] पृथिव्यंशानां भूयस्त्वे पृथिवीति व्यवहारो जलांशानां भूयस्त्वे जलव्यवहार इति व्यवहारव्यवस्थोपपद्यत इत्यर्थः । तद्वादस्तद्वाद इति सूत्रे द्विरुक्तिरध्यायसमाप्तिद्योतनार्थेति स्थितम् । तथा द्वितीयाध्याय आरम्भणाधिकरणे—उपादेयमुपादानादन्यदेव घटेनोदकमाह्रियते मृत्पिण्डेन घटादिकं निर्मीयत इति कार्यभेदात् । तथा घटस्य दण्डचक्रादिकं कारणं मृत्पिण्डस्य तु जलसंयोजनमर्दनादीति कारणभेदात् । तथा घटः पृथुबुध्नोदराकारो मृत्पिण्डस्त्वतदाकार इत्याकारभेदात् । तथा पूर्वकालं कारणमपरकालं कार्यमिति कालभेदात् । बहवस्तन्तव एकः पट इति संख्याभेदात् । सत्यामेव मृदि घटो नष्ट इति प्रतीतेः । कार्यकारणयोर्बुद्धिशब्दादिभेदस्य दर्शनाच्चो-

पादानादन्यदेवोपादेयमितरथा कारकव्यापारवैयर्थ्यप्रसङ्गादिति काणादादिमतावलम्बनेन पूर्वपक्षे प्राप्त उच्यते—'तदनन्यत्वमारम्भणशब्दादिभ्यः' [ ब्र० सू० २ । १ । १४ ] तस्मात्परमकारणाद्ब्रह्मणो जगतोऽनन्यत्वं वाचारम्भणशब्दादिभिरवगम्यते । 'वाचाऽऽरम्भणं विकारो नामधेयम्' [ छा० । ६ । ४ । १ ] इत्यस्यार्थः पूर्वमेव वर्णितः । आदिशब्देन 'सदेव सोम्येदमग्र आसीत्' । [ छा० ६ । २ । १ ] 'येनाश्रुतꣳ श्रुतं भवति' [ छा०६ । १ । ३ ] 'एकमेवाद्वितीयम्' [ छा० ६ । २ । १] इत्यादिकं गृह्यते । यदि च वैशेषिकादिरीत्योपादेयमुपादानादन्यत्स्यात्तदा कारणगुणप्रक्रमेण कार्यगुणोत्पत्तेरुपादानसुवर्णगुरुत्वेन तदुपादेयकुण्डले गुरुत्वोत्पत्त्यभ्युपगमावश्यंभावेन गुरुत्वाद्वैगुण्यप्रसङ्गात् । बुद्धिशब्दादिभेदानामुभयसंप्रतिपन्नावस्थयैव व्यवस्थोपपत्ताववस्थाश्रयद्रव्यान्तरोत्पत्तिकल्पनाया अप्रामाणिकत्वात् । ननु विरलतन्त्वारब्धे पट एकस्मिन्नेव काले कथमेकत्वानेकत्वयोर्युगपदुपलम्भः, एकस्मिन्धर्मिणि विरुद्धधर्मद्वयासंभवादिति चेन्न । एकस्मिन्नेव वृक्षे मूलाद्यवच्छेदकभेदेन संयोगतदभावसत्त्ववत्कुविन्दकारितसंयोगविशेषावच्छेदेन तन्तुषु पटत्वमेकत्वं च, तन्तुत्वावच्छेदेन त्वनेकत्वमित्युपपत्तेः । ननु कुविन्दकारितसंयोगास्तन्तुत्वसंकीर्णा एवेति कथं विरुद्धधर्मावच्छेदेन व्याप्यत्वावच्छेदकत्वमिति चेन्न । आर्द्रेन्धनप्रभववह्नित्वत्वावच्छेदेन धूमव्याप्यतावच्छेदकत्ववति वह्नित्वेऽविशेषितवह्नित्वत्वावच्छेदेन व्याप्यतावच्छेदकत्वाभावस्य वृत्त्यभ्युपगमात् । एवं कार्यकारणानन्यत्ववादेऽप्येकस्मिन्नेव द्रव्ये तन्तुत्वावस्थाप्रापकांशसंयोगविशेषावच्छेदेन तन्तुत्वं तन्तुत्वावच्छेदेनानेकत्वं च । पटत्वप्रापकतन्तुसंयोगविशेषावच्छेदेन पटत्वं पटत्वावच्छेदेनैकत्वं चेति पटत्वतन्तुत्वयोरेकत्वानेकत्वयोश्च समावेशोपपत्तेर्न कश्चिद्दोषः । ननु संस्थानस्यासत उत्पत्तावसत्कार्यवादप्रसङ्ग इति चेत् । असत्कार्यवादिमतेऽप्युत्पत्तेरुत्पत्तिमत्वेऽनवस्था स्यात् । उत्पत्तिराहित्ये सत्कार्यवादप्रसङ्गः । अस्माकं त्ववस्थायाः पृथक्प्रतिपत्तिकार्ययोगानर्हत्वात्पृथगुत्पत्त्यादिकं नापेक्षितम् । अस्मन्मते घटस्योत्पत्तिर्नाम घटत्वावस्थासंबन्ध एव न त्वसतः सत्त्वरूपम् । अत उपादेयमुपादानादनन्यदेव । 'भावे चोपलब्धेः' [ब्र० सू० २।१।१५] । हिरण्यकुण्डलादिकार्यभावेऽपि तदेवेदं हिरण्यमिति प्रत्यभिज्ञारूपोपलब्धेः सत्त्वादभेद एवेत्यर्थः । 'सत्त्वाच्चावरस्य' [ब्र० सू० २।१।१६] । अवरस्य कार्यस्य

कारणे तादात्म्येन संबन्धेन सत्त्वाच्चोपादानादनन्यदुपादेयम् । 'सदेव सोम्येदमग्र आसीत्' [छा० ६।२।१] इति कार्ये नष्टेऽपि कारणे कार्यतादात्म्यप्रतीतेरित्यर्थः । 'भावे चोपलब्धेः' [ब्र० सू० २।१।१५] इति सूत्रे कार्यदशायां कार्ये कारणतादात्म्यप्रतीतिः प्रमाणतयोपन्यस्ता। उत्तरसूत्रे तु कार्यनाशानन्तरमपि कारणे कार्याभेदप्रतीतिः प्रमाणतयोपन्यस्तेति विवेकः । 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्' 'युक्तेः शब्दान्तराच्च' [ब्र० सू० २।१।१७।१८] । 'असद्वा इदमग्र आसीत्' [तै० २।७] । 'इदं वा अग्रे नैव किंचनाऽऽसीत्' इति जगतः सृष्टेः प्रागसत्त्वव्यपदेशात्सृष्टेः प्रागपि सतोपादानेनोपादेयस्यैक्यं नोपपद्यत इति चेन्न । नामरूपविभागलक्षणधर्मान्तराभावमादायासत्त्वव्यपदेशोपपत्तेः । जगतः सत्त्वं नामरूपभाक्त्वम् । असत्त्वं नामरूपविरोधिनी सूक्ष्मावस्था न तु सर्वात्मनाऽसत्त्वम् । कुत इदमवगम्यत इति चेत्—"वाक्यशेषात्" । 'इदं वा अग्रे नैव किंचनाऽऽसीत्' इत्यत्र 'तदसदेव सन्मनोऽकुरुत' इति वाक्यशेषे मनःकर्तृत्वप्रतिपादनात् । 'युक्तेश्च' घटस्य सत्त्वं हि नाम घटत्वावस्थासंबन्धः । असत्त्वं नाम तद्विरोधिकपालत्वचूर्णत्वाद्यवस्थासंबन्ध एव न हि तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते । 'शब्दान्तराच्च' 'कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच' [छा० ६।२।१] इति तुच्छत्वं प्रतिक्षिप्य 'सत्त्वेव सोम्येदमग्र आसीत्' [छा०६।२।१] इति स्थापितत्वात् । 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' [बृ०१।४।७] इतिसुस्पष्टमभिधानाच्च । 'पटवच्च' [ब्र० सू० २।१।१९] । यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपकार्यादिकं भजन्ते तद्वद्ब्रह्मापि । 'यथा च प्राणादि' [ब्र० सू० २।१।२०] यथा वायुरेक एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तराणि भजते तद्वदेकमेव ब्रह्म विचित्रस्थिरत्रसरूपं जगद्भवतीति परमकारणात्परस्माद्ब्रह्मणोऽनन्यत्वं जगतोऽभ्युपगन्तव्यमिति स्थितम् । तथा प्रथमाध्याये प्रकृत्यधिकरणे—लोके घटकर्तुः कुलालस्योपादानत्वादर्शनाज्जगत्कर्तुः परमात्मनो जगदुपादानत्वं न संभवति । किं च निष्कलतयाऽपरिणामिनः परमात्मनः परिणामित्वलक्षणोपादानत्वासंभवाच्च ब्रह्मणो नोपादानत्वम् । अपि तु 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' [श्वे० ४।९] 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' [श्वे० ४ । १०] इति

श्रुतिवशात्परिणामसमर्थप्रकृतिरेवोपादानमीश्वरस्य तु तदधिष्ठातृत्वमात्रमेवेति प्राप्त उच्यते—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' [ब्र०सू०१।४।२३] प्रकृतिश्चोपादानं च ब्रह्मैव । इतरथैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डादिदृष्टान्तस्य चोपरोधप्रसङ्गात् । न ह्युपादानभूतमृत्पिण्डज्ञान इव निमित्तभूतदण्डादिज्ञाने तत्कार्यं घटशरावादिकं ज्ञातं भवति । अत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया मृत्पिण्डादिदृष्टान्तस्वारस्येन च ब्रह्मजगतोरुपादानोपादेयभाव एवावसीयते । न चास्य ग्रामस्य प्रधानभूते चैत्रे दृष्टे सर्वे ग्रामस्था दृष्टा इति व्यपदेशवद्ब्रह्मणः सर्वप्रधानतया तस्मिन्दृष्टे सर्वं विदितप्रायमित्युक्तिरुपपद्यत इति वाच्यम् । यदि ह्यत्र सर्वविज्ञानं प्राधान्याभिप्रायं गौणं स्यात्तदा प्रधानज्ञानेन सर्वमन्यदप्रधानमविदितमपि फलतो विदितप्रायं भवतीत्यस्यार्थस्य लोकसिद्धत्वेनैकविज्ञानेन सर्वविज्ञानानुपपत्तिं पश्यतः श्वेतकेतोः 'कथं नु भगवः स आदेशः' [छा० ६ । १ । ३] इति प्रश्नो न स्यात् । अभिप्रायानभिज्ञेन कृतेऽपि प्रश्ने प्राधान्याद्वा सादृश्याद्वा सर्वं ज्ञातं स्यादित्येव प्रतिवक्तव्यं स्यान्न तु 'यथा सोम्यैकेन मृत्पिण्डेन' [छा० ६ । १ । ४] इति । अतो ब्रह्मोपादानमेव । 'अभिध्योपदेशाच्च' [ब्र० सू० १ । ४ । २४] । 'तदैक्षत बहु स्यां प्रजायेय' [छा० ६ । २ । ३] इति ब्रह्मण एव संकल्पपूर्विका सृष्टिरुपदिश्यते । न हि कुलालादेरीदृशसंकल्पपूर्विका सृष्टिः संभवति । 'साक्षाच्चोभयाम्नानात् ।' [ब्र०सू० १ । ४।२५] । 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत् । यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वः । ब्रह्माध्यतिष्ठद्भुवनानि धारयन् ।' इति हि श्रूयते । यत उपादानाद्द्यावापृथिवीशब्दोपलक्षितं कृत्स्नं जगद्ब्रह्म निष्टतक्षुः । निष्टतक्षुर्निर्मितवानित्यर्थः । वचनव्यत्ययश्छान्दसः । तादृशवृक्षस्थानीयद्यावापृथिव्यादिजगदुपादानमपि ब्रह्मैव । तस्योपादानभूतस्य वृक्षस्याऽऽधारभूतं वनमपि ब्रह्मैव । भुवनानि धारयन्नीश्वरो ब्रह्मशब्दवाच्यं स्वात्मानमेवाध्यतिष्ठदित्यर्थः । अतश्चाधिष्ठेयमुपकरणादिकमपि ब्रह्मैवेत्यर्थः । 'आत्मकृतेः' [ब्र० सू० १ । ४ । २६] । 'तदात्मानं स्वयमकुरुत' [२ । ७ । १] । इत्यात्मन एव बहुत्वकरणात्तस्यैव निमित्तत्वमुपादानत्वं च । न हि कुलाल आत्मानं स्वयमकुरुतेति व्यपदेशोऽस्ति । ननु 'निष्कलं निष्क्रियम् ।' [श्वे०६।१९] इति निरवयवस्यापरिणामिनः कथं परिणामित्वलक्षणमुपादानत्वं स्यात्तत्राऽऽह—

'परिणामात्' [ब्र०सू०१।४।२६] निर्विकारत्वाद्यविरोधिपरिणामविशेषसंभवादित्यर्थः। अयं भावः—'निष्कलं निष्क्रियं शान्तम्' [श्वे०६।१९] इत्यादिभिः परमात्मनो निर्विकारत्वं प्रतीयते, पूर्वोक्तसूत्रोदाहृतश्रुतिभिः प्रपञ्चोपादानत्वं च प्रतीयते। उभयमपि यथोपपद्यते तथोपपादनीयम्। परमात्मनश्च निर्विकारत्वं श्रूयते—'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्' 'अजामेकां लोहितशुक्लकृष्णाम्' [श्वे० ४।५] 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' [श्वे०४।९] 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' [श्वे०४।१०] इत्यादिवाक्येषु प्रपञ्चोपादानतया परिणामिनी प्रकृतिः प्रतीयते। तत्र परिणममानप्रकृतिरूपोपादानावरुद्धे प्रपञ्चे साक्षात्कारणत्वासंभवात्तद्द्वारा ब्रह्म कारणमित्यवसीयते। यथा 'यदाग्नेयोऽष्टाकपालः' इति पुरोडाशावरुद्धे यागे व्रीहीणां कारणत्वं साक्षात्कारणत्वासंभवात्पुरोडाशद्वारा पर्यवस्यति तद्वत्। ननु भवत्वन्यद्वारा कारणत्वनिर्वाहो व्यापारव्यवधानेऽपि कारणत्वाक्षतेः। उपादानत्वं तु नान्यद्वारा संभवति। भाव्यवस्थावतः पूर्वावस्थायोगित्वं ह्युपादानत्वम्। अवस्थाश्रयत्वशून्ये परमात्मनि कथमुपादानत्वमिति चेन्न। परमात्माश्रितायास्तच्छक्तिभूतायाः प्रकृतेरवस्थाश्रयत्वेन परमात्मनोऽप्यवस्थाश्रयत्वोपपत्तेः। ततश्च ब्रह्मणि साक्षाद्विकाराभावमादायापरिणामित्वनिर्विकारत्वश्रुतयश्चोपपन्नाः। शक्तिशरीरादिशब्दितायाः प्रकृतेर्ब्रह्मणश्चाभेदोपचारेण वा, प्रकृतिगतावस्थायाः परम्परया ब्रह्माश्रितत्वेन वा ब्रह्मणः परिणामोपादानत्ववादा ब्रह्मोपादानत्वावलम्बनाश्च 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' [ब्र० सू० २।१।४] 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' [ब्र० सू० २।१।२६] इत्याद्याक्षेपपरिहाराश्चोपपन्नाः। 'योनिश्च हि गीयते' [ब्र० सू० १।४।२७]। 'यद्भूतयोनिं परिपश्यन्ति धीराः' [मु० १।१।६] इति योनिरुपादानमिति हि ब्रह्म गीयते। योनिशब्दस्योपादानवचनत्वम् 'यथोर्णनाभिः सृजते गृह्णते च' [मु० १।१।७] इति वाक्यशेषादवगम्यते। अतश्च ब्रह्मैव निमित्तमुपादानं चेति स्थितम्। प्रकृतमनुसरामः॥ ६॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
सप्तमः खण्डः॥ ७॥

---

एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं ब्रह्मव्यतिरिक्तस्य तदुपादेयत्वं वक्तुं प्रवृत्तस्तेजोबन्नात्मकसकलाचेतनवर्गस्य तदुपादेयत्वमुक्त्वा चेतनवर्गस्यापि तदुपादेयतां प्रतिपादयितुं प्रस्तौति–

उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमु-
वाच स्वप्नान्तं मे सोम्य विजानीहीति।

स्वप्नान्तं सुषुप्तिं प्रतिपादयतो मम वाक्याद्विजानीहीति पिता पुत्रमाह स्मेत्यर्थः। एवं शिष्यावधानार्थं प्रतिज्ञायाऽऽह–

यत्रैतत्पुरुषः स्वपिति नाम।

यत्र यदा पुरुषः स्वपितीत्येतन्नाम भवति, पुरुषः स्वपितीतिशब्दो यदा प्रयुज्यत इत्यर्थः। पुरुषस्वापो यदेति यावत्। नामशब्दः प्रसिद्ध्यर्थो वा। एतत्पुरुषः एष पुरुष इत्यर्थः।

सता सोम्य तदा संपन्नो भवति।

तदा तस्मिन्स्वापकाले सदेव सोम्येति प्रकृतेन सता संगतो भवति तस्या एव सत्संपत्तेः सति लयरूपत्वं स्वपिति नाम निर्वचनानुगुणं विवृणोति—

स्वमपीतो भवति।

अत्र स्वशब्दस्तावन्न जीवमात्रपरः। 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इति स्थानप्रमाणेन सच्छब्दस्वशब्दयोरेकविषयत्वावश्यंभावात्। सच्छब्दस्य चास्मिन्प्रकरणे परमात्मविषयत्वात्स्वशब्दोऽपि तत्पर एव। ननु जीवभिन्नत्वात्परमात्मनस्तस्य कथं जीवं प्रति स्वत्वमिति चेदुच्यते—"देवमनुष्यादिनामरूपाभिमानरागलोभाद्युगुणबाहिर्मुखज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः परमात्मा देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यरहितजीवशरीरकः सन्नात्मन्यन्तर्भूत इत्यर्थ" इति 'स्वाप्ययात्' [ब्र० सू०१।१।९] इति सूत्रे व्यासार्यैर्व्याख्यातत्वान्नानुपपत्तिः। अत्र त्वपिपूर्वस्यैतेर्लयार्थस्य सकर्मकत्वात्स्वमपीत इति द्वितीया।

तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति॥ १॥

हि यस्मात्स्वस्मिँल्लीनो भवति तस्मात्स्वपितीति लौकिका आचक्षत

इत्यर्थः। अत्र यद्यपि स्वपिधातोर्निष्पन्नः स्वपितिशब्दो न तु स्वशब्दोपपदादपीतिस्तथाऽप्यशनायादिनिर्वचनवदर्थवादरूपत्वमुपपद्यत इति द्रष्टव्यम्। अत्र जीवस्य परमात्मनि लयप्रतिपादनात्तेजोबन्नादिवज्जीवस्यापि तदुपादेयत्वात्तज्ज्ञानेन ज्ञातत्वमुपपादितं भवति। ननु 'यत्रैतत्पुरुषः स्वपिति नाम' इति पुरुषशब्दनिर्दिष्टस्यैव स्वशब्देन परामर्ष्टव्यतया पुरुषशब्दस्य जीवमात्रविश्रान्तत्वेन स्वशब्दस्यापि तत्पर्यन्तत्वमेवोचितम्। न च पुरुषपदस्यापि ब्रह्मपर्यन्तत्वकल्पनं युक्तम्। 'यत्रैतत्पुरुषः स्वपिति नाम' 'तस्मादेनꣳ स्वपितीत्याचक्षते' इत्युपक्रमोपसंहारयोर्लौकिकप्रसिद्ध्यनुवादाल्लौकिकानां ब्रह्मणि तत्प्रसिद्धेरभावात् 'सति संपद्य न विदुः' [ छा० ६।९।२ ] 'सत आगम्य न विदुः' [ छा० ६।१०।२ ] इत्युत्तरखण्डयोः प्रतिपाद्यमानस्याज्ञानस्य ब्रह्मान्वयासंभवाच्च 'पुरुषः स्वपिति नाम' इति वाक्यस्थपुरुषशब्दस्य ब्रह्मपर्यन्तत्वाभावेन स्वशब्दस्यापि न ब्रह्मपर्यन्तत्वं संभवति। किं च 'सता सोम्य तदा संपन्नो भवति' इति वाक्ये सच्छब्दिते ब्रह्मणि स्थूलावस्थजीवविशिष्टपरमात्मलयप्रतिपादने तत्तुल्यार्थत्वेनाभ्युपेते 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः' [ बृ० ४।३।२१ ] इति वाक्येऽपि परिष्वक्तत्वमपि जीवशरीरकस्य ब्रह्मण एव स्यात्। न चेष्टापत्तिः। 'सुषुप्त्युत्क्रान्त्योर्भेदेन' [ ब्र० सू० १।३।४२ ] इति सूत्रे परिष्वञ्जकेन प्राज्ञेन परिष्वज्यमानस्याज्ञस्य जीवस्य भेदप्रतिपादनं विरुध्यत इति चेदत्र केचित्—शास्त्रानभिज्ञलौकिकप्रसिद्धेर्देहव्यतिरिक्ते जीवेऽप्यभावादभिज्ञप्रसिद्धिरेव स्वपितीत्याचक्षत इत्यनुरुध्यते। अभिज्ञप्रसिद्धिश्च परमात्मविषयाऽपि संभवति। 'संपद्य न विदुः' इत्यग्रिमखण्डे प्रतिपाद्यमानमज्ञानमपि जीवद्वारा ब्रह्मणि संगच्छते। 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः' इति प्रतिपाद्यमानस्य परिष्वङ्गस्य सत्संपत्तेश्चैक्यमपि नाभ्युपगन्तव्यम्। 'सता सोम्य तदा संपन्नो भवति' 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः' इत्यनयोरैकार्थ्योक्तिश्चोभयोरपि सुषुप्तिविषयत्वादुपपद्यते, न तु सर्वात्मनैकार्थत्वं येन 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रं विरुध्येत। अतः 'पुरुषः स्वपिति नाम' इत्यत्रापि पुरुषशब्दो ब्रह्मपर्यन्त एव। अतः स्वशब्दस्य ब्रह्मपर्यन्तत्वे नानुपपत्तिरिति व्यासार्योक्तिं समर्थयन्ते। 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' [छा०६।८।४] 'ऐतदात्म्यमिदꣳ सर्वं

तत्सत्य स आत्मा तत्त्वमसि श्वेतकेतो' [ छा० ६ । ८ । ७ ] इति वाक्यविवरणप्रवृत्तेन भगवता भाष्यकृता महासिद्धान्ते तत्त्वमसीत्यत्रो-द्देश्योपादेयविभागः कथमिति चेन्नात्र किंचिदुद्दिश्य किमपि विधीयते 'ऐतदात्म्यमिद सर्वम्' इत्यनेनैव प्राप्तत्वात् । अप्राप्ते हि शास्त्रमर्थवत् । इदं सर्वमिति सजीवं जगन्निर्दिश्य, ऐतदात्म्यमिति तस्यैष आत्मेति तत्रैव प्रतिपादितम् । तत्र च हेतुरुक्तः 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदा-यतनाः सत्प्रतिष्ठाः' इति 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपा-सीत' [ छा० ३ । १४ । १ । ] इतिवदिति भाषितम् । अत्र व्यासार्यैः 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति वाक्ये सर्व-शब्देन प्रजानां विशेषितत्वात्प्रजाशब्दस्य चाचित्संसृष्टचेतनविशेषपर-त्वात् । 'इदं सर्वमसृजत' [ बृ० १ । २ । ५ । ] इति वाक्यान्तरे विज्ञा-नाविज्ञानशब्दवाच्यचिदचिदात्मकस्य जगतः सर्वशब्देन निर्देशाच्च प्रजा-शब्देन सजीवं जगन्निर्दिश्यते । सन्मूलाः सत्प्रतिष्ठा इत्यपि पदद्वयं सच्छ-ब्दवाच्यब्रह्माधीनोत्पत्तिलयत्वपरम् । प्रतिष्ठा निष्ठा पर्यवसानं लय इति यावत् । सदायतना इति सदाधारकत्वमुच्यते । अनेन जगतः शरीरत्वं फलितम् । तत्कथमिति चेदित्थम् । उत्पत्तिलयहेतुत्ववाचिपदद्वयमध्य-गतेन स्थितिहेतुत्ववाचिना सदायतना इति पदेन स्थितिहेतुधारकत्वं सिध्यति । 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' [ बृ० ३ । ८ । ९ ] इति तिष्ठतिधातूक्तस्थितेः प्रशासनेन धार-णाधीनत्वावगमात्तस्य च प्रशासनस्य 'अन्तः प्रविष्टः शास्ता जनानाम्' । इत्यन्तःप्रवेशपूर्वकत्वावगमात्सर्वशाखाप्रत्ययन्यायेनान्तःप्रवेशशासनधा-रणानामन्यतमोक्तावपीतरयोः फलितत्वात्, सदायतना इत्यनेन धारक-त्वोक्तावप्यन्तःप्रविश्य शासनेन धारकत्वलक्षणात्मत्वस्य फलितत्वाज्ज-गतः शरीरत्वं फलितम् । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सत्प्रतिष्ठाः' इति द्वाभ्यां सदुपादानकत्वम् । सदायतना इत्यनेन सदन्तर्यामिकत्वमुपा-दानोपादेयभावस्याभिन्ननिष्ठत्वात् । प्रजाशब्देनाचित्संसृष्टजीवमात्रपरा-मर्शे तस्य सदुपादानकत्वासंभवात्प्रजाशब्देनापि प्रजाशरीरकं ब्रह्मैवो-च्यते । सदायतना इत्यत्र सदन्तर्यामिकत्वस्य शरीरभूतचिदचिन्मात्रनि-ष्ठत्वेन चिदचिच्छरीरकब्रह्मनिष्ठत्वाभावात्सदायतना इतिवाक्यानुषक्त-प्रजाशब्देन शरीरभूतचेतनाचेतनमात्रमेवाभिधीयते । तथा—'सन्मूलाः सत्प्रतिष्ठाः' इत्युपादानत्वप्रतिपादकवाक्ये विशिष्टस्यैवोपादानत्वात्स-

च्छब्देन सूक्ष्मचिदचिद्विशिष्टमेवोच्यते । सदायतना इत्यन्तर्यामित्वप्रतिपादकवाक्ये विशिष्टस्यान्तर्यामित्वासंभवात्सच्छब्देन विशेष्यमात्रमेवाभिधीयते । तज्जत्वात्तल्लत्वात्तदनत्वात्सर्वं खल्विदं ब्रह्मेत्यत्रापि तज्जत्वात्तल्लत्वादित्युपादानत्वप्रतिपादकांशे विशिष्टयोरेवोपादानोपादेयत्वात्सर्वशब्दोऽपि विशिष्टपरः । तच्छब्दोऽपि विशिष्टपरः । सर्वमिदं तदनत्वाद्ब्रह्मेति तदन्तर्यामित्वप्रतिपादकांशे तु विशिष्टयोः शरीरशरीरिभावासंभवात्सर्वमिदमितिशब्देन शरीरभूतं जगदेव परामृश्यते । तदितिशब्देन केवलविशेष्यभूतं ब्रह्मैवोच्यते 'ऐतदात्म्यमिदꣳ सर्वम्' [ छा० ६ । ८ । ७ ] इत्यत्र, एष आत्मा यस्य तदैतदात्म्यमित्यर्थस्य वर्णनीयतया विशिष्टस्याऽऽत्मत्वाभावादेतच्छब्देन विशेष्यमात्रं परामृश्यत इति व्यासार्यैरुक्तमेतत्सर्वं गत्यभावादङ्गीकार्यम् । कृत्स्नस्य जगतो ब्रह्मकार्यत्वेन तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्वं निषिध्यत इति महासिद्धान्तभाष्यव्याख्यानावसरे च व्यासार्यैः—यस्य ब्रह्मकार्यत्वं विशिष्टस्य, न तस्य तदन्तर्यामिकत्वं यस्य ब्रह्मान्तर्यामिकत्वं विशेषणस्य, न तस्य ब्रह्मोपादेयत्वं ब्रह्मान्तर्यामिकत्वस्य विशेषणमात्रनिष्ठत्वादिति परिचोद्य जगतो ब्रह्मकार्यत्वादिति श्रूयमाणो जगच्छब्दो विशिष्टपरः, तदन्तर्यामिकत्वेनेत्यत्र विशेषणमात्रवाची निष्कर्षको जगत इति शब्दोऽध्याहर्तव्य इत्युक्त्वाऽस्मिन्पक्षे बहुवैरूप्याश्रयणक्लेशं पर्यालोच्य ब्रह्मकार्यत्वेन ब्रह्मान्तर्यामिकत्वेनेत्युभयत्रापि जगत इति निष्कर्षक एव शब्दः । न च निष्कृष्टस्य विशेषणमात्रस्य जगतस्तदन्तर्यामिकत्वोपपत्तावपि तदुपादानकत्वं न संभवतीति वाच्यम् । भाव्यवस्थाश्रयस्यैवोपादेयतया तच्छरीरभूतस्य जगतोऽपि भाव्यवस्थाश्रयत्वेन ब्रह्मोपादेयत्वं संभवतीति प्रतिपादितम् । अस्मिन्पक्षे वैरूप्यादिक्लेशाश्रयणाभावादयमपि पक्षो युक्त इत्यस्माभिर्मुण्डकोपनिषत्प्रकाशिकायां प्रतिपादितः । अस्मिन्पक्षे 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति सदुपादानकत्वसदात्मकत्वप्रतिपादकवाक्ये प्रजाशब्दः केवलचिदचिन्मात्रपरो न तु ब्रह्मपरः । सच्छब्दोऽपि केवलब्रह्ममात्रपरः । ततश्च केवलस्य ब्रह्मणः केवलचिदचित्प्रपञ्चस्य च पूर्वोत्तरावस्थाश्रयहेतुहेतुमद्रूपतयोपादानोपादेयभावोऽप्यस्ति तदपृथक्सिद्धकारणत्वस्यैव तदुपादानत्वरूपत्वाद्विशेष्यस्य ब्रह्मणो विशेषणापृथक्सिद्धकारणत्वेनोपादानत्वस्यैव युक्तत्वात् । एत-

दात्म्यमिदं सर्वमिति वाक्येऽपीदं सर्वमिति केवलचिदचिदात्मकः प्रपञ्चः परामृश्यते । एतच्छब्देनापि केवलं विशेष्यमिति न पूर्ववाक्यवैरूप्यम् । नन्वैतदात्म्यमिदमित्यत्राऽऽत्मशब्देन किं स्वरूपमुच्यत उत नियन्तृत्वम् । नाऽऽद्यः । चिदचित्प्रपञ्चस्य ब्रह्मस्वरूपत्वाभावात् । न द्वितीयः । शरीरात्मभावे 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति पूर्ववाक्योक्तसदुपादानकत्वसदन्तर्यामिकत्वयोर्हेतूकरणं विरुध्येत । न चेष्टापत्तिः । तत्र च हेतुरुक्तः 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः' इति भाष्यविरोधप्रसङ्गात् । 'सर्वं खल्विदं ब्रह्म तज्जलानिति' [ छा० ३ । १४ । १ ] इति श्रुतावेव च सदुपादानकत्वसदन्तर्यामिकत्वयोः सर्वस्य ब्रह्मात्मकत्वे हेतूकरणादिति चेन्न । विशिष्टयोरेवोपादानोपादेयभाव इति पक्षेऽप्यस्य दोषस्य समानत्वात् । कथं तर्ह्यस्य दोषस्य निस्तार इति चेदुच्यते—आत्मशब्दो व्याप्यवचनः 'अदृश्येऽनात्म्येऽनिरुक्ते' [ तै० २ । ७ । १ ] इत्यत्राऽऽत्मशब्दस्य व्याप्यार्थकत्वाश्रयणात् । ऐतदात्म्यमुपादानभूतेनान्तर्यामिभूतेन च ब्रह्मणा व्याप्यमित्यर्थः । मृदा कुम्भादिकं यथेत्युपादानस्यापि व्यापकत्वप्रसिद्धेः । एतदात्मैवैतदात्म्यं स्वार्थे ष्यञ् । एष आत्मा यस्येति पक्षेऽपि स्वार्थे ष्यञ आश्रयणीयत्वात् । अस्मिंश्च पक्षे 'ऐतदात्म्यमिदं सर्वम्' 'स आत्मा' इत्यनयोर्न पौनरुक्त्यशङ्का । अत एव रामानुजं लक्ष्मणपूर्वजातमितिवदादरातिशयादुपपद्यत इति परिहाराश्रयणक्लेशोऽपि नाऽऽश्रयणीयः । 'तत्सत्यम्' [ छा० । ६ । ८ । ७ ] एतदात्मकत्वमेव सत्यं प्रपञ्चस्य प्रामाणिकमित्यर्थः । 'ऐतदात्म्यमिदꣳ सर्वं तत्सत्यम्' इति वाक्यस्यैवं वाऽर्थः—सत्यं प्रमाणप्रतिपन्नं तदिदं सर्वं जगदैतदात्म्यमनेन ब्रह्मणा व्याप्तमित्यर्थः । अत्रासत्यस्य शशशृङ्गादेस्तुच्छस्य व्याप्तत्वाभावेऽपि प्रमाणप्रतिपन्नस्य सर्वस्यापि ब्रह्मव्याप्तत्वमस्तीति भावः । स आत्मा नियन्तेत्यर्थः । विशेष्यस्य विशेषणांशं प्रत्युपादानत्वमस्तीत्यस्मिन्पक्षे 'सदेव सोम्येदमग्र आसीत्' [ छा० ६ । २ । १ ] इत्यत्रेदंशब्दस्य कथमश्रुतवेदान्तं श्वेतकेतुं प्रति ब्रह्मपर्यन्तप्रतीतिजनकत्वमिति शङ्काया अपि नावकाशः । ननूक्तरीत्या भिन्नयोरुपादानोपादेयभावसमर्थनेऽपि 'सदेव सोम्येदमग्र आसीत्' [ छा० ६ । २ । १ ] 'सर्वं खल्विदं ब्रह्म' [ छा० ३ । १४ । १ ] इति परस्परभिन्नविशेषणविशेष्यवाचिनोर्जगद्ब्रह्मवाचिशब्दयोः कथं सामानाधिकरण्यमिति

चेन्न । अपृथक्सिद्धवाचित्वस्यैव सामानाधिकरण्यप्रयोजकतया लोकवेदयोर्दृष्टत्वात् । चिदचित्प्रपञ्चस्य तच्छक्तित्वेन तच्छरीरकत्वेन च तयोरभेदोपचारेणाभेदनिर्देशानां सदेवेदमित्यादिरूपाणामुपपत्तेः शक्तिशक्तिमतोर्दण्डघटादिवदत्यन्तभेदाभावात् । विशेषणभूतप्रपञ्चांशे ब्रह्मण उपादानत्वाभावे 'न विलक्षणत्वात्' [ ब्र० सू० २ । १ । ४ ] इत्यधिकरणस्य वा 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' [ ब्र० सू० २ । १ । २६ ] इत्यधिकरणस्य वा निरालम्बनत्वप्रसङ्गाद्ब्रह्मणो ब्रह्मप्रत्युपादानत्वे विलक्षणत्वशङ्काया वा ब्रह्मणो जगद्रूपेण परिणामाभावे कृत्स्नप्रसक्तिनिरवयवत्वशब्दकोपाशङ्कयोर्वाऽप्रसक्तेः । नन्वेवं 'तदनन्यत्वमारम्भणशब्दादिभ्यः' [ ब्र० सू० २ । १ । १४ ] इत्यधिकरणे प्रपञ्चस्योपादानभूतब्रह्मणाऽभेदासंभवादुपादानोपादेयाभेदसमर्थनं विरुध्येतेति चेत् । न तस्मिन्नधिकरण उपादानोपादेययोः स्वरूपाभेदः समर्थ्यते तयोरभेदे कारकव्यापारवैयर्थ्यप्रसङ्गात् । अपि तु तदपृथक्सिद्धत्वम् । तच्च तत्सत्ताधीनसत्ताकत्वम् । एतादृशस्यापृथक्सिद्धत्वस्याभेदव्यवहारप्रयोजकत्वं 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति प्रमाणसिद्धमतो न तदधिकरणविरोधः । यद्वाऽस्मन्मते स्थूलचिदचिदात्मकप्रपञ्चस्येव तद्विशिष्टस्यापि ब्रह्मण उपादेयत्वादुपादानभूतसूक्ष्मचिदचिच्छरीरकस्य ब्रह्मण उपादेयभूतस्थूलचिदचिद्विशिष्टब्रह्माभेदसमर्थनपरतयाऽऽरम्भणाधिकरणस्योपपत्तेर्न चोद्यावकाशः । वस्तुतस्तु यथा को भवानिति सौवीरराजप्रश्नस्य प्रकृतिसंसृष्टात्मविषयत्वेऽपि वस्तुगत्या भवच्छब्दमुख्यार्थत्वं परिशुद्धात्मस्वरूपस्यैवोचितमिति मत्वा तस्यैव भवच्छब्दमुख्यार्थत्वं प्रदर्शयन्नादिभरतः—'यदा समस्तभूतेषु पुमानेको व्यवस्थितः' इति प्रत्यवोचत् । यथा वाऽथर्वशिरसि रुद्रं प्रति देवैः प्रयुक्तस्य को भवानिति प्रश्नस्य पुरोवर्तिरुद्रमात्रपरत्वेऽपि भवच्छब्दस्य परमात्मपर्यन्तत्वशिक्षणाय 'अहमेकः प्रथममासम्' इत्यादिप्रतिवचनप्रवृत्तिः । एवमेव 'इदमग्र आसीत्' इतीदंशब्दस्य विशेषणमात्रपरत्वे प्राप्ते विशेष्यपर्यन्तत्वशिक्षणाय स्थूलचिदचिच्छरीरं ब्रह्म प्रति सूक्ष्मचिदचिच्छरीरकं ब्रह्मोपादानमित्येतदर्थप्रतिपादकस्योत्तरसंदर्भस्य प्रवृत्तौ दोषाभावादिति द्रष्टव्यम् । अयं चार्थः 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते' [ बृ० १ । ४ । ७ ] इति श्रुतिव्याख्यानावसरे बृहदारण्यकप्रकाशिकायां प्रतिपादितस्तत्रानुसंधेयः । अतश्चाऽऽरम्भणाधिकरणे

तदनन्यत्वमित्यनेन ‘ अनन्या राघवेणाहं भास्करेण प्रभा यथा ’ इति-वदपृथक्सिद्धत्वलक्षणाभेदस्यैव समर्थितत्वात्तावतैवैकविज्ञानेन सर्ववि-ज्ञानप्रतिज्ञोपपत्तेश्चापृथक्सिद्धकारणत्वस्यैवोपादानशब्दार्थत्वादिह च ‘यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति ’ इत्यत्र पुरुषशब्दितस्य कार्यावस्थजीवस्य कारणावस्थस्वश-ब्दितजीवविशिष्टतया स्वशब्दवाच्येन परम्परया स्वावस्थाश्रयतयोपादा-नभूतेन सता संपत्तेरपि सूपपादतया ‘ प्राज्ञेनाऽऽत्मना संपरिष्वक्तः ’ [ बृ० ४ । ३ । २१ ] इति श्रुत्यैकार्थमपि स्वरसत एव सिध्यतीत्यलम-तिचर्चया । प्रकृतमनुसरामः ॥ १ ॥

स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पति-
त्वाऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयत
एवमेव खलु सोम्य तन्मनो दिशं दिशं पति-
त्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते
प्राणबन्धनꣳ हि सोम्य मन इति ॥ २ ॥ = यथा पक्षी शकुनिघातकस्य -- इति विन्यास उचितः

यथा पक्षिशकुनिघातकस्य हस्तगतेन सूत्रेण बद्धः प्रतिदिशं पति-त्वाऽऽश्रयान्तरमलब्ध्वा बन्धनं हस्तमेवाऽऽश्रयत एवमेव हे सोम्य सुषु-प्तिकाले तत् ‘ अन्नमयꣳ हि सोम्य मनः ’ [ छा० ६ । ५ । ४ ] इति प्राङ्निर्दिष्टं मनो दिशं दिशं पतित्वा जाग्रत्स्वप्नयोर्नानाविधविषयग्रहण-व्यापृतं भूत्वाऽपि तत्र तत्राऽऽयतनं विश्रममलब्ध्वा विश्रमाय मुख्यप्रा-णेन संश्लेषविशेषमापद्यते । यतः प्राणे हि मनो निबध्यतेऽत एव हि प्राण उत्क्रान्ते मनआदीनामप्युत्क्रामः । अतश्च सुषुप्तिदशायां वागादी-न्द्रियसहितं मनः ‘ वाङ्मनसि संपद्यते मनः प्राणे ’ [छा० ६ । ८ । ६] इति प्रयाणकालोक्तन्यायेन प्राणे संश्लेषविशेषमापन्नं सदुपरतव्यापारं भवति । सुषुप्तिदशायां प्राणमात्रमनुपरतव्यापारमास्ते ‘स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः ’ [ छा० ४ । ३ । ३ ] इति श्रुतेः ॥ २ ॥

अत्र हेतुमाह - प्राणबन्धनं हि सोम्य मन इति

एवं जीवस्य परमात्मोपादेयत्वसिद्ध्यर्थं सुषुप्तिकाले परमात्मसंपत्तिं तत्प्रसङ्गाद्वागादीन्द्रियाणां प्राणे संश्लेषविशेषं च प्रतिपाद्याशनायादिना-मनिर्वचनमुखेनापि परमात्मनो जगन्मूलतामुपपादयति—

अशनायापिपासे मे सोम्य विजानीहीति ।

स्पष्टोऽर्थः ।

यत्रैतत्पुरुषोऽशिशिषति नामाऽऽप एव तदशितं नयन्ते ।

यत्र यदा पुरुषोऽशिशिषतीत्येतन्नाम पुरुषोऽशिशिषतीति शब्दं यदा लोकाः प्रयुञ्जत इत्यर्थः। यदा पुरुषस्याशिशिषा भवतीति यावत्। नामशब्दः प्रसिद्ध्यर्थो वा तदाऽऽपस्तदशितं नयन्ते जीर्णतां प्रापय्य रसरूपेण शरीरं नयन्ते । तेनाशिते जीर्णे पुनरशिशिषा जायत इत्यर्थः ।

तद्यथा गोनायोऽश्वनायः पुरुषनाय
इत्येवं तदप आचक्षतेऽशनायेति ।

गां नयतीति गोनायः । यथा गोनेतारं गोनाय इत्याचक्षते, यथा वाऽश्वनेतारं पुरुषनेतारं चाश्वनायः पुरुषनाय इत्याचक्षते लौकिका एवमशितनेत्रीरपोऽशयनायेत्याचक्षत इत्यर्थः ।

तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहीति ।

द्रवीभूतेऽद्भी रसभावं नीतेऽन्न उत्पन्नमेतच्छरीराख्यं शुङ्गसदृशं कार्यं विजानीहीत्यर्थः । नन्वमूलमेवेदं भवत्वित्यत्राऽऽह—

नेदममूलं भविष्यतीति ॥ ३ ॥

कार्यमात्रस्य सकारणकत्वादित्यर्थः ॥ ३ ॥

तर्हि तस्यान्नातिरिक्तं मूलान्तरं कल्प्यतामित्यत्राऽऽह—

तस्य क्व मूलꣳ स्यादन्यत्रान्नात् ।

कार्यशरीरस्य सन्मूलकत्वान्मूलान्तरस्यानुपलम्भादुपलब्धमन्नमेव मूलमित्यर्थः ।

एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलम-
न्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ
तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ ।

यथा शरीरेण कार्यभूतेनोपचीयमानेन तत्कारणमन्नमनुमीयत एवमेवान्नेन कार्येणापः कारणमनुमिनुहीति यावत् । एवमुत्तरत्रापि सत्पर्यन्तां कारणपरम्परामनुमिनुहीत्यर्थः । ततः किमित्यत्राऽऽह—

सन्मूलाः सोम्येमाः सर्वाः प्रजाः
सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥

एतस्यार्थः पूर्वमुक्त एव ॥ ४ ॥

अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव
तत्पीतं नयते तद्यथा गोनायोऽश्वनायः
पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति ।

पूर्ववदर्थः । उदकनेतृत्वात्तेज उदन्येत्युच्यत इत्यर्थः ।

तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहीति ।

तत्र तेजसा शोष्यमाणास्वप्सूत्पन्नं देहाख्यं शुङ्गमित्यर्थः ।

नेदममूलं भविष्यतीति ॥ ५ ॥

तस्य क्व मूलꣳ स्यादन्यत्राद्भ्योऽद्भिः सोम्य
शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य
शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः
सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ।

पूर्ववदर्थः । ननु तेजोबन्नमूलकत्वे शरीरस्य लोहितमांसादिरूपेण परिणामः कथं स्यादित्याशङ्क्योक्तं स्मारयति—

यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य
त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवति ।

'अन्नमशितं त्रेधा विधीयते' [ छा० ६ । ५ । १ ] इत्यादिना पूर्वमुक्तं भवतीत्यर्थः । एवं सुषुप्तौ सत्संपत्तिं जीवस्य प्रदर्श्य प्रयाणकालेऽपि सत्संपत्तिं दर्शयति—

अस्य सोम्य पुरुषस्य प्रयतो वाङ्म-
नसि संपद्यते मनः प्राणे प्राणस्ते-
जसि तेजः परस्यां देवतायाम् ।

प्रयतो म्रियमाणस्येत्यर्थः । अत्र वाचो मनःप्रकृतिकत्वासंभवाद्वाग्व्यापारोपरमहेतुभूतसंश्लेषविशेष एव वाचो मनसि लयः । मनसः प्राणे

लयोऽपि तादृश एव। 'मनसि करणग्रामं प्राणे मनः पुरुषे च तं झटिति घटयन्भूतेष्वेनं परे च तमात्मनि' इत्युक्तरीत्या प्राणो जीवसंपन्नः सञ्जीवेन सह तेजःशब्दोपलक्षितेषु सर्वेषु भूतेषु संपन्नो भवति। ततः परं सुखदुःखोपभोगायासविश्रमाय तेजःशब्दितानां सजीवानां भूतसूक्ष्माणां परमात्मनि संपत्तिर्भवतीत्यर्थः।

स य एषोऽणिमा ॥ ६ ॥

एतादृशः सच्छब्दितः स एषोऽणिमाऽणुवद्दुर्विज्ञेयो मानान्तरागोचर इत्यर्थः ॥ ६ ॥

ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा।

अस्यार्थः पूर्वमेवोक्तः। एवं सर्वत्र सिद्धं सदात्मकत्वं श्वेतकेतावुपसंहरति—

तत्त्वमसि श्वेतकेतो इति।

ननु तत्त्वमसीत्यत्र मानान्तरसिद्धत्वेनोद्देश्योपादेयविभागाभावस्य भाष्यकृतोक्तत्वात्तच्छब्दानुरोधेन (१) प्रथमपुरुषोऽत्र स्यादिति चेदुच्यते—मानान्तरसिद्धत्वेऽपि त्वंशब्दार्थस्य तच्छब्दार्थापेक्षया प्रकृतित्वस्य विवक्षितत्वात्प्रकृतेरेवास्तिक्रियाकर्तृत्वान्मध्यमपुरुषो भवति। अत एव 'यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम्' इत्यत्राहं त्वं स्यामहं वा त्वं स्या इति प्रकृत्याश्रयः पुरुषो भवतीति युष्मद्युपपद इति सूत्रे प्रतिपादितम्। ततश्च त्वंशब्दार्थस्य प्रकृतित्वस्य विवक्षितत्वान्मानान्तरसदसद्भावयोरप्रयोजकत्वात्त्वंशब्दार्थप्रकृतित्वाश्रयोऽसीति मध्यमपुरुष एव भवति। अत एव व्यासार्यैः 'आत्मेति तूपगच्छन्ति' [ब्र० सू० ४।१।३] इत्यधिकरणे तथैवोपपादितम्। न्यायपरिशुद्धौ—सुवर्णं खदिराङ्गारसदृशे कुण्डले भवत इति महाभाष्यवाक्यमुदाहृत्य पुरुषस्योद्देश्यानुसारित्वनियमाभावः समर्थितः। ननु तत्त्वमसि श्वेतकेतो इति संबोध्यस्य संबुद्धिस्तावदात्मविद्योपदेशेन श्वेतकेतुमात्रपर्यवसितेति नासंबोध्यबोधनमिति न्यायपरिशुद्ध्युक्तरीत्या श्वेतकेतो इति संबोध्यत्वस्य परमात्मन्यसंभवेन त्वंशब्दनिर्दिष्टत्वमपि परमात्मनो न संभवति त्वंशब्दस्य संबोध्यातिरिक्तविषयत्वस्य क्वाप्यदर्शनादिति चेदत्रोच्यते—'ऐतदात्म्यमिदꣳ सर्वम्' इत्युक्तस्य तत्त्वमसीति विशेष उपसंहार इति भाष्ये

(१) प्रथमपुरुषो वा किन्न स्यात् – इति ग्रन्थाक्षरपाठः।

भाषितत्वात्तत्त्वमसीत्यत्रापि सर्वशब्दस्थानापन्नस्य त्वंशब्दस्य संबोध्यविशेषभूतजीवमात्रपरत्वमेव । ऐतदात्म्यपदस्थानापन्नस्य तदित्यस्य च तदात्मकत्वमेवार्थः। ततश्च सर्वं तदात्मकमितिवत्त्वं तदात्मक इत्यर्थः। न चैवं सति तच्छब्दस्य तदात्मकत्वे लक्षणा स्यादिति वाच्यम्। अपर्यवसानवृत्त्या त्वंशब्दस्य तदन्तर्यामिपरत्वपक्षस्यापि लक्षणापेक्षया जघन्यत्वात्। 'साक्षादप्यविरोधं जैमिनिः' [ब्र० सू० १।२।२८] इत्यत्र व्यासार्यैरपर्यवसानलब्धार्थस्य यौगिकार्थतुल्यत्वाश्रयणात्, यौगिकार्थस्य च रूढिपूर्वकलक्षणापेक्षया जघन्यत्वस्य प्रोद्गात्रधिकरणे मीमांसकैराश्रितत्वात्त्वंशब्दस्य संबोध्यातिरिक्तविषयत्वस्य क्वाप्यदर्शनात्, श्वेतकेतो तत्त्वमसीति त्रयाणां पदानां प्रतीयमानसामानाधिकरण्यभङ्गप्रसङ्गाच्चापर्यवसानलब्धार्थस्याऽऽश्रयणासंभवात्। अपृथक्सिद्धवाचिनां सामानाधिकरण्यस्य लोकवेदयोर्बहुशो दृष्टचरत्वेनापृथक्सिद्धजीवपरवाचिनोस्त्वंतच्छब्दयोः सामानाधिकरण्येन प्रयोगस्याप्युपपत्तेर्न त्वंशब्दस्य परमात्मपर्यन्तत्वमाश्रयणीयम् । वस्तुतस्तु, ऐतदात्म्यमिति शब्दनिर्दिष्टं तदात्मकत्वमेव बुद्धिस्थत्वात्तच्छब्देन परामृश्यते न तु सच्छब्दितं ब्रह्म येन तदात्मकत्वलक्षणादोषः स्यात्। ततश्च त्वं तदसि ऐतदात्म्यमसीत्यर्थः। अस्मिंश्च पक्षे न कस्यापि पदस्य लक्षणा। सांप्रदायिकास्तु स आत्मेति पूर्वनिर्दिष्टस्यैव तत्त्वमसीत्यत्र तच्छब्देन परामर्शस्योचितत्वात्तच्छब्देन सच्छब्दितात्मैवाभिधीयते । जघन्यं त्वंपदं त्वपर्यवसानवृत्त्याऽन्तर्यामिपर्यन्तमभिदधाति । न च श्वेतकेतो इति संबोध्यस्य जीवस्यैव त्वंपदेन परामर्शो युक्त इति वाच्यम् । हे देवदत्तेति देवदत्तं संबोध्य तत्पुत्राभिप्रायेण त्वमेवं कृतवानसीति प्रयोगदर्शनात्। इयांस्तु विशेषः। तत्र मुख्यानुपपत्त्या त्वंपदस्य पुत्रे लक्षणा। इह तु तदनुपपत्त्याऽन्तर्यामिण्यपर्यवसानवृत्तिराश्रीयते । ननु 'साक्षादप्यविरोधं जैमिनिः' [ब्र० सू० १।२।२८] इति सूत्रे व्यासार्यैरपर्यवसानवृत्तेर्योगतुल्यत्वस्य समर्थनात्, योगस्य च रूढिपूर्वकलक्षणापेक्षया दौर्बल्यस्य प्रोद्गात्रधिकरणे मीमांसकैः समर्थितत्वाल्लक्षणापेक्षया जघन्यैवापर्यवसानवृत्तिरिति चेदुच्यते। सत्यमुक्तं व्यासार्यैरपर्यवसानवृत्तेर्योगतुल्यत्वं तथाऽपि न तस्या लक्षणापेक्षयाऽपि दौर्बल्यं प्रमाणाभावात् । प्रोद्गात्रधिकरणे प्रोद्गातृशब्दरूढ्यर्थस्य बहुत्वासंभवात्पाशमन्त्र इव बहुवचनमविवक्षितार्थमिति पूर्वपक्षे 'अदितिः पाशान्प्रमु-

मोक्तु ' इति पाशमन्त्रे बन्धनसाधनस्य पाशशब्दरूढ्यर्थस्य वा यौगिकार्थस्य वा लक्ष्यार्थस्य वाऽसंभवात्पाशानिति बहुवचनस्याविवक्षितत्वेऽपि प्रोद्गातृपदयोगार्थस्य वा लक्ष्यार्थस्य वा बहुत्वसंभवान्न बहुवचनस्याविवक्षायुक्ता इत्येतावन्मात्रमेव प्रोद्गातृनयसिद्धं न तु योगार्थस्य लक्षणापेक्षया दौर्बल्यमपि । ततश्च योगस्य लक्षणापेक्षया दौर्बल्याभावात्तत्तुल्याया अपर्यवसानवृत्तेर्न लक्षणापेक्षया दौर्बल्यम् । ततश्च योगार्थप्रतिबन्धिकाया रूढेरपगमे योगार्थोन्मज्जनस्यानिवार्यतया लक्षणापेक्षया योगस्य प्राबल्यमेव युक्तम् । अत एवाजामन्त्रे भगवता भाष्यकृता न जायत इत्यजेति योग एवाऽऽश्रितो न तु पररीत्या छागत्वकल्पनम् । अत एव 'जगद्वाचित्वात्' [ ब्र० सू० १।४।१६ ] इत्यत्र 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म' [कौ० ब्रा० ४।१९] इत्यत्र कर्मशब्दस्य चलनादृष्टयो रूढस्य योगिरूढ्योः कलहायमानयोर्योगो लब्धात्मेति न्यायमनुसृत्य कर्मशब्दस्य क्रियत इति कर्मेति जगद्वाचित्वमेवाऽऽश्रितम् । तथा—अपशूद्राधिकरणेऽपि रूढ्यर्थानुपपत्तौ शूद्रशब्दस्य योग एवाऽऽश्रितः। ततश्च लक्षणापेक्षया योगस्य बलवत्त्वात्तत्तुल्याया अप्यपर्यवसानवृत्तेर्लक्षणापेक्षया च बलवत्त्वमेव । ननु 'साक्षादप्यविरोधं जैमिनिः' इत्यत्रैव व्यासार्यैस्तात्पर्यलिङ्गैः परमात्मपरतया निर्णीते प्रकरणे तत्र चिदचिच्छब्दानां ब्रह्मपरत्वे चावश्यंभाविनि योगार्थ एवोचितो यथाऽऽकाशप्राणशब्दादौ। यत्र तु चिदचिल्लिङ्गान्यपि सन्ति तत्रापर्यवसानवृत्त्या तच्छरीरकपरत्वमिति व्यवस्थायाः कृतत्वात् । चिदचिल्लिङ्गाभावस्थले योगार्थाश्रयणस्योक्ततयाऽपर्यवसानवृत्त्यपेक्षया योगप्राबल्यमेवाऽऽविष्कृतमिति चेदस्तु योगापेक्षया दौर्बल्यमपर्यवसानवृत्तेस्तथाऽपि लक्षणापेक्षयाऽपर्यवसानवृत्तिः प्रबलैव । ननु ' छन्दोभिधानात् ' [ ब्र०सू०१।१।२५ ] इति सूत्रे गायत्रीशब्दस्य भूतादिपादव्यपदेशादिब्रह्मलिङ्गैर्ब्रह्मपरत्वेऽवश्यंभाविनि सति मासाग्निहोत्रे सादृश्यविधित्सयाऽग्निहोत्रशब्दस्येव चतुष्पात्त्वलक्षणगायत्रीसादृश्यविधित्सया ब्रह्मणि गायत्रीशब्दस्य प्रयोगः । न च वैदिकशब्दस्यैतादृशगौणवृत्त्याश्रयणमयुक्तमिति शङ्कयम् । संवर्गविद्यायां 'ते वा एते पञ्चान्ये पञ्चान्ये' [छा० ४।३।८] इति निर्दिष्टेषु वाय्वग्निसूर्यचन्द्रसलिलप्राणवाक्चक्षुःश्रोत्रमनस्सु दशसु दशत्वसंख्यासाम्यात् 'सैषा विराडन्नादी' [ छा० ४।३।८ ] इति च्छन्दोवाचिविराट्छन्दो

गौण्या प्रयुज्यमानो दृष्टः, एवं छन्दोभिधायिगायत्रीशब्दस्य चतुष्पात्त्वसादृश्याद्ब्रह्मणि प्रयोग उपपन्न इत्युक्तत्वाद्गौणीरूपलक्षितलक्षणापेक्षयाऽपर्यवसानवृत्तेरपि दौर्बल्यमेव सूत्रभाष्यकृदभिमतमिति प्रतीयते। यदि चापर्यवसानवृत्तिर्गौणीतः प्रबला तर्हि तया गायत्र्यवस्थब्रह्मपरत्वस्य वक्तुं सुशकतया गौणी वृत्तिर्नाऽऽदर्तव्या स्यादिति चेन्न । अपर्यवसानवृत्त्या गायत्रीशब्दस्य गायत्र्यवस्थब्रह्मपरत्वे तस्य सर्वभूतात्मत्वासंभवेन केवलब्रह्मणि गौण्याश्रयणस्य युक्तत्वात् । न च गायत्र्यवस्थत्ववेषेण सर्वभूतात्मत्वाद्यसंभवेऽपि ब्रह्मस्वरूपे सर्वभूतात्मत्वं संभवत्येव । अत एव दहरविद्यायां हृदयावच्छिन्नस्य ब्रह्मणस्ताद्रूप्येण बाह्याकाशवैपुल्यासंभवेऽपि स्वरूपेण बाह्याकाशवैपुल्यम् । 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' [ छा० ८।१।३ ] इति संदर्भे प्रतिपादितं संभवतीत्यभ्युपेतम् । तथा शाण्डिल्यविद्यायाम्—'एष म आत्माऽन्तर्हृदयेऽणीयान्' [ छा० ३।१४।३ ] इत्यल्पत्वेन निर्दिष्टस्य ब्रह्मणः स्वरूपाभिप्रायेण 'एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षात्' [छा० ३।१४।३] इति पृथिव्यादिभ्योऽपि ज्यायस्त्वमुक्तम् । किं बहुना सर्वास्वल्पायतनविद्यासु 'आनन्दादयः प्रधानस्य' [ ब्र० सू० ३।३।११ ] इत्यधिकरणन्यायेन सत्यत्वज्ञानत्वानन्तत्वादीनामुपसंहर्तव्यत्वात्तत्र चाल्पायतनस्यापि ब्रह्मणः स्वरूपेणाऽऽनन्त्यमपि संभवतीत्यानन्त्योपासनस्याऽऽश्रितत्वाच्च । तन्न्यायेन गायत्र्यवच्छिन्नत्ववेषेण सर्वभूतात्मत्वासंभवेऽपि स्वरूपेण सर्वभूतात्मत्वसंभवाच्च। अपर्यवसानवृत्तावनुपपत्त्यभावाद्गायत्रीशब्दस्यापर्यवसानवृत्त्यनाश्रयणं तद्दौर्बल्यकारितमेवेति वाच्यम् ।

गायत्र्यवच्छिन्नस्य ब्रह्मणः स्वरूपेण सर्वभूतात्मत्वोपपादनं क्लेशसाध्यमित्यभिप्रायेणापर्यवसानवृत्त्यनाश्रयणसंभवात् । अत एव 'आकाशाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादावाकाशशब्देऽपर्यवसानवृत्त्यनाश्रयणस्येदमेव बीजम् । यदि ह्याकाशशब्दस्तच्छरीरकब्रह्मपरः स्यात्तदा तच्छरीरकस्य जगत्कारणत्वासंभवात्स्वरूपाभिप्रायेण जगत्कारणत्ववादोऽभ्युपेयः । स च क्लिष्ट इत्येवापर्यवसानवृत्त्यनाश्रयणं न तु योगप्राबल्यादित्येव रहस्यम् । किं च गायत्रीशब्देन चतुष्पात्त्वादिधर्मकीर्तनस्य सादृश्यानुसंधानार्थत्वाभावे वैयर्थ्यप्रसङ्गाच्च तत्र गौण्याश्रयणं गायत्रीशब्दे न तु गौण्याः प्राबल्यादतो न गौण्यपेक्षया दौर्बल्यमपर्यव-

सानवृत्तेः। नन्वपर्यवसानवृत्तेर्लक्षणापेक्षया प्राबल्ये 'क्षेत्रज्ञं चापि मां विद्धि' [ गी० १३ । २ ] इत्यत्र मां मदात्मकं विद्धीत्यर्थ इति, तथा 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' [ क० १ । १७ ] इत्यत्र देवं देवात्मकमित्यर्थ इत्येवं बहुषु स्थलेषु क्षेत्रज्ञादिशब्दानामपर्यवसानवृत्तिमनाश्रित्य मां देवमित्यादिशब्दानां लक्षणाश्रयणं नोपपद्यते, अतोऽवसीयते लक्षणापर्यवसानवृत्त्योर्वैषम्याभावो भाष्यकृदभिमत इति चेत्तस्यान्वारुह्योक्तिरूपतयाऽप्युपपत्तेः। ननु मुख्यार्थसंबन्धेन तदपृथक्सिद्धविशेष्यस्य लक्षणया प्रतीत्युपपत्तौ न शक्तिः कल्प्याऽनन्यलभ्यस्यैव शब्दार्थत्वादिति चेन्मैवम्। कल्पनायां परमुपालम्भो न तु क्लृप्तस्थलेऽपि। प्रकृते च जातिगुणवाचिगोनीलादिशब्देष्वपृथक्सिद्धविशेषणवाचित्वावच्छेदेन विशेष्यवाचित्वस्य क्लृप्तत्वात्सर्वशब्दप्रवृत्तिनिमित्ताश्रये ब्रह्मणि सर्वशब्दवाच्यत्वस्य प्रत्याख्यातुमशक्यत्वात् 'वचसां वाच्यमुत्तमम्' 'नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती' 'तन्नामरूपाभ्यां व्याक्रियत' [ बृ० १ । ४ । ७ ] 'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्' [ ब्र० सू० २ । ३ । १६ ] इत्यादिश्रुतिस्मृतिसूत्रप्रतिपन्नसर्वशब्दवाच्यत्वस्य ब्रह्मणि प्रत्याख्यातुमशक्यत्वात्, ततश्च त्वंशब्दवाच्यत्वस्य ब्रह्मणि सत्त्वात्तत्त्वमसीत्यस्य नानुपपत्तिरिति वदन्ति। अत्र तत्त्वमसीति तत्त्वंपदाभ्यां सर्वज्ञत्वकिंचिज्ज्ञत्वोपलक्षितं चिन्मात्रं लक्ष्यते। अतश्चिन्मात्र एवास्य श्रुतिसंदर्भस्य तात्पर्यमिति वदन्तः परे प्रत्युक्ताः।

सर्वज्ञं सर्वकर्तारं नारायणमनामयम्।
सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि॥
सर्वेषामपि वेदानामितिहासपुराणयोः।
प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते॥

इति नारदीयवचनविरोधात्। तन्मते श्रुतेः प्रत्यक्षविरोधभयाभावेन तत्त्वंपदमुख्यार्थयोरेवाभेदबोधनसंभवे तत्त्वंपदलक्ष्यचिन्मात्राभेदप्रतिपादकत्वाश्रयणस्य निर्मूलत्वात्। व्याधकुलसंवर्धितराजकुमारस्य व्याधभावभ्रान्त्यपनयनाय प्रवृत्ते त्वं राजकुमारोऽसीति वाक्ये राजकुमारपदे लक्षणाश्रयणाभावेनेहापि जगत्कर्तृत्वसर्वज्ञत्वादिविशिष्टवाचके तत्पदे लक्षणाश्रयणस्यान्याय्यत्वात्। त्वं राजकुमारोऽसीति वाक्येऽपि विधेय-

१ झंसूरमुद्रितपुस्तके—°दिभिर्ब्रह्मणः सर्वशब्दवाच्यत्वस्य सिद्धतया च तत्त्व°।

राजकुमारत्वे तात्पर्याभावे व्याधभावानुपमर्दवद्विधेयभूततच्छब्दार्थभूतजगत्कर्तृत्वसर्वज्ञत्वादितात्पर्याभावे तद्विरोधिजीवभावोपमर्दासंभवादित्यास्तां तावत् । प्रकृतमनुसरामः । एवमुक्तः श्वेतकेतुः सुषुप्तिकाले प्रजानां सत्संपत्तौ सत्यामेवं सति संपन्ना इति प्रतीतिः स्यात् । समुद्रे तरङ्गादीनामिव परमात्मनि सुषुप्तौ लीनानां पुनरुत्थितिश्च न स्यात् । अतः सुषुप्तौ प्रजानां सत्संपत्तिर्न श्रद्धेयेति मन्वान आह—

भूय एव भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥७॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्याष्टमः खण्डः ॥ ८ ॥

---

विशिष्य ज्ञापयत्विति पिता श्वेतकेतुना प्रार्थितस्तथेत्यङ्गीकृतवानित्यर्थः । एतत्खण्डविषयाण्यधिकरणानि लिख्यन्त उत्क्रान्तिपादे । 'वाङ्मनसि संपद्यते' [छा० ६ । ८ । ६] इति श्रूयमाणा वाचो मनःसंपत्तिर्वाग्वृत्तिविषया न तु वाग्विषया । वाचो मनःप्रकृतित्वाभावेनाप्रकृतिभूते मनसि वाचः साक्षाल्लयासंभवात् । न च वाग्वृत्तेरप्यप्रकृतिभूते मनसि संपत्तिशब्दितो लयो न संभवतीति वाच्यम् । मनसि स्थितेऽपि वाग्व्यापाराभावमात्रेण संपद्यत इत्युपपत्तेः । विद्यमानायास्तु वाचस्तादात्विकाभावस्याप्यभावेन संपत्तिश्रुतेरत्यन्तासंभवादिति पूर्वपक्षे प्राप्त उच्यते 'वाङ्मनसि दर्शनाच्छब्दाच्च' [ब्र० सू० ४ । २ । १] वाक्स्वरूपमेव मनसि संपद्यते वागिन्द्रिय उपरतेऽपि मनःप्रवृत्तिदर्शनात् । वाङ्मनसि संपद्यत इति शब्दाच्च वागेव मनसि संपद्यते । यद्यपि मनसो वाक्प्रकृतित्वं नास्ति तथाऽप्यनुपरतव्यापारेऽपि मनसि वाच उपरतव्यापारत्वदर्शनाद्वाङ्मनसि संपद्यत इवेत्युच्यते । वृत्तिपक्षेऽपि संपद्यत इत्यस्य गौणत्वावश्यंभावात् । ततश्च वाचो निर्व्यापारताहेतुभूतो मनसा संयोगविशेषः संपत्तिशब्दार्थ इति द्रष्टव्यम् । 'अत एव च सर्वाण्यनु' [ब्र० सू० ४ । २ । २] यतो वाचो मनसा संयोगमात्रं संपत्तिः । अत एव 'तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः' [प्र० ३ । ९] इति वाचमनु सर्वेषामिन्द्रियाणां संपत्तिश्रुतिरपि तदर्थिकैवेत्यर्थ इति स्थितम् । तथा मनः प्राण इत्यत्र मनोवृत्तेरेव प्राणेऽव्यय उच्यते मनःशब्दस्य मनोवृत्तिष्वपि प्रचुरप्रयोगसत्त्वान्न तु

पूर्वोक्तरीत्या संयोगविशेषः संपत्तिशब्दार्थ इति प्राप्त उच्यते—'तन्मनः प्राण उत्तरात्' [ ब्र० सू० ४ । २ । ३ ] मनसो निर्व्यापारत्वहेतुभूतः प्राणेन संयोगविशेष एवेहापि संपत्तिशब्दार्थः । ततश्च मन एव प्राणे संपद्यते मनः प्राण इत्युत्तरवाक्यादित्यर्थः । मनःशब्दस्य मनोवृत्तिपरत्वेऽपि संपत्तिश्रुतेर्गौणत्वावश्यंभावेन मनःश्रुतेरपि गौणत्वाश्रयणस्यान्याय्यत्वादिति सिद्धान्तितम् । तथा प्राणस्तेजसीति श्रुतेः प्राणस्तेजसि संपद्यत इति प्राप्त उच्यते 'सोऽध्यक्षे तदुपगमादिभ्यः' [ ब्र० सू० ४ । २ । ४ ] स इन्द्रियसहितः प्राणोऽध्यक्षे जीवे संपद्यते 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' [ बृ० ४ । ३ । ३८ ] इति प्राणानां जीवोपगमस्य तेन सहोत्क्रान्तेश्च श्रवणाज्जीव एव संपद्यते । गङ्गया संयुज्य सागरं गच्छन्त्यां यमुनायां यमुना सागरं गच्छतीति प्रयोगवज्जीवद्वारा प्राणस्य तेजःसंपत्तावपि प्राणस्तेजसीत्युक्तिरुपपद्यते । न च प्राणस्य तेजोद्वारेणैव जीवोपगमोऽस्त्विति वाच्यम् । निरध्यक्षस्य प्राणस्य तेजसि स्थितेरसंभवादिति स्थितम् । तथा प्राणस्तेजसीति जीवसंयुक्तस्य प्राणस्य तेजोमात्र एव संपत्तिश्रवणान्न सर्वभूतसंपत्तिरिति प्राप्त उच्यते—'भूतेषु तच्छ्रुतेः' [ ब्र० सू० ४ । २ । ५ ] स जीवः प्राणः संहतेषु सर्वेषु भूतेषु संपद्यते 'पृथिवीमय आपोमयस्तेजोमयः' [ बृ० ४ । ४ । ५ ] इति संचरतो जीवस्य सर्वभूतमयत्वश्रवणेन सर्वभूतसंपत्तेर्वक्तव्यत्वात् । 'नैकस्मिन्दर्शयतो हि' [ ब्र० सू० ४ । २ । ६ ] । एकस्मिंस्तेजोमात्रे न संपद्यते । 'एकैकस्य भूतस्य कार्याक्षमत्वम्' 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' [ छा० ६ । ३ । २ । ३ ]

नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥

इति श्रुतिस्मृती दर्शयत इत्यर्थ इति स्थितम् । तथा 'तेजः परस्यां देवतायाम्' [ छा० ६ । ८ । ६ ] इत्यत्र जीवपरिष्वक्ततेजःशब्दितभूतसूक्ष्माणां परदेवतासंपत्तौ प्रयोजनाभावात्तेजः परस्यां देवतायामिति श्रुतिः स्तुतिमात्रपरेति पूर्वपक्षे प्राप्त उच्यते—'तानि परे तथा ह्याह' [ ब्र० सू० ४ । २ । १५ ] तानि जीवसंसृष्टानि भूतसूक्ष्माणि परे परमा-

त्मनि संपद्यन्ते । कुतः । तथा ह्याह श्रुतिः । तेजः परस्यां देवतायामिति श्रुतिवशाच्च सुषुप्तिप्रलययोरिव परमात्मसंपत्तेः सुखदुःखोपभोगायासविश्रमः प्रयोजनत्वेन परिकल्प्यत इति स्थितम् । तथा सेयं परमात्मनि जीवस्य संपत्तिः प्राकृतलयवत्कारणापत्तिरूपैव सर्वात्मनः सर्वोपादानत्वान्न तु वागादेर्मनआदिष्विवाविभागमात्रमिति पूर्वपक्षे प्राप्त उच्यते—'अविभागो वचनात्' [ब्र० सू० ४ । २ । १६] अत्रापि पृथग्भावानर्हसंसर्गविशेषलक्षणाविभाग एव संपत्तिशब्दार्थः । वाङ्मनसि संपद्यत इत्यत्र सतः संपद्यत इति शब्दस्यैवेहाप्यनुषज्यमानतयाऽभिधानवैरूप्याश्रयणस्यान्याय्यत्वादिति स्थितम् । प्रकृतमनुसरामः॥ ७ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्याष्टमः खण्डः ॥ ८ ॥

---

यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां
वृक्षाणाꣳ रसान्समवहारमेकताꣳ रसं गमयन्ति॥१॥
ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं
वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मी-
त्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति
संपद्य न विदुः सति संपद्यामह इति ॥२॥

यथा लोके मधुमक्षिका मधु निष्पादयन्ति नानात्ययानां नानागतीनां वृक्षाणां रसान्समाहृत्य मधुत्वेनैक्यं गमयन्ति । ते च रसा मधुत्वेनैकतां गता अमुष्य वृक्षस्य बकुलस्य वा कुटजस्य वा रसोऽस्मीति यथा विवेकं न लभन्त एवमेवेमाः सर्वाः प्रजाः सति संपन्ना अहं देवदत्तोऽहममुष्य पुत्रोऽधुना सति संपन्ना इति वा संपत्स्यामह इति वा न जानन्तीत्यर्थः ॥ १ ॥ २ ॥

त इह व्याघ्रो वा सिꣳहो वा वृको वा
वराहो वा कीटो वा पतङ्गो वा दꣳशो वा
मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ ३ ॥

अथ सुषुप्तेरुत्थिताश्च प्रजाः स्वापात्पूर्वं यद्यद्भवन्ति ये येऽभवंस्ते त

आभवन्त्यागत्य भवन्ति । सुषुप्तेः प्राग्व्याघ्राभिमानी स्थितः । सुषुप्त्यनन्तरमपि व्याघ्रोऽहमित्यभिमन्यमान एव भवतीत्यर्थः । पूर्ववासनावासित एवोत्तिष्ठतीति यावत् । ततश्च दर्शनानुसारात्सुषुप्तौ लयो न पुनरुत्थितिविरोधीति भावः ॥ ३ ॥

स परमात्मा अणीमा स य एषोऽणिमा ।

अणुः सूक्ष्म इत्यर्थः ।

ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स
आत्मा तत्त्वमसि श्वेतकेतो इति ।

स्पष्टोऽर्थः । एवमुक्तः श्वेतकेतुः सुषुप्तिदशायां परमात्मनि संपन्नः स्वापानन्तरं तत उत्थायाऽऽगतश्चेत्प्रातर्गृहादुत्थायाऽऽगतस्य गृहादागतोऽस्मीति प्रतिसंधानवत्सत आगतोऽस्मीति प्रतिसंधानप्रसङ्गान्नैतद्विश्रम्भणीयमिति मन्यमान आह—

भूय एव मा भगवान्विज्ञापयत्विति
तथा सोम्येति होवाच ॥ ४ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
नवमः खण्डः ॥ ९ ॥

---

स्पष्टोऽर्थः ।

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
नवमः खण्डः ॥ ९ ॥

---

इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥
एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा

सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥२॥ स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

यथा गङ्गाद्या नद्यः प्राच्यः पूर्वदिक्प्रस्थिताः प्राङ्मुखतया समुद्रं यान्ति, प्रतीच्यः पश्चाद्देशप्रवृत्ताः सिन्ध्वाद्या नद्यः पश्चान्मुखतया समुद्रं यान्ति पुनश्च ताः समुद्रात्समुद्रं गच्छन्ति समुद्रपर्यन्तदेशात्समुद्रमध्यं गत्वा समुद्रेणैकीभूताः सत्य इयं गङ्गाऽहमस्मीयं यमुनाऽहमस्मीत्येवं प्रत्यभिज्ञातुमसमर्था भवन्ति, तथा सुप्तोत्थिता अपि सत आगता इति न प्रत्यभिज्ञातुं समर्था इत्येवं बोधितेन श्वेतकेतुना ननु सुप्तोत्थितस्य सोऽहमित्यनुसंधानबलान्नाशाभावस्याभ्युपगन्तव्यत्वे मरणानन्तरं कदाऽपि पूर्वजन्मस्मरणाभावाज्जीवस्य देहवियोगसमये नाशः कस्मान्न स्यादिति मन्यमानेन भूयो विज्ञापयत्विति प्रार्थितस्तथाऽस्त्वित्यवोचदित्यर्थः। एतत्खण्डाधिकरणं लिख्यते—सुप्तस्य मुक्ताविशिष्टतया ब्रह्मणि लीनस्य पुनर्देहसंबन्धासंभवादन्य एवोत्तिष्ठति सुप्तिरहितपुरुषेषु वैदिककर्मणां साफल्यं च भविष्यतीति प्राप्त उच्यते—'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' [ब्र०सू० ३।२।९] स एव सुप्त एव तूत्तिष्ठति। कुतः, कर्मानुस्मृतिशब्दविधिभ्यः। सुप्तेः प्राक्कृतं कर्म तेनैव भोक्तव्यमन्यथा कृतहानादिप्रसङ्गात्। योऽहं सुप्तः सोऽहं जागर्मीत्यनुस्मृतेः। त इह व्याघ्रो वा सिंहो वेत्यादिशब्दात्। मोक्षार्थविधिवैयर्थ्यप्रसङ्गाच्च न सुषुप्तिर्मुक्तितुल्या। अत एव प्रजापतिविद्यायाम्—'नाह खल्वयमेवं संप्रत्यात्मानं जानाति' इत्यज्ञत्वेन सुषुप्तिर्निन्द्यते 'मनसैतान्कामान्पश्यन्रमते' इति मुक्तिस्तद्विलक्षणतया प्रतिपाद्यते। अतो न सुषुप्तिर्मुक्तिरिति स एवोत्तिष्ठतीति स्थितम् ॥ १ ॥ २ ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥ अस्य यदेकाꣳ शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यति ॥ २ ॥ एवमेव खलु सोम्य विद्धीति होवाच जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्यैकादशः खण्डः ॥ ११ ॥

---

अनेकशाखायुक्ते वृक्षे यस्मिंश्चिन्मूले मध्ये वाऽग्रे वा परश्वादिनाऽभ्याहन्यात्तदा जीवयुक्त एव वृक्षो रसं स्रवति । अतो रसस्रुतिरूपकार्याज्जीवात्माऽऽमूलाग्रं व्याप्य मूलैरुदकं पिबंस्तत्प्रयुक्तसुखादिकं चानुभवन्नास्ते । एवमामूलाग्रं व्याप्य वर्तमानो जीवो यदि कालधर्मवशाद्यं यं प्रदेशं त्यजति स स प्रदेशः शुष्यति । एवमेव सर्वं जहाति यदि तत्सर्वं शुष्यति । ततश्च यथैकैकशाखाशोषो न जीवनाशकृतोऽपि तु जीवसंकोचकृतः प्रदेशान्तरे जीवस्य सत्त्वेन नाशासंभवादेवमेव सर्वशोषोऽपि तत्त्यागकृत एव न तु जीवनाशकृतः । अतो मनुष्यादिष्वपि जीवत्यागकृतं देहस्य मरणं न जीवस्य तथा सति कृतहानाकृताभ्यागमप्रसङ्गात् । अतः सुषुप्तिमरणदशायां सत्संपत्तावपि न जीवविनाश इति सिद्धमिति भावः । एवं बोधितेन श्वेतकेतुनाऽणिम्नः सच्छब्दितस्य

१ म्हैसूरमुद्रितपुस्तके — कर्म ।

रूपस्पर्शादिहीनस्य विविधस्थावरजङ्गमादियुतानेकब्रह्माण्डहेतुत्वं न श्रद्धेयमिति मन्यमानेन भूय एव मा भगवान्विज्ञापयत्विति प्रार्थितस्तथाऽस्त्वित्युवाचेत्यर्थः। व्यासार्यैस्तु 'ज्ञोऽत एव' [ब्र० सू० २।३।१८] इत्यधिकरणे—अस्य सोम्य महतो वृक्षस्येति वृक्षशब्देन शरीरं निर्दिश्यत इत्युक्तम्॥ १॥ २॥ ३॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्यैकादशः खण्डः॥ ११॥

---

न्यग्रोधफलमत आहरेतीदं भगव इति।

मित्

न्यग्रोधफलमाहरेत्याचार्येणोक्तः श्वेतकेतुरिदं भगव इत्यानीतवानित्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्।

भिन्द्धीति भिन्नं भगव इति किमत्र पश्यसीत्यणव्य इवेमा धाना भगव इति।

किमत्र फले पश्यसीति पित्रोक्तः पुत्रः अण्व इवेमा धाना भगव इत्याह।

इमानि बीजान्यणून्येव पश्यासीत्यर्थः। इवशब्द एवार्थः।

आसामङ्गैकां भिन्द्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति॥१॥ तꣳ होवाच।

स्पष्टोऽर्थः।

यं वै सोम्यैतमणिमानं न निभालयसे।

हे सोम्य, एवं यमेतं वटबीजाणिमानं न निभालयसे न पश्यसि किमित्यर्थः।

एतस्य वै किल सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति॥ २॥

एष महान्यग्रोध एतस्यैव किलाणिम्नः कार्यतया तिष्ठति। अतोऽणोरपि सच्छब्दितात्परिदृश्यमानस्य स्थूलस्य प्रपञ्चस्योत्पत्तिरुपपद्यत इत्यस्मिन्नर्थे श्रद्धा कर्तव्येत्यर्थः। शिष्टं स्पष्टम्।

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

*यदि परमात्मा कारणानुगतः कथं तर्हि तदनुपलम्भः। अनुपलम्भे च तत्र तस्यानुगतत्वे किं मानमित्यभिप्रायेण प्रार्थितस्तथेत्युक्तवानित्यर्थः ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार।

रात्रौ लवणं जले प्रक्षिप्य प्रातर्मत्समीपमागच्छेति गुरुणोक्तः श्वेतकेतुस्तथा चकारेत्यर्थः।

तꣳ होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥ १ ॥

दोषा रात्रौ यल्लवणमुदकेऽवाधाः प्रक्षिप्तवानसि तदङ्गाधुनाऽऽहरेत्युक्तो विमृश्य न ज्ञातवान् ॥ १ ॥

यथा विलीनमेवाङ्ग ।

यथा लवणं विद्यमानमपि विलीनं सच्चक्षुषा त्वचा वा नोपलभ्यत एवं जीवात्मस्वरूपमपीति भावः। एवं चक्षुषा त्वचाऽप्यग्राह्यस्य लवणस्योपायान्तरेणावगतिप्रकारं दर्शयति—

---

* मैसूरमुद्रितपुस्तके—अनुपलम्भान्न सच्छब्दितं श्रद्धेयमिति मन्यमानेन भूयोऽपि विज्ञापयत्विति प्रार्थि० इति पाठः।

---

१ मैसूरमुद्रितपुस्तके—०वं सदात्म० ।

अस्यान्तादाचामेति कथमिति लवणमिति ।

अस्य जलस्याऽऽदौ मूलप्रदेश उद्धृत्याऽऽचामेत्यथ पित्रोक्तः पुत्र आचम्यानन्तरं कथमिति पृष्टो लवणमित्युक्तवानित्यर्थः ।

मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमिति लवणमिति ।

उक्तोऽर्थः ।

अभिप्रास्यैतदथ मोपसीदथा इति तद्ध तथा चकार ।

एतत्परित्यज्य मत्समीपमागच्छेत्युक्तः पुत्रस्तथा चकार ।

तच्छश्वत्संवर्तते तꣳ होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥२॥

तल्लवणं जले शश्वत्सर्वदा सम्यग्वर्तत इत्युक्तवन्तं शिष्यं प्रति पितोवाच किमिति रसनेन्द्रियेणोपलभ्यमानतया वस्तुतः सदेव लवणं यथा चक्षुषा त्वचा वा नोपलभ्यते एवमेवात्रैव जगत्यन्तरात्मतयाऽऽगमाचार्योपदेशादिनाऽवगन्तुं योग्यमेव सच्छब्दितं ब्रह्मात्रैव किल वर्तत इति न निभालयसे द्रष्टुं न शक्नोषि न पश्यसीत्यर्थः ॥ २ ॥

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य त्रयोदशः खण्डः ॥ १३ ॥

---

तर्हि सर्वव्यापिनः सच्छब्दितस्यावगत्युपायं दृष्टान्तेन प्रदर्शयेति प्रार्थित आचार्यस्तथाऽस्त्वित्युक्तवानित्यर्थः ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य त्रयोदशः खण्डः ॥ १३ ॥

---

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमा-
नीय तं ततोऽतिजने विसृजेत्स यथा तत्र
प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीता-
भिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः॥१॥

हे सोम्य यथा लोके गन्धारेभ्यो जनपदेभ्यः पिनद्धचक्षुषं कंचित्पुरुषं चोरो गृहीत्वा विजने विसृजेद्यदि स दिग्भ्रमोपेतः प्राङ्मुख उदङ्मुखो वाऽधोमुखो वाऽभिनद्धाक्ष एव तस्करैरानीतोऽभिनद्धाक्ष एव विसृष्टोऽहमिति विक्रोशेतेत्यर्थः ॥ १ ॥

तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं
गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं
पृच्छन्पण्डितो मेधावी गन्धारानेवोपसंपद्येत ।

यथा कश्चित्कारुणिकस्तस्य बन्धनं मुक्त्वोत्तरतो गन्धारा एतां दिशं व्रजेति प्रब्रूयाद्यदि स तथोक्तो ग्रामाद्ग्रामान्तरं पृच्छंस्तैस्तैरुपदिष्टमार्गो मेधाव्युक्तार्थाविस्मरणशीलः पण्डित ऊहापोहक्षमधीयुक्तो यथा गन्धारानेव पुनरभिसंपद्येत प्राप्य निर्दुःखो भवेदित्यर्थः ।

एवमेवेहाऽऽचार्यवान्पुरुषो वेद तस्य तावदेव
चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति॥२॥

एवमाचार्योपदेशेन ब्रह्मात्मकस्त्वमस्यतस्तदात्मकतया स्वात्मानमनुसंधत्स्वेत्युपदिष्टस्तदात्मकत्वमनुसंधत्ते । तस्यैतादृशानुसंधाननिष्ठस्य तावानेव विलम्बः । यावत्प्रारब्धकर्मारब्धशरीरान्न विमोक्ष्यते । अथ तदनन्तरं तु सद्रूपं ब्रह्म संपत्स्यते । न विमोक्ष्ये संपत्स्य इति पुरुषव्यत्ययश्छान्दसः । केचित्तु तस्य तावदेव चिरमित्यत्र म इत्यध्याहारः । तस्य मे तावानेव विलम्बो यावत्कर्मभिर्न विमोक्ष्येऽतः परं ब्रह्म संपत्स्य इत्युपासकस्यानुसंधानप्रकारोऽनेन वाक्येनोच्यत इति वदन्ति । ननु यावन्न विमोक्ष्य इत्युक्ते कथं शरीरान्मोक्षसिद्धिः । उच्यते । मोक्ष इत्युक्ते कस्मान्मोक्ष इत्याकाङ्क्षायामस्यामेव विद्यायाम् 'अथ यदाऽस्य वाङ्मनसि संपद्यते' [छा० ६ । १५ । २] इत्यादिना

देहादुत्क्रमणश्रवणादन्यत्र च 'शरीरात्समुत्थाय परं ज्योतिरुपसंपद्य' [छा०८।३।४] 'धूत्वा शरीरम्' [छा०८।१३।१] 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' [छा० ८।१२।१] इति श्रवणात्। 'त्यक्त्वा देहं पुनर्जन्म नैति' [गी० ४।९] इत्यादिस्मरणाच्च शरीरान्मोक्ष इत्येवावगम्यते। अथ संपत्स्य इत्यत्रापि संपत्तेः कर्मापेक्षायां। 'सता सोम्यं तदा संपन्नो भवति' [छा० ६।८।१] इति वाक्यान्तरप्रतिपन्नं ब्रह्मैव कर्मतया संबध्यत इत्यवगम्यते। उत्तरखण्डिकायामेतद्विवरणप्रवृत्तायां देहे मोक्षब्रह्मसंपत्त्योः कथनाच्चैवमेवार्थः। एवमेव व्यासार्यैः 'तन्निष्ठस्य मोक्षोपदेशात्' [ब्र० सू० १।१।७] इत्यत्रोक्तम्। न चाऽऽचार्यवान्पुरुषो वेदेत्यत्र वेदेत्यस्य शाब्दज्ञानमात्रार्थकत्वं शङ्क्यम्। वेदान्तेषु विद्युपास्योर्व्यतिकरेण प्रयोगात्, शाब्दज्ञानमात्रेण मोक्षस्य 'बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्' इत्यादिप्रमाणप्रतिषिद्धत्वाच्च, विदिधातुरुपासनावाच्येव। एवमस्यामपि विद्यायां येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति विज्ञानशब्दश्रवणात्, तस्य च 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' [बृ०२।४।५] इत्यनेनैकार्थ्याच्चोपासनापरत्वमेवाऽऽश्रयणीयम्। व्यासार्यैस्तु 'आचार्यवान्पुरुषो वेद' [छा०६।१४।२] इत्याचार्यवत्ताफलत्वेन प्रतिपादितार्थविशेषवेदनवचनं तदर्थस्यानुसंधेयत्वे लिङ्गमिति वाक्यार्थज्ञानवाचिन एव वेदेत्यस्यानुसंधानाक्षेपकत्वमुक्तम्। चतुर्थाध्याये 'सर्वे पाप्मानः प्रदूयन्ते' [छा० ५।२४।३] इति सर्वकर्मप्रदाहश्रवणात्, ब्रह्मविद्योत्पत्त्यनन्तरमेव सर्वकर्मणां नाशः। देहस्थितिस्तु चक्रभ्रमणादिवत्संस्कारवशादप्युपपद्यत इति प्राप्त उच्यते 'अनारब्धकार्ये एव तु पूर्वे तदवधेः' [ब्र० सू० ४। १।१५] विद्योत्पत्तेः प्राचीने अनारब्धकार्ये एव सुकृतदुष्कृते नश्यतो न त्वारब्धकार्ये। 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' [छा० ६।१४।२] इति शरीरपातविलम्बावधिश्रवणाद्यावच्छरीरधारणं प्रारब्धकर्मानुवृत्तेरवश्यंभावात्कर्मव्यतिरिक्तस्य देहधारकसंस्कारस्य सद्भावे प्रमाणाभावादित्युक्तम्। तथा 'भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते' इत्यत्र 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति विद्यायोनिशरीरपातमात्रस्यैवान्तरायत्वश्रवणात्प्रारब्धयोः पुण्यपापकर्मणोः सत्त्वेऽपि विद्यायोनिशरीरावसाने सत्येव मोक्ष इति प्राप्त उच्यते—'भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते'

[ ब्र० सू० ४ । १ । १९ । ] तुशब्दः पक्षव्यावृत्त्यर्थः । इतरे आरब्धकार्ये पुण्यपापे फलभोगेन क्षपयित्वैव ब्रह्म संपद्यते ते च प्रारब्धे पुण्यपापे विद्यायोनिशरीरमात्रोपभोग्यफले चेत्, विद्यायोनिशरीरावसाने ब्रह्म संपद्यते । अनेकशरीरभोग्यफले चेत्, तदवसाने संपद्यते भोगेनैव क्षपयितव्यत्वात्प्रारब्धकर्मणोः । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति न तद्देहविमोक्ष इत्युच्यते, अपि तु देहारम्भककर्मविमोक्ष एवेति प्रतिपादितम् । प्रकृतमनुसरामः ॥ २ ॥

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ
स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा
भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
चतुर्दशः खण्डः ॥ १४ ॥

---

ननु देहविमोक्षानन्तरं ब्रह्मसंपत्तिरित्ययुक्तम् । देवोऽहं मनुष्योऽहमित्यभिमानस्य कदाऽप्यनुपरततया यावदात्मभावित्वेन देवादिशरीरसंबन्धस्यापि यावदात्मभावित्वादतो देहराहित्योपजीविनी ब्रह्मसंपत्तिरपि न श्रद्धेयेति मन्वानेन श्वेतकेतुना भूय एव मा भगवान्विज्ञापयत्विति प्रार्थितस्तथेत्युवाचेत्यर्थः ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
चतुर्दशः खण्डः ॥ १४ ॥

---

पुरुषꣳ सोम्योपतापिनं ज्ञातयः पर्युपासते
जानासि मां जानासि मामिति तस्य यावन्न
वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि
तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥

हे सोम्य, उपतापिनं मरणवेदनाक्रान्तं पुरुषं बन्धवो मां जानासि किं मां जानासि किमित्यसकृद्वदन्तः परितस्तिष्ठन्ति । स तु मुमूर्षुः पूर्वोक्तसत्संपत्तिपर्यन्तं ताञ्जानातीत्यर्थः ॥ १ ॥

अथ यदाऽस्य वाङ् मनसि संपद्यते मनः प्राणे प्राण-
स्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥ २ ॥

सत्संपत्त्यनन्तरं तु तान्न जानातीत्यर्थः। ततश्च सर्वेषां मरणदशायां सत्संपत्तौ देहाभिमानाननुवृत्तेस्तत्प्रयुक्तदेहसंबन्धनित्यताशङ्काया असंभवात्। 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति देहसंबन्धात्यन्तनिवृत्तिप्रतिपादकश्रुतेर्नानुपपत्तिरिति भावः ॥ २ ॥

स य एषोऽणिमा।

प्रारब्धविमोक्षानन्तरभाविसंपत्तिकर्मत्वेन पूर्वखण्डिकानिर्दिष्टः सच्छब्दितः स एषोऽणुरित्यर्थः। शिष्टं स्पष्टम्।

ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्व-
मसि श्वेतकेतो इति भूय एव मा भगवान्वि-
ज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

ननु देवमनुष्यादिप्रकृत्यात्मकत्वाभिसंधानादनर्थो भवति सदात्मकत्वाभिसंधानादनर्थनिवृत्तिरिति न श्रद्धेयम्। न ह्यभिसंधिभेदमात्रेण महापुरुषार्थापुरुषार्थौ दृष्टचराविति मन्यमानेन श्वेतकेतुना भूय एव मा भगवान्विज्ञापयत्विति प्रार्थितस्तथाऽस्त्वित्युवाचेत्यर्थः।

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

ऐतदात्म्यमिदꣳ सर्वं तत्सत्यमिति सत्यभूतं सदात्मकत्वमनुसंदधानस्यैवानर्थनिवृत्तिर्न तु प्रकृत्यात्मकत्वलक्षणासत्यानुसंधाननिष्ठस्यानर्थपरिहार इत्याह—

पुरुषꣳ सोम्योत हस्तगृहीतमानयन्त्यप-
हार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति।

हे सोम्य लोके राजपुरुषा हस्ते पुरुषं गृहीत्वाऽऽनयन्ति, कोऽपराधोऽ-

नेन कृत इति पृष्टाः सन्तोऽपहारं कृतवान्, चौर्यरूपेणापहारं कृतवान्। अपहृत्य चापनिह्नुतेऽत एतस्य शोधनार्थं परशुमयःपिण्डमस्मै तपतेति वदन्त आनयन्ति।

स यदि तस्य कर्ता भवति तत एवानृतमात्मानं
कुरुते सोऽनृताभिसंधोऽनृतेनाऽऽत्मानमन्तर्धाय
परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥१॥

स हस्तगृहीतः पुरुषो न मया द्रव्यमपहृतमिति द्रव्यापहारमपह्नुवानो यद्यपहारस्य कर्ता स्यात्तदाऽसत्यप्रतिज्ञत्वात्स्वात्मानमनृतं करोति। अनृताभिसंध्यन्तर्हितः स ततस्तप्तं परशुं राजपुरुषार्पितं हस्तेन प्रतिगृह्णाति ततः स दह्यते राजपुरुषैर्हन्यते चेत्यर्थः ॥ १ ॥

अथ यदि तस्याकर्ता भवति तत एव
सत्यमात्मानं कुरुते स सत्याभिसंधः
सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रति-
गृह्णाति स न दह्यतेऽथ मुच्यते ॥ २ ॥

स यदि तस्य चौर्यस्याकर्तैव सन्नाहमपाहार्षमिति प्रतिजानीयात्तदा सत्याभिसंधिवशेनैवाऽऽत्मानं सत्यं कृत्वा सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं गृह्णाति सत्याभिसंधिवशादेव प्रतिबद्धदाहो राजपुरुषैर्मुच्यते॥ २ ॥

स यथा तत्र न दाह्येत

स सत्याभिसंधः पुमांस्तत्र परशुग्रहणे यथा न दह्यत इत्यर्थः। एवं सदात्मकत्वलक्षणसत्याभिसंधिः पुमान्सांसारिकैरनर्थैर्न स्पृश्यत इत्यर्थः।

ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स
आत्मा तत्त्वमसि श्वेतकेतो इति।

अतः सर्वस्य सदात्मकत्वानुसंधानमेव सत्याभिसंधिरिति सर्वान्तर्गतस्त्वमपि सदात्मक इति सदात्मकत्वरूपसत्याभिसंधिमान्भव, तेन संसारदाहानभिभूतो मुच्यस इत्यर्थः।

तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ३ ॥

इति च्छान्दोग्योपनिषदि षष्ठप्रपाठकस्य
षोडशः खण्डः ॥ १६ ॥

---

॥१॥२॥३॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
षोडशः खण्डः ॥ १६ ॥

---

इति च्छान्दोग्योपनिषदि षष्ठः प्रपाठकः समाप्तः ॥६॥

सच्छब्दितं तत्परं ब्रह्मास्य गुरोर्वचनाज्ज्ञातवाञ्श्वेतकेतुरित्यर्थः। द्विरुक्तिरध्यायसमाप्त्यर्था। अत्र व्यासार्यैस्तद्धास्य विजज्ञावित्यत्र विजज्ञाविति पदमविज्ञातं विज्ञातमिति प्रक्रमश्रुतविज्ञानशब्दसमानार्थकमत उपासनावचनमित्युक्तम्। तत्तु संभवाभिप्रायेण। पूर्वत्राष्टकृत्वोऽभ्यस्तेन भूय एव मा भगवान्विज्ञापयत्विति वाक्येन तन्मे विजानीहीति वाक्येन च प्रस्तुतविज्ञानविषयत्वादस्य विजज्ञावितिपदस्य तत्र च वाक्य उपासनप्रसक्तेरभावात्। न हि विज्ञापयत्वित्यत्रोपासनं कारयत्वित्यर्थो युक्तः। 'त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति' [छा० ६।४।७] इति वाक्ये 'भूय एव मा भगवान्विज्ञापयतु' इति वाक्ये तद्धास्य विजज्ञाविति वाक्ये च पूर्वत्र त्रिवृत्प्रकरणे श्रुतस्य विजानातेरुपासनार्थत्वाभावेनेहापि तथात्वस्यैव युक्तत्वादिति द्रष्टव्यम्। केचित्तु—त्रिवृत्करणप्रकरणे श्रुतानां विज्ञानशब्दानामुपासनार्थत्वे दोषाभावादेतेषां विज्ञानशब्दानामुपासनार्थत्वमेव। अथ वा मध्ये विज्ञानशब्दानामतथात्वेऽप्युपक्रमोपसंहारैकरूप्यार्थमुपक्रमस्थविज्ञानशब्दवदुपसंहारस्थं विजज्ञाविति पदमुपासनार्थमेवेति वदन्ति। एतद्विषयकमधिकरणं लिख्यते समन्वयाध्याये प्रथमे पादे—सर्वं हि जगत्सुखदुःखमोहात्मकं दृष्टम्। लोके ह्येकस्यैव रूपयौवनशालिनो योषित्पिण्डस्य भर्तारं प्रति सुखरूपत्वम्, सपत्नीजनं प्रति दुःखरूपत्वम्, कामुकपुरुषान्तरं प्रति मोहरूपत्वं च दृष्टम्। अतः सुखदुःखमोहात्मकतया सत्त्वरजस्तमोमयस्य जगतस्तदनुरूपमेव कारणं वक्तव्यमिति

युक्तिसिद्धं त्रिगुणात्मकं प्रधानं सर्वज्ञकपिलस्मृतिसिद्धं सद्विद्याप्रतिपाद्यमिति पूर्वपक्षे प्राप्त उच्यते—'ईक्षतेर्नाशब्दम्' [ब्र० सू० १।१।५]। शब्दः प्रमाणमेव न भवति यस्य तदशब्दमानुमानिकमिति यावत्। आनुमानिकं प्रधानं न 'सदेव सोम्येदमग्र आसीत्' [छा० ६।२।१] इति सच्छब्दितमपि तु परं ब्रह्मैव। कुतः। ईक्षतेः। ईक्षणादित्यर्थः। यद्यपि, इक्श्तिपौ धातुर्निर्देशे वक्तव्यावितीक्षतिशब्दो धातुवाची तथाऽपीह धातुवाचिनेक्षतिशब्देनार्थो लक्ष्यते 'तदैक्षत बहु स्यां प्रजायेयेति' [छा० ६।२।३] इति सच्छब्दितस्येक्षणकथनादचेतन ईक्षणासंभवात्। न चैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृत्पिण्डादिदृष्टान्तस्य चोपन्यासेनानुमानवैषत्वप्रतीतेरानुमानिकमेव प्रधानमिह प्रतिपाद्यत इति शङ्क्यम्। प्रतिज्ञादृष्टान्तोपन्यासेऽपि प्रधानभूतहेत्ववयवानुपदेशेनानुमानोपन्यासरूपत्वाभावात्। न च 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' [छा०६।८।६] इति कार्यलिङ्गोपन्यासादनुमानविवक्षा प्रतीयत एवेति वाच्यम्। उपक्रमोपसंहाराद्यन्तर्गतोपपत्तिरूपतात्पर्यलिङ्गतया कार्यलिङ्गोपन्यासेऽपि सांख्याभिमतसुखदुःखमोहान्वितत्वरूपहेतूपन्यासादर्शनात्। 'गौणश्चेन्नाऽऽत्मशब्दात्' [ब्र०सू० १।१।६] ननु 'तत्तेज ऐक्षत' [छा० ६।२।३] 'ता आप ऐक्षन्त' [छा० ६।२।४] इत्यचेतने तेजआदौ श्रुतस्येक्षणस्य मुख्यस्यासंभवेन कार्यौन्मुख्यलक्षणगौणार्थस्यैव समाश्रयणीयतया सच्छब्दितेऽपि श्रूयमाणमीक्षणं गौणमेवास्त्विति चेन्न। 'ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा' [छा० ६।८।७] इति सत आत्मत्वप्रतिपादकश्रुतिव्याकोपप्रसङ्गेन गौणेक्षणप्रायपाठस्यानादर्तव्यत्वात्तेजःप्रभृतिशब्दानामपि परमात्मपर्यन्ततया तत्रापीक्षणस्य मुख्यार्थत्वसंभवाच्च। 'तन्निष्ठस्य मोक्षोपदेशात्।' [ब्र० सू० १।१।७] 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' [छा० ६।१४।२] इति सदात्मकत्वविद्यानिष्ठस्य शरीरपातमात्रान्तरायब्रह्मसंपत्तिलक्षणमोक्षश्रवणात्। न हि प्रकृत्यात्मत्वानुसंधाननिष्ठस्य मोक्षः सांख्यमतेऽपि संप्रतिपन्नः। 'हेयत्वावचनाच्च' [ब्र० सू० १।१।८]। यदि सच्छब्दितं प्रधानं स्यात्तर्हि सदात्मकत्वं मुमुक्षोर्हेयतयोपदेश्यं स्यान्न त्वनुसंधेयत्वेनेत्यर्थः। 'प्रतिज्ञाविरोधात्' प्रधानविज्ञाने तत्कार्याचेतनमात्रविज्ञानेऽपि चिदचिदात्मकसर्वप्रपञ्चविज्ञानाभावेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा पीड्येत।

'स्वाप्ययात् ।' [ ब्र० सू० १ । १ । ९ ] 'सता सोम्य तदा संपन्नो भवति' [ छा० ६ । ८ । १ ] इति श्रुतिः सत्संपत्तिं 'स्वं ह्यपीतो भवति' [ छा० ६ । ८ । १ ] इति स्वाप्ययत्वेन बोधयति । सच्छब्दितस्य प्रधानत्वे स्वशब्दार्थभूतमात्मत्वं नोपपद्यते । ब्रह्मत्वे तु स्वशब्दार्थभूतमात्मत्वमुपपद्यते । तथाऽचेतनेऽकारणे जीवस्याप्ययशाब्दितो लयश्च नोपपद्यते । 'गतिसामान्यात् ।' [ ब्र० सू० १ । १ । १० ] सर्वेषु वेदान्तेषु 'आत्मा वा इदमेक एवाग्र आसीत् ।' [ ऐ० १ । १ ] 'एको ह वै नारायण आसीत् ।' 'सत्यं ज्ञानमनन्तं ब्रह्म [ तै० २ । १ । १ ] इत्यादिषु चेतनकारणत्वावगतेस्तत्साम्यमेवेहापि वक्तव्यम् । अतस्तदैकार्थ्यायेहापि सच्छब्दितं ब्रह्मैव कारणत्वेन निर्दिश्यते । 'श्रुतत्वाच्च' [ ब्र० सू० १ । १ । ११ ] अस्यामेवोपनिषदि सच्छब्दवाच्यस्याद्वितीयत्वनामरूपव्याकर्तृत्वसर्वज्ञत्वसर्वशक्तित्वसर्वाधारत्वापहतपाप्मत्वादीनां श्रवणान्नाचेतनं प्रधानं सच्छब्दितमिति स्थितम् ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठप्रपाठकस्य
षोडशः खण्डः ॥ १६ ॥

---

इति च्छान्दोग्योपनिषत्प्रकाशिकायां षष्ठः
प्रपाठकः समाप्तः ॥ ६ ॥

---

भूमविद्या प्रस्तूयते—

अधीहि भगव इति होपससाद सनत्कुमारं नारदः ।

सनत्कुमारं योगीश्वरं नारदर्षिरधीहि भगव इति मन्त्रोच्चारणपूर्वकं विधिवदुपसन्न इत्यर्थः । अधीह्यधीष्वेत्यर्थः ।

तꣳ होवाच

तमुपसन्नं नारदं सनत्कुमार उवाचेत्यर्थः । तदेवाऽऽह—

यद्वेत्थ तेन मोपसीद

यत्त्वं ज्ञातवानसि तदिदमहं जान इति तत्प्रख्यापनेन मामुपसीद ।

ततस्त ऊर्ध्वं वक्ष्यामीति ॥ १ ॥

ज्ञातांशस्योपदेशो व्यर्थ इति भावः ॥ १ ॥

स होवाच ऋग्वेदं भगवोऽध्येमि

अध्येमि स्मरामि वेद्मीति यावत्, यद्वेत्थेति वेदनस्योक्तत्वात्।

यजुर्वेदꣳ सामवेदमाथर्वणं चतु-
र्थमितिहासपुराणं पञ्चमम् ।

वेदानध्यापयामास महाभारतपञ्चमान् ।

इतिवद्वगादिभिरितिहासस्यात्र पञ्चमत्वोक्तिः ।

वेदानां वेदं पित्र्यꣳ राशिं दैवं
ऋगादीनां वेदं निधिं वाकोवाक्यमेकायनम् ।

वेदानां प्रकृतिप्रत्ययविभागवेदकं व्याकरणमित्यर्थः । पित्र्यं श्राद्धकल्पं। राशिं गणितं। दैवमुत्पातज्ञानं। निधिं निधिदर्शनोपायप्रतिपादकं शास्त्रं। वाकोवाक्यं तर्कशास्त्रम्। एकायनमेकायनशाखाम् ।

देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां
नक्षत्रविद्याꣳ सर्पदेवजनविद्याम् ।

देवविद्या देवतोपासनप्रकारविद्या, ब्रह्मविद्या वेदाङ्गभूतशिक्षादिविद्या, भूतविद्या वशीकरणविद्या, क्षत्रविद्या धनुर्वेदो, नक्षत्रविद्या ज्योतिषं, सर्पविद्या गारुडविद्या, देवविद्या गान्धर्वशास्त्रं, जनविद्याऽऽयुर्वेदः ।

एतद्भगवोऽध्येमि ॥ २ ॥

अहमेतत्सर्वं जानामीत्यर्थः ॥ २ ॥

सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मविच्छ्रुतꣳ ह्येव मे
भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः
शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति ।

पूज्यवन् हे भगवः, अहमेतत्सर्वं जानन्नपि मन्त्रविदेवास्मि शब्दब्रह्मनिष्ठ एवास्मि। यद्वा मन्त्रप्रधानकर्मनिष्ठ इति वा(१)ऽर्थः । नाऽऽत्मविदस्मि न परब्रह्मवित् । आत्मशब्दस्य तस्मिन्नेव मुख्यत्वाज्जीवस्य त्वापेक्षिकात्मत्वेन निरङ्कुशात्मत्वाभावाच्च। मन्त्रवित्त्वादात्मवित्त्वे किमधिकं स्यादित्यत्राऽऽह—भगवद्दृशेभ्यो भवादृशेभ्यो महद्भ्य आत्मविच्छोकं संसारं

(१) इकोनाकारेऽधिको भाति।

तरतीति मे श्रुतमेव हि । मे इति संबन्धसामान्ये षष्ठी मया श्रुतमित्यर्थः । एतादृशविद्यासंपन्नोऽप्यहमात्मज्ञानराहित्याच्छोकार्णवे पतितोऽस्मि तं तादृशं मां भगवानात्मज्ञानेन शोकार्णवस्य पारं तारयत्वित्युवाचेत्यर्थः ।

तꣳ होवाच ।

सनत्कुमार इति शेषः ।

यद्वै किंचैतदध्यगीष्ठा नामैवैतत् ॥ ३ ॥

अध्यगीष्ठा अधीतवानसीत्यर्थः । अत्र तेषां नामैवाऽऽत्मेति प्रतिवचने दातव्ये नामैवैतदित्यधीतर्ग्वेदादिसामानाधिकरण्येन प्रतिवक्तुः सामानाधिकरण्यनिर्देशार्हत्वमेवाऽऽत्मत्वमिति भावः ॥ ३ ॥

तदेव प्रपञ्चयति—

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्याः ।

स्पष्टोऽर्थः । उपसंहरति—

नामैवैतत् ।

इति नामरूपमयत्वात्प्रपञ्चस्य विशिष्यर्ग्वेदादिलक्षणशब्दराशेर्नामरूपत्वाच्च सर्वं नामैवेत्यर्थः । ततः किमित्यत्राऽऽह—

नामोपास्स्वेति ॥ ४ ॥

अत्र ब्रह्मेति शेषः । नाम ब्रह्मेत्युपास्स्वेत्यर्थः ॥ ४ ॥

तस्य फलमाह—

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति ।

नामप्रवृत्तिर्यावति देशे तावति देशेऽस्य नामब्रह्मोपासकस्य यथेष्टं संचरणं भवति । उक्तमेव पुनरुपसंहरति—

योनाम ब्रह्मेत्युपास्ते ।

आत्मानं जिज्ञासमानं प्रति ब्रह्मत्वेन नामोपदर्शनस्याऽऽत्मत्वब्रह्मत्वे अन्यूनातिरिक्तवृत्तिधर्माविति भावः । ब्रह्मशब्दप्रवृत्तिनिमित्तं बृहत्त्वं नाम्नि न पुष्कलमिति मत्वा नामोपदेशेनापरितुष्टः सन्नारदः पृच्छति—

अस्ति भगवो नाम्नो भूय इति ।

वैपुल्यार्थाद्बहुशब्दादातिशायनिक ईयसुन्प्रत्यये भूय इति रूपम् । किं नाम्नोऽपि विपुलतरं किंचिदस्तीति प्रश्नार्थः । वैपुल्यं च गुणोत्कर्षकृतं द्रष्टव्यं न तु परिमाणात्कृतं तथैवोत्तरत्र प्रपञ्चनादिति द्रष्टव्यम् । अत्र नाम्नो बृहत्त्वलक्षणब्रह्मत्वे कथिते ततोऽपि किं बृहदस्तीति प्रष्टव्ये ततोऽपि किं भूयोऽस्तीति प्रश्नाद्भूयस्त्वं बृहत्त्वं चैकमिति ज्ञाप्यते । गुरुराह—

नाम्नो वाव भूयोऽस्तीति ।

शिष्य आह—

तन्मे भगवान्ब्रवीत्विति ॥ ५ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

स्पष्टोऽर्थः ॥ ५ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

गुरुराह—

वाग्वाव नाम्नो भूयसी ।

वावशब्दः प्रसिद्धौ । तदेव प्रपञ्चयति—

वाग्वा ऋग्वेदं विज्ञापयति ।

वैशब्दोऽवधारणे ।

यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाको-

वाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्श्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च।

हृदयज्ञो मनोज्ञः। हृदयप्रिय इत्यर्थः। शिष्टं स्पष्टम्। एतत्सर्वं वागेव विज्ञापयतीति पूर्वेणान्वयः। वागभाव एतज्ज्ञानं नास्तीत्यपि दर्शयति—

यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यत्।

वागिन्द्रियाभावे वेदाध्ययनाद्यभावाद्धर्मादिकं विज्ञातं च नाभविष्यदित्यर्थः।

न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति॥१॥

स्पष्टम्॥१॥

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति॥ २॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य द्वितीयः खण्डः॥ २॥

---

सर्वं पूर्ववत्॥ २॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य द्वितीयः खण्डः॥ २॥

---

गुरुराह—

मनो वाव वाचो भूयो यथा वै द्वे वाऽऽम-
लके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभ-
वत्येवं वाचं च नाम च मनोऽनुभवति ।

यथाऽऽमलकफलद्वयं वा कोलफलद्वयं वा बिभीतकफलद्वयं वा मुष्टावन्तर्गतं भवति, एवं वाङ्नामनी मनस्यन्तर्गते । तदेवोपपादयति—

स यदा मनसा मनस्यति मन्त्रानधीयी-
येत्यथाधीते कर्माणि कुर्वीयेत्यथ कु-
रुते पुत्रांश्च पशूंश्चेच्छेयेत्यथेच्छत
इमं च लोकममुं चेच्छेयेत्यथेच्छते ।

स पुरुषो यदा मनसा मन्त्रानधीयीय मन्त्रानुच्चारयेयमिति मनस्यति मनुते । तदनन्तरमेवाधीते । कर्माणि करवाणीति मननानन्तरमेव कर्माणि कुरुते । पुत्रांश्च पशूंश्चेच्छेयम्, इमं लोकममुं चेच्छेयमिति मत्वेच्छति । अतश्च मननलक्षणमनोव्यापाराधीनत्वाद्वागादिप्रवृत्तेर्मनसो भूयस्त्वमिति भावः ।

मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म ।

मनोधीनत्वादात्मधर्मभूतकर्तृत्वादेर्मन एवाऽऽत्मा । लोकस्यापि मनोव्यापाराधीनत्वान्मन एव लोकः । वागाद्यपेक्षया बृहत्त्वान्मनो हि ब्रह्म ।

मन उपास्स्वेति ॥ १ ॥

अतस्त्वं मन उपास्स्वेत्यर्थः ॥ १ ॥

स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं
तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मे-
त्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो
वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

स्पष्टोऽर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
तृतीयः खण्डः ॥ ३ ॥

---

गुरुराह—

संकल्पो वाव मनसो भूयान्यदा वै संकल्पयतेऽथ
मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति
नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥

यदा, इदं कर्तुं युक्तमिति संकल्पयति तदा, इदं कर्तव्यमिति मन्यते । ततश्च वागिन्द्रियं प्रेरयति । तच्च वागिन्द्रियं शब्दोच्चारणविषये नियुङ्क्ते ॥ १ ॥

तानि ह वा एतानि संकल्पैकायनानि
संकल्पात्मकानि संकल्पे प्रतिष्ठितानि ।

तान्येतानि नामादीनि संकल्प एकमयनं मार्गो येषां तानि संकल्पैकायनानि संकल्पानुसारीणीति यावत् । संकल्प आत्मा कर्ता येषां तानि संकल्पात्मकानि संकल्पकर्तृकाणीत्यर्थः । यद्वा संकल्प आत्मा व्यापको येषां तानि संकल्पव्याप्तानीति यावत् । संकल्पे प्रतिष्ठितानि, असति संकल्पे एषां न सत्ता । अतः संकल्पाधीनसत्ताकानीति यावत् ।

समक्लृपतां द्यावापृथिवी समकल्पेतां वायु-
श्चाऽऽकाशं च समकल्पन्ताऽऽपश्च तेजश्च ।

द्यौश्च पृथिवी च निश्चलतया वर्तावहे इति संकल्पं कृतवत्यावित्यर्थः । तथा वाय्वाकाशादयोऽपि स्वेन रूपेण वर्तामह इति स्वस्वकार्यं च करवामहा इति संकल्पं कृतवन्त इत्यर्थः । तथासंकल्पाभावे तथाप्रवृत्त्यसंभवादिति भावः ।

तेषाᳪ संक्लृप्त्यै वर्षᳪ संकल्पते ।

अप्तेजोधीनत्वाद्वर्षणस्याऽऽपस्तेजांसि च सम्यक्कल्पन्तां स्वस्वकार्यसमर्थानि भवन्त्वित्येवं तत्सिद्ध्यै वर्षं संकल्पते ।

वर्षस्य संक्लृप्त्या अन्नꣳ संकल्पते ।

अन्नस्य वर्षाधीनत्वादन्नं वर्षसिद्ध्यै संकल्पते ।

अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते ।

अन्नसमृद्धिं प्राणाः संकल्पन्त इत्यर्थः ।

प्राणानाꣳ संक्लृप्त्यै मन्त्राः संकल्पन्ते ।

मन्त्रोच्चारणस्य प्राणायत्तत्वान्मन्त्रास्तत्सिद्धिमाशंसन्ते ।

मन्त्राणाꣳ संक्लृप्त्यै कर्माणि संकल्पन्ते ।

अग्निहोत्रादीनां कर्मणां मन्त्रजन्यस्मृत्यधीनानुष्ठानत्वादिति भावः ।

कर्मणाꣳ संक्लृप्त्यै लोकः संकल्पते ।

स्वर्गादिलोकस्य कर्माधीनसिद्धिकत्वादिति भावः ।

लोकस्य संक्लृप्त्यै सर्वꣳ संकल्पते ।

सर्वस्यापि भूतजातस्य लोकाधीनत्वादिति भावः । अत्राचेतनेषु संकल्पकथनं स्तुत्यर्थतया चेतनत्वारोपेण वा तदभिमानिदेवतापरतया वोपपन्नमिति द्रष्टव्यम् ।

स एष संकल्पः ।

एतादृशमहिमशाली संकल्प इत्यर्थः ।

संकल्पमुपास्स्वेति ॥ २ ॥

स यः संकल्पं ब्रह्मेत्युपास्ते ।

स्पष्टोऽर्थः ।

संक्लृप्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्र-
तिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति ।

संक्लृप्तान्संकल्पसिद्धान्ध्रुवान्नित्यान्भोगोपकरणैः प्रतिष्ठितानव्यथमानाञ्छत्रुपीडादिरहितानेतादृशाँल्लोकान्स्वयमपि ध्रुवत्वप्रतिष्ठितत्वाव्यथमानत्वयुक्तः सन्नभिसिध्यति प्राप्नोतीत्यर्थः ।

यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः संकल्पाद्भूय इति संकल्पाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ३ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
चतुर्थः खण्डः ॥ ४ ॥

---

स्पष्टोऽर्थः ॥ २ ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
चतुर्थः खण्डः ॥ ४ ॥

---

चित्तं वाव संकल्पाद्भूयो यदा वै
चेतयतेऽथ संकल्पयतेऽथ मनस्यति ।

"अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यत" इति 'हस्तादयस्तु स्थितेऽतो नैवम्' [ब्र०सू० २ । ४ । ६] इति सूत्रे भाषितत्वात् । प्राप्तकालानुरूपातीतानागतविषयप्रयोजनचिन्तानुरूपप्रवृत्तिविशिष्टं मनश्चित्तमित्युच्यते चेतयतिधात्वर्थोऽपि स एव । शिष्टं स्पष्टम् ।

अथ वाचमीरयति तामु नाम्नीरयति नाम्नि
मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥

तानि ह वा एतानि चित्तैकाय-
नानि चित्तात्मानि चित्ते प्रतिष्ठितानि ।

उक्तोऽर्थः ।

तस्माद्यद्यपि बहुविदचित्तो भवति
नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा
अयं विद्वान्नेत्थमचित्तः स्यादिति ।

बहुशास्त्रज्ञोऽपि पुमान्विषयप्रयोजननिरूपणलक्षणचित्तहीनो यदा

मवेदित्यर्थः। तदा लौकिका अयं नास्ति अयं वेदेति यत्तदपि नास्तीत्येवं ज्ञातारं तदीयं शास्त्रज्ञानं चापलपन्ति। तत्र युक्तिं च वदन्ति। यत्, यद्ययं पुमान्विद्वान्स्यादित्थमचित्तो न स्यात्तस्मादेतस्य शास्त्रज्ञानमेव नास्तीत्याहुः।

अथ यद्यल्पविच्चित्तवान्भवति तस्मा एवोत शुश्रूषन्ते।

यद्यल्पशास्त्रविदपि चित्तवान्भवति तस्मै

शुश्रूषन्ते तद्वाक्यं श्रोतुमिच्छन्तीत्यर्थः।

चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा
चित्तं प्रतिष्ठा चित्तमुपास्स्वेति॥ २॥

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति॥ ३॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
पञ्चमः खण्डः॥ ५॥

---

चित्तानुपचितानित्यर्थः। इतरत्पूर्ववत्॥ १॥ २॥ ३॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
पञ्चमः खण्डः॥ ५॥

---

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवाऽऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्याः।

"ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनमिति 'ध्यानाच्च' [ब्र० सू० ४।१।८] इति सूत्रे भाषितम्। यथा योगी ध्यायन्निश्चलो

भवत्येवं पृथिव्यादयोऽपि ध्यानलक्षणस्वमाहात्म्यप्रख्यापनायेव निश्चलाः सन्तो ध्यानमभिनयन्ति । अतो ध्यानं माहात्म्यहेतुरित्यर्थः । सूत्रितं च 'अचलत्वं चापेक्ष्य' [ब्र० सू० ४।१।९] इति । तत्र हि तिष्ठन्नासीनः शयानो वा ध्यानमनुतिष्ठेद्विशेषाभावादिति प्राप्तेऽभिधीयते—'आसीनः संभवात्' [ब्र० सू० ४।१।७] । आसीन उपासनमनुतिष्ठेत् । कुतः । संभवात् । आसीनस्यैव ह्येकाग्रचित्तता संभवति स्थितिगत्योः प्रयत्नसापेक्षत्वाच्छयने च निद्रासंभवात् । 'ध्यानाच्च' [ब्र० सू० ४।१।८] । विजातीयप्रत्ययान्तराव्यवहितचिन्तालक्षणध्यानलक्षणत्वादुपासनस्य तत्र च चित्तैकाग्र्यावश्यंभावेन तत्सिद्ध्य आसीनत्वस्यापेक्षितत्वात् । 'अचलत्वं चापेक्ष्य' [ब्र० सू० ४।१।९] निश्चलत्वरूपं सादृश्यमपेक्ष्य । 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षमित्यादौ ध्यायतिशब्दप्रयोगदर्शनात्, ध्यातुर्निश्चलत्वस्यापेक्षितत्वादासीनस्यैव च निश्चलत्वसंभवादासीनस्यैवोपासनमित्यर्थः । 'स्मरन्ति च' [ब्र० सू० ४।१।१०]

उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये [। गी० ६।१२ ]

इति ध्यानाङ्गतयाऽऽसीनता स्मर्यते । अतो ध्याने चित्तैकाग्र्यस्यात्यावश्यकत्वात्तदर्थमासीनत्वमपेक्षितम् । 'यत्रैकाग्रता तत्राविशेषात्' [ ब्र०सू० ४।१।११ ] यत एव चित्तैकाग्र्यं प्रधानहेतुरत एव यस्मिन्देशे चित्तैकाग्र्यं भवति स एव देशोऽपेक्षितः। 'समे शुचौ शर्करावह्निवालुकाविवर्जिते' [ श्वे० २ । १० ] इत्यादिदेशविशेषनियमस्यापि चित्तैकाग्र्यसिद्ध्यर्थत्वाच्चित्तैकाग्र्यविरोधे सोऽपि नाऽऽदर्तव्य इत्यर्थ इति स्थितम् । प्रकृतमनुसरामः ।

तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति
ध्यानापादांशा इवैव ते भवन्त्यथ येऽल्पाः
कलहिनः पिशुना उपवादिनस्तेऽथ ये
प्रभवो ध्यानापादांशा इवैव ते भवन्ति ।

ध्यानमापन्ना ध्यानापादा ये मनुष्याणां मध्ये धनादिभिर्महान्तस्ते ध्यानापादानां ध्यातॄणामंशा इव सदृशा इव भवन्ति । यथा ध्यातारोऽवचना एवं महान्तोऽप्यवचनतया ध्यातृसादृश्यं प्रतिपद्यन्त इत्यर्थः । तन्न्यूनत्वे सति तत्सदृशत्वं तदंशत्वम् । महान्तोऽपि मनुष्या यतो ध्यातॄणामंशा अतो ध्यानं श्रेष्ठमित्यर्थः । अथ येत्वल्पाः क्षुद्रास्ते कलहशीलाः

परदोषोद्भावकाः परेषां समीपे तद्दोषवदनशीला वाचाटा भवन्ति न तु ध्यातृसादृश्यलेशमपि प्रतिपद्यन्त इत्यर्थः । अथ ये तु प्रभवो महान्तस्तेऽजल्पाकाः सन्तो ध्यातृसदृशा भवन्ति ।

ध्यानमुपास्स्वेति ॥ १ ॥ अतो ध्यानमुपास्स्वेत्यर्थः ॥

स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
षष्ठः खण्डः ॥ ६ ॥

---

सर्वं पूर्ववत् ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
षष्ठः खण्डः ॥ ६ ॥

---

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

प्रमाणजन्यज्ञानरूपस्य विज्ञानस्य स्मृतिसंततिलक्षणं ध्यानं प्रति हेतुत्वात्ततो भूयस्त्वं द्रष्टव्यम्। शिष्टं पूर्ववत् ॥ १ ॥

ज्ञानविज्ञानशब्दयोः सामान्यविशेषरूपत्वाद्विज्ञानवतो ज्ञानवतो लोकानित्युपपत्तिः। शिष्टं स्पष्टम् ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति।

एको हि बलवान्हस्ती विज्ञानवतां मनुष्याणां शतमप्याकम्पयते। किं च सति बले गुर्वादिषु दृष्टेष्वभ्युत्थानम्, परिचर्या, उपसदनम्, श्रवणमनननिदिध्यासनसाक्षात्काराः कर्मविषयकर्तृत्वम्, कृतविषयकज्ञानम्, एतत्सर्वं बले सत्येव भवति। अतो विज्ञानापेक्षया बलमेव भूय इत्यर्थः।

बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥

स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्याष्टमः खण्डः ॥ ८ ॥

---

स्पष्टोऽर्थः ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्याष्टमः खण्डः ॥ ८ ॥

---

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दश रात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्याऽऽये द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति।

बलसंपादकत्वादन्नमेव बलाद्भूयः। अत एव यदि कश्चित्पुमान्दश रात्रीर्नाश्नीयात्तर्हि बलहान्या म्रियत एव। अथवा यदि कथंचिज्जीवेत्तर्हि द्रष्टृत्वश्रोतृत्वादिरहित एव भवेत्। अद्रष्टाऽश्रोतेति च्छेदः। अन्नस्याऽऽये लाभे सति। अन्नस्याऽऽयै, इति पाठे छान्दस एकारस्यैकारः। अन्नस्याऽऽयीति पाठेऽप्यायो लाभः। अन्नस्याऽऽयी, अन्नं

लब्धवानित्यर्थः । अतश्चान्वयव्यतिरेकाभ्यामन्नस्यैव बलादिहेतुत्वदर्शनादिति भावः ।

अन्नमुपास्स्वेति ॥ १ ॥

सयोऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पानवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य नवमः खण्डः ॥ ९ ॥

---

पानवतः पेयप्रचुरानित्यर्थः ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य नवमः खण्डः ॥ ९ ॥

---

आपो वा अन्नाद्भूयस्यस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीति ॥

यस्मिन्काले शोभना वृष्टिर्न भवति तदाऽन्नमल्पं भविष्यतीति प्राणिनो दुःखिनो भवन्ति । यदा शोभना वृष्टिर्भवति तदाऽन्नं बहु भविष्यतीत्यानन्दिनो हृष्टा भवन्ति ।

आप एवेमा मूर्ताः ।

इमा वक्ष्यमाणा मूर्तभेदाकारपरिणता आप एवेत्यर्थः ।

येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयांसि च तृणवनस्प-

तयः श्वापदान्याकीटपतङ्गपिपीलकमाप
एवेमा मूर्ता अप उपास्स्वेति ॥ १ ॥

स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामाꣳ-
स्तृप्तिमान्भवति यावदपां गतं तत्रास्य यथाका-
मचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भग-
वोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति
तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

अपामुपासकस्य कामानामाप्तिर्युक्तैवेति भावः । शिष्टं स्पष्टम् ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

तेजो वा अद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याऽऽकाश-
मभितपति तदाऽऽहुर्निशोचति नितपति वर्षिष्यति
वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते
तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति
तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति
तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते ।

तेजसोऽप्कारणत्वात्तेज एवाद्भ्यो भूयः । तस्मादप्कारणत्वादेव हेतोरे-
तत्तेजो यदा वायुं स्वात्मनाऽऽनिश्चलीकृत्याऽऽकाशमभिव्याप्य तपति तदा
लौकिकास्तेजः कर्तृ जगन्निशोचति नितरां शोचति नितपति नितरां
तपति च तस्मादवश्यं वर्षिष्यतीत्याहुः । तेजसोऽप्कारणत्वादेव तत्तेजः
प्रथमतः स्वात्मानं दर्शयित्वा पश्चादपः सृजते । तस्मादेव तेजसोऽप्का-
रणत्वादेतत् एतस्मिन्नपि काल ऊर्ध्वंगताभिस्तिर्यग्गताभिश्च विद्युद्भिः

ह्रादः स्तनयित्नुशब्दाश्चरन्ति । तद्दर्शनादेव लौकिका विद्योतते स्तनयति वर्षिष्यति वेति वदन्तीत्यर्थः । अत एव कारणभूतं तत्तेजः स्वात्मानं प्रथमतो दर्शयित्वाऽथापः सृजते ।

तेज उपास्स्वेति ॥ १ ॥

अतः पूर्वोक्तानां भूयसीनामपामपि कारणं तेज उपास्स्वेत्यर्थः ॥

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै तेजस्वतो
लोकान्भास्वतोऽपहततमस्कानभिसिध्यति ।

तेजस्वित्वादेव लोकानां तत्कार्यं प्रकाशवत्त्वलक्षणं भास्वत्त्वं बाह्याभ्यन्तरान्धकारशून्यत्वरूपमपहततमस्कत्वं च तादृशो लोकान्स्वयमपि तेजस्वी सन्नाप्नोतीत्यर्थः ।

यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति
यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति
तेजसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्यैका-
दशः खण्डः ॥ ११ ॥

स्पष्टम् ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्यै-
कादशः खण्डः ॥ ११ ॥

---

आकाशो वाव तेजसो भूयानाकाशे
वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्य-
ग्निराकाशेनाऽऽह्वयत्याकाशेन शृणोत्या-
काशेन प्रतिशृणोत्याकाशे रमत आका-
शे न रमत आकाशे जायत आका-
शमभिजायत आकाशमुपास्स्वेति ॥ १ ॥

पूर्वखण्डोक्तयोस्तेजोवाय्वोर्ह्याकाशः कारणम् । अत आकाशस्य तजोवाय्वपेक्षया भूयस्त्वम् । अत एवाऽऽदित्यादिज्योतिर्मण्डलमाका-

शाश्रितम् । आकाशान्तर्वर्तीन्यार्ह्वानश्रवणप्रतिश्रवणान्यप्याकाशसाध्यानि। रममाणोऽपि जन आकाशे शोचन्नपि जन आकाशे जायमानोऽप्यङ्कुरादिराकाशलक्षणमवकाशमभिलक्ष्य प्रतीक्ष्यैव जायते। अत आकाशमुपास्स्वेत्यर्थः ॥ १ ॥

स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाशवतोऽसंबाधानुरुगायवतोऽभिसिध्यति।

आकाशवतो विस्तारयुक्तानत एवान्योन्यपीडालक्षणसंबाधशून्यान्प्रकाशवतस्तेजस्विन उरुगायवतः कीर्तिमतो लोकान्प्राप्नोतीत्यर्थः।

यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति।

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य द्वादशः खण्डः ॥ १२ ॥

---

स्पष्टम् ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य द्वादशः खण्डः ॥ १२ ॥

---

स्मरो वा आकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कंचन शृणुयुर्न मन्वीरन्न विजानीरन्यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन्स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्स्मरमुपास्स्वेति ॥ १ ॥

भूय इति लिङ्व्यत्ययश्छान्दसः

स्मरणशून्या एकत्र बहव आसीना अपि न श्रवणादिकार्यसमर्थाः। सति तु शक्त्यादिस्मरणे श्रवणादिकार्यसमर्था भवन्ति। अत आकाशकार्यस्य श्रवणादेः स्मरणाधीनत्वात्तस्याऽऽकाशाद्भूयस्त्वमिति भावः। किंच स्मरणशून्यस्य न पुत्रपश्वादिज्ञानमित्यतः स्मरणमुपास्स्वेत्यर्थः ॥ १ ॥

स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथा-
कामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्-
भूय इति स्मराद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति॥२॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

एवं पूर्ववत् ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

---

आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रा-
नधीते कर्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत
इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥
स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे
कामाः समृध्यन्त्यमोघा हास्याऽऽशिषो भवन्ति ।

आशया फलेच्छयेद्धो दीपित उत्पादितः स्मर इष्टसाधनत्वादिविष-यकं स्मरणमध्ययनकर्मानुष्ठानादिहेतुर्भवतीत्यर्थः । किंच फलाशयत्त्वेव पुत्रपश्वादीहलोकपरलोकवाञ्छा । अत आशाया भूयस्त्वमित्यर्थः । उपासितयाऽऽशया सर्वे कामाः समृद्धा भवन्ति । आशाश्चास्य सर्वाः सफला भवन्तीत्यर्थः । शिष्टं स्पष्टम् ।

यावदाशाया गतं तत्रास्य यथाकामचारो भवति य
आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्या-
शाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति॥२॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
चतुर्दशः खण्डः ॥ १४ ॥

---

स्पष्टोऽर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
चतुर्दशः खण्डः ॥ १४ ॥

---

प्राणो वा आशाया भूयान् ।

अत्र प्राणशब्देन प्राणसहचरितो जीवो लक्ष्यते । तत्र च हेतुरुत्तरत्र वक्ष्यते—

यथा वा अरा नाभौ समर्पिता
एवमस्मिन्प्राणे सर्वं समर्पितम् ।

यथा रथचक्रस्यारा रथनाभ्याश्रिता एवं समस्तमचेतनं भूतजातमेतच्चेतनाश्रितमित्यर्थः । 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः' [कौ० ३।८] इति श्रुत्यन्तरात् ।

प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति ।

गन्ता देवदत्तादिरपि जीव एव, गमनकरणभूतोऽश्वादिरपि जीव एव, दाताऽपि जीव एव, देयो गवादिरपि जीव एव, संप्रदानभूतो ब्राह्मणादिरपि जीव एवेत्यर्थः ।

प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः
स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥

पित्रादिरपि जीव इति प्रसिद्ध एवेत्यर्थः ॥ १ ॥

ननु परिदृश्यमानमांसपिण्डविशेषा एव पित्रादिशब्दवाच्या न जीव इति मन्वानं प्रत्याह—

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं
वाऽऽचार्यं वा ब्राह्मणं वा किंचिद्भृशमिव प्रत्याह
धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा
वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वम-
स्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥

अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषंदहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाऽऽचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥

प्राणो ह्येवैतानि सर्वाणि भवति ।

सजीवेषु पित्रादिशरीरेषु धिक्त्वामित्येव किंचिद्भृशमधिक्षिपति पुरुषे पितृहेत्यादिशब्दान्प्रयुञ्जते । तेष्वेव शरीरेषूत्क्रान्तजीवेषु शूलेन समासं संपूर्वात्क्षेपार्थादस्यतेर्णमुलन्तोऽयं शब्दः। शूलेन सम्यक्प्रक्षिप्य व्यत्यस्य सम्यग्दहत्यपि पुरुषे पितृहेत्यादिशब्दा न प्रयुज्यन्त इत्यर्थः। अतः सजीवेषु पित्रादिषु हिंसितेषु पितृहेत्यादिशब्दप्रयोगान्निर्जीवेष्वप्रयोगाच्च निर्जीवस्य शरीरस्य पित्रादित्वाभावस्य सिद्धत्वाज्जीव एव पित्रादिर्भवतीत्यर्थः। भगवता भाष्यकृता—प्राणशब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव न वायुविशेषमात्रम्। प्राणो ह पिता प्राणो मातेत्यादयः प्राणस्य चेतनतामवगमयन्ति । पितृहा मातृहेत्यादिना सप्राणेषु पितृप्रभृतिषूपमर्दकारिणि हिंसकत्वादिनिमित्तोपक्रोशवचनात्तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्युपक्रोशाभावाच्च हिंसायोग्यश्चेतन एव प्राणशब्दनिर्दिष्टः। अप्राणेषु स्थावरेष्वपि चेतनेषूपमर्दभावाभावयोर्हिंसातदभावदर्शनाद्धिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते। अत एव चारनाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टः पर इति न भ्रमितव्यम्। परस्य हिंसाप्रसङ्गाभावात्, जीवादितरस्य भोग्यभोगोपकरणस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तस्थितित्वेन प्रत्यगात्मन्येवारनाभिदृष्टान्तोपपत्तेश्चेति भाषितम्। यद्यपि 'नायं हन्ति न हन्यते' [गी० २।१९] इति निर्दिष्टस्य जीवस्य स्वतो हिंसायोग्यत्वाभावेऽपि देहादिसाहित्यप्रयुक्तहिंस्यत्ववन्मुख्यप्राणस्यापि हिंस्यत्वं सुवचम्, स्थावरहिंसास्थलेऽपि 'भेदश्रुतेः वैलक्षण्याच्च' [ब्र० सू० २।४।१८] इति सूत्रभाष्योक्तरीत्या स्थावरेषु प्राणस्य पञ्चधाऽवस्थाय शरीरधारणाभावेऽपि, प्राणसद्भावोऽस्तीति, "न तु दृष्टान्तभावा"दिति सूत्रे भाषितत्वेन प्राणस्य सद्भावाद्धिंसादिवचनमुपपद्यत एव, तथाऽपि प्राणो ह पितेत्यादिवाक्यनिर्दिष्टानां जीववाचितया लोके प्रसिद्धानां बहूनां पित्रादिशब्दानां

गौणत्वकल्पनापेक्षयैकस्य प्राणशब्दस्यैव जीवत्वमाश्रयणीयमिति भाष्यकाराभिप्रायः। अत एव वृत्तिकृता भगवता बौधायनेनापि 'भूमा संप्रसादादध्युपदेशात्' [ब्र० सू० १।३।८] इति सूत्रव्याख्याने प्रत्यगात्मन ऊर्ध्वमुपदेशादित्येवोक्तं न तु मुख्यप्राणादूर्ध्वमिति। वेदनाजनकव्यापारलक्षणहिंसाया वेदनाशून्येऽचेतनेऽसंभवाच्च।

स वा एष एवं पश्यन्नेवं मन्वान
एवं विजानन्नतिवादी भवति।

पूर्ववाक्ये प्राणशब्दनिर्दिष्टः स वा एष जीवः स्वात्मानमुक्तेन प्रकारेण मन्वानो मननविषयीकुर्वन्ननेन प्रकारेण विजानन्नुपासीनश्च संस्तेन प्रकारेण पश्यन्साक्षात्कुर्वन्नतिवादी भवति। अतिक्रान्तस्योपास्यवस्तुवादी भवति। स्वोपास्यवस्तुनः सर्वोत्कृष्टत्ववादी भवतीत्यर्थः। बृहस्पतिसमप्रत्यर्थिजनाप्रतिभाधायकस्वोपास्यदेवतापारम्यवादशीलत्वमतिवादित्वम्। तच्चोपास्यदेवतातिशये पर्यवस्यति। एवं पश्यन्नेवं मन्वान इत्यादौ 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे शतृप्रत्ययः। ततश्च स्वोपास्यदेवतासाक्षात्कारोऽतिवादित्वे हेतुरित्यर्थः। साक्षात्कारप्रीतस्वोपास्यदेवतानुग्रहादीदृशमतिवादित्वं भवतीति भावः। अत्र स वा एष एवं पश्यन्नेवं मन्वान इति वाक्येन पूर्वसंदर्भनिर्दिष्टस्य प्राणस्य द्रष्टृत्वमन्तृत्वादिकथनादपि प्राणशब्दनिर्दिष्टो जीव इत्यवसीयते। प्राणशब्दनिर्दिष्टस्य जीवत्वज्ञापनायैव हि स वा एष इति पदयोः प्रवृत्तिरिति द्रष्टव्यम्।

तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्य-
स्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

प्राणशब्दितस्य जीवस्य पूर्वोक्तनामाद्याशान्तसर्वातिशायित्वादेवातिवादित्वं नापह्नोतव्यमिति भावः ॥ २ ॥ ३ ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

अत्र पूर्वपर्यायेष्वनुक्तस्यातिवादित्वस्य कथनात्प्रक्रान्त आत्मोपदेशः प्राणशब्दिते प्रत्यगात्मनि पर्यवसन्न इति प्राणाद्भाव भूयोऽस्तीति पुनरपृच्छत्येव नारदे सनत्कुमारः स्वयमेव ततोऽप्यातिशयितं परमात्मानमुपक्षिपति—

एष तु वा अतिवदति यः सत्येनातिवदति ।

तुशब्दो विशेषप्रदर्शकः । 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' [ छा० ८ । ३ । ४ ] इति दहरविद्यायां वक्ष्यमाणत्वात् 'सत्यं ज्ञानमनन्तं ब्रह्म' [तै० २ । १ । १] इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः सत्यशब्दो ब्रह्मपरः । तस्य सततैकरूपत्वेन निर्विकारत्वात्सत्यत्वम् । तेन ब्रह्मणा निमित्तेन योऽतिवदत्येषोऽतिवादी पूर्वस्मात्प्राणातिवादिनो विशिष्ट इत्यर्थः । अत्र भाष्यकृता "सत्येनेतीत्थंभूतलक्षणे तृतीया । सत्येन परेण ब्रह्मणोपास्येनोपलक्षितो योऽतिवदतीत्यर्थ" इतीत्थंभूतलक्षणे तृतीया कण्ठतः प्रतिपादिता । "अतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयं च परं ब्रह्म प्रतीयत" इति भाष्यवाक्यान्निमित्तत्वार्थकत्वमपि तृतीयायाः सूचितम् । ततश्च निमित्तस्य करणत्वविवक्षया कारकविभक्तित्वमपि भाष्यकृदभिमतमेवेति द्रष्टव्यम् । अत्र सत्यातिवादिनः प्राणातिवाद्यपेक्षयाऽतिशयकथनात्सत्यशब्दनिर्दिष्टस्य परस्य ब्रह्मणः प्राणशब्दनिर्दिष्टजीवापेक्षया भूयस्त्वमुक्तं भवति । न च पूर्वप्रस्तुतप्राणातिवादिन एव 'एष तु वा अग्निहोत्री यः सत्यं वदति' इत्यादाविव सत्यवदनमङ्गतया विधीयतामिति वाच्यम् । एष तु वा अग्निहोत्रीति वाक्ये द्रव्यदेवतान्तराभावेनाग्निहोत्रान्तराप्रतीतेस्तुशब्दस्वारस्यभङ्गः । इह तु प्रकृतातिवादनिमित्तप्राणव्यतिरिक्तस्य सत्यशब्दितस्य ब्रह्मणो निमित्तान्तरस्य प्रतीतेर्न तत्स्वारस्यभङ्गो युक्तः । किंच सत्यवदनस्याङ्गतया विधाने सत्यं वदतीतिनिर्देशस्य युक्ततया सत्येनेति तृतीयाया अतीत्युपसर्गस्य चायोगादिति द्रष्टव्यम् ।

सोऽहं भगवः सत्येनातिवदानीति ।

ब्रह्मणाऽतिवदानीति शिष्यः प्रार्थयामासेत्यर्थः । इतर आह—

सत्यं त्वेव विजिज्ञासितव्यमिति ।

यदि सत्यशब्दितब्रह्मनिमित्तकातिवादितामभिलषसि तर्हि ब्रह्मो-

पास्यमित्यर्थः । ब्रह्मोपासनमतिवादित्वहेतुरिति यावत् । शिष्यस्तदभ्युपगच्छति—

सत्यं भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य षोडशः खण्डः ॥ १६ ॥

---

विजिज्ञास उपासनं करोमीत्यर्थः ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य षोडशः खण्डः ॥ १६ ॥

---

ब्रह्मोपासनस्यातिवादित्वहेतुत्वं ब्रह्मसाक्षात्कारद्वारेत्याह—

यदा वै विजानात्यथ सत्यं वदति ।

अत्र विजानातिशब्दः साक्षात्कारपरः । यदा वै साक्षात्करोति तदा सत्यं वदति सत्येनातिवदतीत्यर्थः । पूर्वत्र सत्येनातिवदानीतिनिर्दिष्टत्वात्सत्यशब्दितस्य ब्रह्मणोऽतिवदनं प्रति निमित्तत्वेन करणत्वविवक्षया तृतीयाया वदनं प्रति कर्मतया द्वितीयाया अप्युपपत्तेः । 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति साक्षात्कारमननोपासनानामतिवादित्वनिमित्ततया पूर्वत्रोक्तत्वात् । 'सत्यं त्वेव विजिज्ञासितव्यमिति' इत्युपासनस्योक्तत्वात् । 'मतिस्त्वेव विजिज्ञासितव्येति' [ छा० ७ । १८ । १ ] इति मननस्य वक्ष्यमाणत्वात् । अत्र विजानातीत्यनेन साक्षात्कार एवोच्यते । उक्तं च व्यासार्यैः— "विजानातिशब्दः साक्षात्कारपरो न तु शास्त्रजन्यज्ञानपरः । 'यदा वै मनुतेऽथ विजानाति' [ छा० ७ । १८ । १ ] इति विजानात्यर्थस्य मननसाध्यत्वावगमात् । सत्यं वदति सत्यमतिवदतीत्यर्थ" इति ।

नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति ।

साक्षात्काराभावे नातिवादित्वम् । अतः साक्षात्काररूपं विज्ञानं विजिज्ञासितव्यं संपाद्यमित्यर्थः । पाकं पचतीतिवद्विज्ञानं विजिज्ञा-

सितव्यमिति निर्देशः। उत्तरस्यापि विजिज्ञासितव्यपदस्य संपाद्यत्वमेवार्थः। उक्तं च व्यासार्यैः—"सत्यव्यतिरिक्तविषयाणि विजिज्ञासितव्यपदानि संपाद्यवाचीनीति"। शिष्यस्तदभ्युपगच्छति—

विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
सप्तदशः खण्डः ॥ १७ ॥

---

हे भगवन्नतिवादित्वनिमित्तं साक्षात्कारं संपादयामीत्यर्थः। पूर्वखण्डे 'सत्यं त्वेव विजिज्ञासितव्यमिति' इति ब्रह्मोपासनस्यातिवादित्वहेतुत्वकथनादत्र च वाक्ये साक्षात्कारस्यातिवदनहेतुत्वकथनाद्ब्रह्मोपासनतत्साक्षात्कारयोर्द्वारद्वारिभावापन्नयोरेवातिवादहेतुत्वं सिध्यति। एतत्सर्वमभिप्रेत्य भगवता भाष्यकृता—"ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये परब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनं सत्यं त्वेव विजिज्ञासितव्यमित्युपदिश्यते" इति भाषितम्। केचित्तु—सत्यं त्वेव विजिज्ञासितव्यमिति विहितं साक्षात्कारहेतुभूतं विज्ञानमेव यदा वै विजानात्यथ सत्यं वदतीति खण्डेनापि निर्दिश्यते न तु साक्षात्कारः, एवं च सति "सत्यं त्वेव विजिज्ञासितव्यमिति ब्रह्मोपासनमुपदिश्य तदुपायभूतं ब्रह्ममननं मतिस्त्वेव विजिज्ञासितव्येत्युपदिश्यते" इति भाष्यमपि स्वरसमिति वदन्ति ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
सप्तदशः खण्डः ॥ १७ ॥

---

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्याष्टादशः खण्डः ॥ १८ ॥

---

ब्रह्मोपासनोपायभूतं मननं संपाद्यमित्यर्थः ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्याष्टादशः खण्डः ॥ १८ ॥

---

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्यैकोनविंशतितमः खण्डः ॥ १९ ॥

---

अत्र च भाष्यकृता—"श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमप्यर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धां श्रद्धा त्वेव विजिज्ञासितव्येत्युपदिश्येति" भाषितम् । तत्र श्रवणोपायभूतां ब्रह्मणि श्रद्धामित्यनेन ब्रह्मश्रवणविषयिणी श्रद्धा विवक्षिता । श्रद्धा च त्वरेति व्यासार्यैर्व्याख्यातम् । शिष्टं स्पष्टम् ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्यैकोनविंशतितमः खण्डः ॥ १९ ॥

---

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठच्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य विंशतितमः खण्डः ॥ २० ॥

---

ब्रह्मैव श्रोतव्यं नान्यदिति व्यवसायरूपा निष्ठा श्रोतुस्त्वरालक्षणश्रद्धोपायतया संपाद्येत्यर्थः शिष्टं पूर्ववत् ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य विंशतितमः खण्डः ॥ २० ॥

---

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्यैकविंशः खण्डः ॥ २१ ॥

---

उद्योगप्रयत्नापरपर्याया श्रोतव्यान्तरेषु हेयत्वानुसंधानेन मनसो नियमनरूपा कृतिर्ब्रह्मैव श्रोतव्यमितिव्यवसायलक्षणनिष्ठाहेतुत्वात्संपाद्येत्यर्थः ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्यैकविंशः खण्डः ॥ २१ ॥

---

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य द्वाविंशः खण्डः ॥ २२ ॥

---

उक्तलक्षणायाः कृतेर्ब्रह्मणि निरतिशयानुकूलत्वावगममन्तरेणासंभवाच्छ्रोतव्यान्तरेषु हेयत्वानुसंधानाहितमनोनियमनरूपकृतिहेतुतयाऽत्यन्तानुकूलत्वलक्षणं सुखत्वं ब्रह्मणि ज्ञातव्यमित्यर्थः । अत्र च श्रवणमननश्रद्धादेः प्रागेव सुखप्राप्त्यसंभवात्प्राप्त्यर्थस्यापि लभतेर्ज्ञानमेवार्थः । ज्ञानस्यापि प्राप्तिरूपत्वात् । श्रोतव्येऽत्यन्तानुकूलज्ञानाभावे श्रोतव्यान्तरेषु हेयत्वानुसंधानाहितमनोनियमनरूपकृतेरसंभवात् * अत्यन्तानुकूलत्वं श्रोतव्ये ब्रह्मणि ज्ञातव्यमिति भावः । अत्रत्यविजिज्ञासितव्यशब्दस्य ज्ञातव्यत्वमर्थः । नोपासितव्यत्वं संपादनीयत्वं वा ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य द्वाविंशः खण्डः ॥ २२ ॥

---

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति
भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य
इति भूमानं भगवो विजिज्ञास इति॥१॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
त्रयोविंशः खण्डः ॥ २३ ॥

---

भूमशब्दो हि बहुत्ववाची। बहुशब्दात्पृथ्वादित्वादिमनिचि 'बहोर्लोपो भू च बहोः' इति प्रकृतिप्रत्यययोर्विकारे च सति तन्निष्पत्तेः। बहुत्वं चात्र वैपुल्यं न संख्याविशेषः। बहुशब्दस्य 'बहुषु बहुवचनम्' इत्यादौ संख्याया-मिव 'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः' इत्यादावल्पत्वप्रतियो-गिनि वैपुल्येऽपि प्रयोगदर्शनादिहापि नाल्पे सुखमस्तीत्यल्पत्वप्रतिद्वंद्वि-तयैव भूमशब्दप्रयोगाच्च वैपुल्यमेवार्थः। वैपुल्यं च गुणोत्कर्षरूपं न तु परिमाणरूपं सुखशब्दसामानाधिकरण्यात्। न हि सुखे उत्कर्षवत्परि-माणं प्रसिद्धमस्ति। अत उत्कर्षकृतवैपुल्यमेवेह भूमशब्देन विव-क्षितम्। अत एव न वैपुल्यरूपधर्मपरो भूमशब्दः। सुखस्य वैपुल्यरूप-त्वाभावात्। अल्पत्वप्रतियोगितया निर्देशाच्च। न ह्यत्र वोत्तरत्र वाऽल्पत्वं भूमप्रतियोगितया निर्दिश्यतेऽपि त्वल्पमेव। अतोऽल्पशब्दप्रतियोगितया प्रयुज्यमानो भूमशब्दो वैपुल्याश्रयधर्मिपर एव। ततश्चायमर्थः—यदुत्कृष्टं विपुलं तदेव सुखम्। अत्यन्तानुकूलमित्यर्थः। नाल्पे सुखमस्ति। सुखं सुखत्वम्। अत्यन्तानुकूलत्वमित्यर्थः। 'अपशवो वाऽन्ये गोश्वेभ्यः' इत्यत्र गवाश्वव्यतिरिक्तेऽजादौ पशुत्वनिषेधस्य प्रशस्तपशुत्वनिषेधपरत्व-वदल्पे प्रत्यगात्मसुखे सुखत्वनिषेधस्य प्रशस्तसुखत्वनिषेधपरत्वात्, पूर्व-खण्ड एव सुखशब्दस्यात्यन्तानुकूलार्थतया व्याख्यातत्वात्, ततश्च भूम-भिन्नस्य सुखत्वाभावात्, सुखत्वादेव हेतोर्भूमत्वमप्यस्तीति ज्ञातव्य-मित्यर्थः। एतत्सर्वं भाष्येऽपि स्पष्टम्॥१॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
त्रयोविंशः खण्डः॥२३॥

---

एतद्वाक्यप्रस्तुतयोर्भूमाल्पशब्दयोरर्थं जिज्ञासमानं प्रत्याह—

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् ।

यत्रेत्यनुभूयमान इत्यध्याहारः । यत्र वस्तुन्यनुभूयमाने ततोऽन्यन्न दृश्यते न श्रूयते न विज्ञायते च स भूमेत्यर्थः । यस्मिन्दृश्यमाने ततोऽन्यन्न दृश्यते यस्मिञ्श्रूयमाणे ततोऽन्यन्न श्रूयते यस्मिन्विज्ञायमाने ततोऽन्यन्न विज्ञायते स भूमेत्यर्थः । यद्वा सप्तम्या विषयत्वमर्थः । पश्यन्नित्यध्याहारः । ततोऽन्यन्न पश्यतीत्यर्थः । अत्र तदितरस्य दर्शनाद्यभावो विषयाभावकृतः । ततश्च यतोऽन्यन्नास्ति स भूमेति पर्यवसितोऽर्थः । ननु चेतनाचेतनवर्गस्य तद्भिन्नत्वात्कथं भूम्नोऽन्यन्नास्तीत्युच्यते । न च चिदचिद्विशिष्टस्यैव भूमब्रह्मशब्दार्थत्वाच्चिदचितोरपि तत्रान्तर्भावात्तदन्यन्नेति निषेधः शक्यते कर्तुमिति वाच्यम् । विशेषणभूतयोश्चिदचितोर्भूमब्रह्मशब्दार्थभूताद्विशिष्टादन्यत्वेन ततोऽन्यन्नास्तीति निषेधस्यायुक्तत्वात् । अत एव जगदैश्वर्यविशिष्टमनुभवंस्तदतिरिक्तं वस्तु न पश्यतीत्यपि न युक्तम् । ऐश्वर्यविशिष्टादीशितव्यस्य भिन्नत्वात् । सार्वज्ञ्यविशिष्टतयाऽवशिष्टमनुभवंस्तदतिरिक्तं न पश्यतीत्यपि न युक्तम् । सुशकतया विशिष्टस्यापि भूमत्वप्रसङ्गः । किंच 'अथात आदेशः' [छा० ७।२५।१] इति भूम्न एवाऽऽत्मत्वस्योपदेक्ष्यमाणत्वात, 'तरति शोकमात्मवित्' [छा० ७।१।३] इति प्रस्तुतस्याऽऽत्मोपदेशस्य भूम्निपर्यवसानाच्च भूम्न आत्मत्वमवर्जनीयम् । न हि चिदचिद्विशिष्टस्याऽऽत्मत्वमस्ति विशेष्यस्यैवान्तः प्रविश्य नियन्तृत्वेनाऽऽत्मत्वात् । अतश्च तस्यैव भूमत्वं वक्तव्यम् । न चेदं लक्षणं संभवति तद्व्यतिरिक्तस्य वस्तुनः सत्त्वादिति चेदुच्यते । ब्रह्मशब्दवद्भूमशब्दस्यापि वस्तुपरिच्छेदशून्यत्वमेवार्थः । वस्तुपरिच्छेदो नामेदमिदं नेति निर्देशार्हत्वम् । तद्राहित्यं स्वरूपाभेदाद्वा भवेत्तदपृथक्सिद्धत्वाद्वा भवेत् । तत्र जीवजडयोरीश्वराभेदाभावात्तदपृथक्सिद्धसत्ताकत्वमिति फलति । तच्च द्वेधा घटते तत्सत्ताव्यतिरिक्तसत्ताशून्यत्वाद्वा ।

यदधीना यस्य सत्ता तत्तदित्येव भण्यते ।

इति स्मृत्यनुसारेण तदधीनसत्ताकत्वाद्वा भवेत् । तत्र तत्सत्ताव्यतिरिक्तसत्ताशून्यत्वमपि सत्तारूपविशेष्याभावेन मिथ्यात्वाद्वा भवेत् । तत्सत्ताभिन्नसत्ताकत्वेन सत्ताव्यतिरिक्तत्वरूपविशेषणाभावाद्वा भवेत्। तत्र सत्ताशून्यत्वं सकलप्रमाणविरुद्धं नाभ्युपगमार्हम् । तथैव तत्सत्ताभिन्नसत्ताकत्वमपि नाभ्युपगमार्हम् । अपि तु तत्सत्ताधीनसत्ताकत्वमेव। एवंविधस्यापृथक्सिद्धत्वस्य सिद्धान्तेऽभ्युपगतत्वान्नानुपपत्तिः । 'अंशो नानाव्यपदेशात्' [ ब्र० सू० २ । ३ । ४३ ] इत्यत्रापृथक्सिद्धत्वलक्षणांशस्याभेदव्यपदेशनिर्वाहकत्वोक्तेः स्वनिष्ठत्वलक्षणभरणमिह सत्ताशब्दार्थः । उक्तं च हरिणा—

'आत्मभरमात्मना बिभ्रदस्तीति व्यपदिश्यते ।'

इति चेतनाचेतनयोरात्मभरणलक्षणसत्ता परमात्मसत्ताधीनेत्यर्थः । ततश्च यत्र नान्यदित्यस्यापि यत्सत्तानधीनसत्ताकं नास्ति यदनात्मकं नास्तीत्यर्थपर्यवसानान्नानुपपत्तिः । यद्वा 'समाने पूर्ववत्त्वात्' [ जै० ७ । १ । २ । १३ ] इति साप्तमिकाधिकरण इतरादिसर्वनामशब्दानां पूर्वनिर्दिष्टसदृशवाचित्वस्य व्यवस्थापिततया नान्यतोऽस्ति द्रष्टेत्यादिवाक्येष्विव यत्र नान्यत्पश्यतीति वाक्येऽपि समानान्यनिषेधपरत्वाश्रयणान्नानुपपत्तिः । उक्तलक्षणकभूमविपरीतलक्षणमल्पमित्यर्थः ।

यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम् ।

उक्तलक्षणो भूमैवामृतम् । जननमरणादिशून्यं, 'नित्याविर्भूतानन्याधीनापहतपाप्मत्वादिगुणाष्टकमिति यावत् । इतरत्त्वनीदृशम् । नित्यमुक्तादीनामप्यनन्याधीनतादृक्त्वाभावान्न वाक्यार्थानुपपत्तिरिति द्रष्टव्यम् । सर्ववस्तूनामाधारसापेक्षत्वं दृष्ट्वा शिष्यः पृच्छति—

स भगवः कस्मिन्प्रतिष्ठित इति ।

उत्तरमाह—

स्वे महिम्नि ।

स: स्वीय

इति । स्वस्वरूपस्महिमाधारकः । 'स्वयं दासास्तपस्विनः' इतिवदनाधार इत्यभिप्रायः । उक्ताभिप्रायेणाऽऽचार्यः स्वयमुक्त्वा स्वशब्दस्याऽऽत्मात्मीयवचनत्वादात्मीये नियाम्यतया महिमभूते गवाश्वहस्ति-

हिरण्यदासभार्यादिलक्षणे प्रतिष्ठित इत्यभिप्रायं शिष्यो गृह्णीयात् । अथ वा स्वशब्दस्य स्वात्मपरतयाऽऽत्माधार इत्यभिप्राय इति वा वाक्याभिप्रायं बुध्येत । न च तदुभयमपि संभवति । परमात्मन उभयविभूतिलक्षणात्मीयमहिमसद्भावेऽप्यनाधारस्य परमात्मनस्तत्प्रतिष्ठितत्वासंभवात् । न ह्यतिशिक्षितोऽपि नटवटुः स्वस्कन्धमारुह्य नरीनर्तीति न्यायेन स्वस्य स्वाश्रितत्वासंभवाच्च । अतो न द्वयमपि युज्यते । अतः शिष्यस्य सा बुद्धिर्निर्वर्तनीयेति मत्वा पुनराह—

यदि वा न महिम्नीति ॥ १ ॥

यदि वा स्वविवक्षितानाधारत्वाभिप्रायातिरिक्ते पूर्वोक्तपक्षद्वये त्वयाऽऽशङ्किते न स्वे महिम्नि प्रतिष्ठित इति ब्रूम इत्यर्थः ॥ १ ॥

तद्विवृणोति—

गोअश्वमिह महिमेत्याक्षते हस्तिहि-
रण्यं दासभार्यं क्षेत्राण्यायतनानीति ।

गोअश्वमित्यादौ द्वंद्वैकवद्भावः । आयतनानीतीतिशब्दः प्रकारवचनः । एवंजातीयकानीत्यर्थः ।

नाहमेवं ब्रवीमि ब्रवीमीति होवाच ।

तत्र प्रतिष्ठितत्वं न ब्रवीमीत्यर्थः । उक्तं च व्यासार्यैः 'अस्य महिमानमिति वीतशोकः ' [ मु० ३ । १ । २ ] एतां विभूतिं योगं चेत्यादिश्रुतिस्मृतिषु परमात्मनो महिमवत्त्वावगमात् । यदि वा न महिम्नीति न महिमनिषेधः । अपि तु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेधोऽवगम्यत" इति । अथ स्वरूपमहिमप्रतिष्ठितत्वं निषेधति—

अन्यो ह्यन्यस्मिन्प्रतिष्ठित इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
चतुर्विंशः खण्डः ॥ २४ ॥

---

न स्वस्य स्वप्रतिष्ठितत्वं संभवतीति भावः ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
चतुर्विंशः खण्डः ॥ २४ ॥

---

ननु यत्र नान्यत्पश्यतीत्यनुपपन्नं नानादिग्वर्तिनां चेतनाचेतनपदार्थानां भिन्नानामुपलम्भादित्यत्राऽऽह—

स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स
दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमिति।

अत्र स एवेदं सर्वमिति सामानाधिकरण्यात्स इति निर्दिष्टस्य भूम्न इदं सर्वमिति निर्दिष्टस्य चिदचिद्वर्गस्य च शरीरात्मभावः फलितो भवति। शरीरात्मभावश्च व्याप्तिनिबन्धन इति स एवाधस्तादितिश्रुत्यभिप्रायः। ततश्च यत्र नान्यत्पश्यतीति तदनात्मकान्यनिषेधे नानुपपत्तिरिति भावः। एवं सर्वात्मभूतस्य भूम्न उपासने स्वशरीरकतयोपासनं कर्तव्यमित्युपदिशति—

अथातोऽहंकारादेशः।

क्रियत इति शेषः। अथशब्दः प्रकृतविषयद्योतनार्थः। अहंकारोऽहंबुद्धिः। अहंग्रहेण भूम्न उपासनप्रकारः अतः परमुपदिश्यत इत्यर्थः। न तु जीवस्वरूपोपदेश इति मन्तव्यम्। तथा सत्यहमादेश इति निर्देशस्यैव युक्ततया कारपदवैयर्थ्यात्। परमात्मनोऽहंग्रहेणोपासनप्रकारमेव दर्शयति—

अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं
दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति ॥ १ ॥

सर्वदिग्वर्तिसर्वात्मा भूमाऽहमेवेति ज्ञातव्यमित्यर्थः। न तु जीवस्य सर्वात्मकत्वमुपदिश्यत इति भ्रमितव्यम्। जीवस्यातथात्वात्, तथात्वे कारशब्दवैयर्थ्यस्योक्तत्वाच्च। उक्तं च भगवता भाष्यकृता—"यत्तु अहमेवाधस्तादित्यादिना सर्वात्मकत्वमुपदिष्टं तद्भूमविशिष्टस्य ब्रह्मणोऽहंग्रहेणोपासनमुपदिश्यते। अथातोऽहंकारादेश इत्यहंग्रहेणोपदेशोपक्रमादिति,[1] "परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहंग्रहेणोपासनं कर्तव्यमिति च ॥ १ ॥

नन्वहंबुद्धिशब्दयोर्जीवात्मविषययोः कथं भूमपर्यन्तत्वम्, अनहमर्थे च परमात्मन्यहंग्रहोपासनस्यायथार्थत्वमेव स्यादित्याशङ्क्य भूम्नः प्रत्यगात्मानं प्रत्यात्मत्वेन तद्विषयबुद्धिशब्दानां परमात्मपर्यन्तत्वमुप-

१ श्रीसूरमुद्रितपुस्तके—स्यासर्वाधारत्वेनासर्वात्मकत्वात्, इति पाठान्तरम्।

पद्यत इति दर्शयन् 'तरति शोकमात्मवित्' इति प्रक्रान्तमात्मत्वोपदेशं भूम्नि समापयति—

अथात आत्मादेशः।

अत्रापि क्रियत इति शेषः। अथशब्दः प्रकृतविषयत्वद्योतनार्थः। आत्मादेश आत्मत्वोपदेशः क्रियत इत्यर्थः।

आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्ता-
दात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति।

सर्वात्मतयोपदिश्यमानो भूमा स्वोपासकस्याऽऽत्मैवेत्यर्थः। ततश्च तत्राहंबुद्धिशब्दयोर्याथार्थ्यमेवेति भावः। नन्वथात आत्मादेश इत्यात्मत्वोपदेशः प्रकृतभूमविषय इति कथमवसीयत इति चेन्न। भिन्नयोर्द्वयोः सार्वात्म्यायोगेनैकविषयत्वस्यैव सिद्धत्वात्। ननु स एवाधस्तादित्यनेनैव सार्वात्म्यस्य सिद्धतयोपासकात्मत्वमपि सिद्धमेवेत्यथात आत्मादेश इत्युपदेशो व्यर्थ इति चेत्। सत्यम्। स एवेदꣳ सर्वमिति सामानाधिकरण्येनाऽऽत्मत्वं फलति। अथापि कण्ठोक्त्योपासकात्मत्वसिद्ध्यर्थं विशिष्य कण्ठोक्त्योपदेशः। न चाथात आत्मादेश इति सामान्योक्तिरुपासकं प्रत्यात्मत्वोपदेश इति विशेषे किं नियामकमिति वाच्यम्। 'एवं विजानत आत्मतः प्राणः' इति विद्वदात्मनः प्राणाद्युपादानत्वेन सार्वात्म्यस्योत्तरत्र प्रतिपादयिष्यमाणत्वात्। यत्त्वत्र परैरहंकारस्याऽऽत्मैकत्वेन प्रत्यक्षासिद्धस्य 'अथातोऽहंकारादेशः' 'अथात आत्मादेशः' इति पृथगुपदेशो भेदार्थः, भूमात्मनोर्भिन्नत्वेन प्रत्यक्षसिद्धयोः पृथगुपदेश ऐक्यार्थः। द्वयोः सार्वात्म्यायोगादिति। तदसारम्। अहमर्थादन्यस्याऽऽत्मनो भूमाख्यब्रह्माभिन्नत्वेन प्रत्यक्षासिद्धत्वात्तयोः पृथगुपदेशो भेदार्थः। अहमर्थस्य तु ब्रह्मभिन्नत्वेन प्रत्यक्षसिद्धत्वात्तयोरुपदेश ऐक्यार्थ इति वैपरीत्यस्यापि सुवचत्वादित्यास्तां विस्तरः।

स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मर-
तिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वरा-
ड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति।

रतिः स्रक्चन्दनादिजन्या प्रीतिः। क्रीडा, उद्यानादिजन्या। स्त्रीसंभवा प्रीतिर्मिथुनम्। विभूतिजन्या प्रीतिरानन्दः। आत्मैव रतिर्यस्य

स तथोक्तः । एवमुत्तरत्रापि । श्रवणमनननिदिध्यासनैरुक्तभूमात्मसाक्षात्कारनिष्ठस्य सर्वविधसुखानुभवोऽप्यात्मसुखानुभवान्तर्गत इत्यर्थः । स्वराट्, स्वयमेव राजा । अकर्मवश्यो विधिनिषेधकिंकरो न भवतीति यावत् । 'अत एव चानन्याधिपतिः' [ ब्र० सू० ४ । ४ । ९ ] इति सूत्रेऽत एव सत्यसंकल्पत्वादेव । अनन्याधिपतित्वं विधिनिषेधायोग्यत्वम् । विधिनिषेधयोग्यत्वे हि प्रतिहतसंकल्पत्वं भवेत् । अतः सत्यसंकल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अत एव स स्वराड्भवतीत्युच्यत इति भाषितम् । 'प्रत्यक्षोपदेशान्नेति चेत्' [ ब्र० सू० ४ । ४ । १८ ] इति सूत्रे—अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान्ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यतीति सर्वेषु लोकेषु कामचारो भवतीत्यस्य वाक्यस्यार्थ इति भाषितम् ।

अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका
भवन्ति तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ॥२॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
पञ्चविंशः खण्डः ॥ २५ ॥

---

य उक्तप्रकारादन्येन प्रकारेणोपासते तेऽन्यराजानो भवन्ति विधिनिषेधकिंकरा भवन्ति कर्मवश्या भवन्तीत्यर्थः । स्वराडित्यस्य प्रतिद्वंद्वित्वात्क्षय्यलोकाश्च भवन्तीत्यर्थः । अत्र क्षय्यलोका भवन्तीत्यनेन यथोक्तप्रकारेण परमात्मोपासकानामक्षय्यभगवल्लोकत्वमस्तीत्युक्तं भवति ॥२॥

त। कि ... (handwritten margin note)

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य
पञ्चविंशः खण्डः ॥ २५ ॥

---

अथात आत्मादेश इत्यनेनोक्तमुपासकान्तर्यामिणश्चेतनाचेतनसकलप्रपञ्चोपादानत्वलक्षणसर्वात्मकत्वं स्पष्टयति—

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं
विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः
स्मर आत्मत आकाश आत्मतस्तेज आत्मत

आप आत्मत आविर्भावतिरोभावावात्मतोऽन्न-
मात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमा-
त्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो
वागात्मतो नामाऽऽत्मतो मन्त्रा आत्मतः
कर्माण्यात्मत एवेदꣳ सर्वमिति ॥ १ ॥

उपासकस्यान्तर्याम्येव प्राङ्निर्दिष्टप्राणशब्दितजीवपर्यन्तसकलप्रपञ्चोपादानमतोऽहमेवेदं सर्वमितिविहिताहंग्रहस्तात्त्विकविषय एवेति भावः ॥ १ ॥

तदेष श्लोकः ।

तत्तस्मिन्विषय एष वक्ष्यमाणः श्लोकः प्रवृत्त इत्यर्थः ।

न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताꣳ
सर्वꣳ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति ।

पश्यो ब्रह्मदर्शी मृत्युं मरणं रोगं दुःखसाधनं (दुःखतां) जगति प्रतिकूलतां च न पश्यति सर्वसाक्षात्कर्ता सन्संकल्पमात्रेणैव संकल्पितानर्थान्सर्वस्मिन्काले प्राप्नोतीत्यर्थः । अपहतपाप्मत्वादिगुणाष्टकाविर्भावो भवतीत्यर्थः । अत्र जगति दुःखतां न पश्यतीत्युक्त्या जगतो मुक्तं प्रति प्रतिकूलत्वं नास्ति । पित्तोपहतस्य पयःप्रतिकूलत्ववज्जगतः प्रतिकूलत्वं कर्तृकर्मनिबन्धनमित्युक्तं भवति ।

स एकधा भवति त्रिधा भवति पञ्चधा
सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः
शतं च दश चैकश्च सहस्राणि च विꣳशतिः ।

आत्मनो निरवयवस्य त्रेधा पञ्चधा सप्तधेत्यादिविभागायोगात्संकल्पपरिगृहीतानेकविधशरीरो भवतीत्यर्थः । एवं मोक्षसाधनभूतोपासनप्रकारमुपदिश्य तादृशोपासननिष्पत्तावन्तःकरणस्योपासनोत्पत्तिप्रतिबन्धकपापराहित्यमपेक्षितम् । तच्च राजसतामसाहारसेविनां न संभवति, अपि तु तद्विविक्तसात्त्विकाहारसेविनां भवेदित्युपासकः सात्त्विकाहारसेवी भवेदित्युपदिशति—

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा
स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ।

इति । आहारशुद्धौ सात्त्विकाहारसेवने सति सत्त्वस्यान्तःकरणस्य शुद्धिर्नैर्मल्यं भवति । तन्नैर्मल्ये सति ध्रुवस्मृतिरविच्छिन्नस्मृतिसंतानरूपात्मध्यानं सिध्यति । ध्रुवस्मृतिलम्भे दुर्मोचतया ग्रन्थिशब्दवाच्यानामविद्यारागादीनां मोक्षो भवतीत्यर्थः । अत्र स्मृतिलम्भ एव सर्वग्रन्थीनां विप्रमोक्ष इत्युक्त्या स्मृत्यनन्तरभाविना स्मृतिविलक्षणेन दर्शनेन न मोक्षः, अपि तु दर्शनसमानाकारस्मृतिसंतानेनैव । ततश्च 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्' [छा० ७ । १५ । ४] इत्यत्र पश्यन्नित्यादिशब्दा दर्शनसमानाकारोपासनपराः । प्रकरणान्तरस्थाः 'आत्मा वा अरे द्रष्टव्यः' [बृ० २ । ४ । ५] इत्यादिशब्दाश्च दर्शनसमानाकारध्यानपरा इति सूचितं भवति । शास्त्रार्थमशेषत उक्त्वाऽऽख्यायिकामुपसंहरति श्रुतिः—

तस्मै मृदितकषायाय तमसः पारं
दर्शयति भगवान्सनत्कुमारः ।

एवं शुद्धान्तःकरणाय नारदाय भगवान्सनत्कुमारः संसारसंतमसचण्डभानुभूतोपासनगोचरं परमात्मानं स्पष्टमुपादिक्षदित्यर्थः । अत्र नामादिषु ब्रह्मत्वेनोपदिष्टेष्वपि तत्र ब्रह्मत्वस्यानभ्युपगमात्तस्य मृदितकषायत्वोक्तिः शिष्यस्य परिशुद्धान्तःकरणतयोपदेशयोग्यतां परीक्ष्यैवोपदिष्टवानित्यर्थः ।

तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमप्रपाठकस्य
षड्विंशः खण्डः ॥ २६ ॥

---

इति च्छान्दोग्योपनिषदि सप्तमः प्रपाठकः
समाप्तः ॥ ७ ॥

---

सनत्कुमारं स्कन्द इत्यपि वदन्तीत्यर्थः । स्पष्टोऽर्थः । द्विरुक्तिरध्याय-समाप्त्यर्था । एतद्विषयकमधिकरणमुपन्यस्यते । अत्र मुक्तस्य देहेन्द्रियाणि सन्ति न सन्तीति विचारे—'अभावं बादरिराह ह्येवम्' [ ब्र०सू० ४ । ४ । १० ] शरीरेन्द्रियाणाममावं बादरिराचार्यो मन्यते 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' [ छा०८ । १२ । १ ] इत्येवं श्रुतिराहेत्यर्थः । 'भावं जैमिनिर्विकल्पामननात्' [ ब्र० सू० ४ । ४ ११] मुक्तस्य शरीरेन्द्रियादिसद्भावं जैमिनिराचार्यो मन्यते । कुतः । विकल्पामननात् । विविधः कल्पो विकल्पः । वैविध्यमित्यर्थः । 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' [ छा० ७ । २६ । २ ] इत्यादिश्रुतेः । आत्मन एकस्याच्छेद्यस्यानेकधाभावासंभवात्त्रिधाभावादयः शरीरेन्द्रियनिबन्धना इत्यवगम्यते । अशरीरत्ववचनं तु कर्मकृतशरीराभावपरम् । 'द्वादशाहवदुभयविधं बादरायणोऽतः' [ब्र०सू०४ । ४ । १२] संकल्पादेवेति पूर्वनिर्दिष्टः संकल्पोऽतःशब्देन परामृश्यते । अतः संकल्पवशादेव मुक्तस्य सशरीरत्वाशरीरत्वलक्षणविधाद्वयमप्यस्ति संकल्पवशात्सशरीरोऽशरीरश्च भवतीति भगवान्बादरायणो मन्यत इत्यर्थः । द्वादशाहवत् । यथा 'द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहेन प्रजाकामं याजयेत्' इत्युपैतियजतिचोदनाभ्यां द्वादशाहस्य सत्रत्वाहीनत्वरूपविधाद्वयवत्त्वमेवमित्यर्थः । 'तन्वभावे संध्यवदुपपत्तेः' [ ब्र० सू० ४ । ४ । १३ ] मुक्तस्य स्वतनुभवनादिभोगोपकरणसृष्टिसंकल्पाभावे स्वप्ने परमात्मसृष्टैर्भोगोपकरणैर्यथा भोगान्भुङ्क्ते, एवं मुक्तः सत्यसंकल्पोऽपि परमात्मसृष्टैर्भोगोपकरणैर्भोगाननुभवति । 'भावे जाग्रद्वत्' [ ब्र० सू० ४ । ४ । १४ ] मुक्तस्य स्वभोगोपकरणतनुभवनादिसृष्टिसंकल्पस्य सत्त्वे यथा जाग्रत्पुरुषः स्वार्जितैर्भोगोपकरणैर्भोगाननुभवति, एवं मुक्तोऽपि स्वसंकल्पसृष्टैर्भोगोपकरणैर्भोगाननुभवति । नन्वणुपरिमाणस्य जीवस्य कथमनेकशरीरेष्वात्माभिमानसंभवस्तत्राऽऽह—प्रदीपवदावेशस्तथा हि दर्शयति' [ ब्र०सू० ४ । ४ । १५ ] यथा प्रदीपस्यैकदेशस्थितस्य स्वप्रभया देशान्तरव्याप्तिः, एवमेकदेशस्थितस्याप्यात्मनो धर्मभूतज्ञानादहमित्यात्माभिमानानुगुणा सर्वदेशेषु व्याप्तिरुपपद्यते । तथा हि दर्शयति श्रुतिः- 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते' [ श्वे० ५ । ९ ] आनन्त्याय धर्मभूतज्ञानकृतानन्त्यायेत्यर्थः । इयांस्तु विशेषः—बद्धस्य कर्माधीनशरीरपरिग्रहो मुक्तस्य तु स्वेच्छाप्रयुक्त इति । ननु 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन

वेद नाऽऽन्तरम्' [ बृ० ४ । ३ । २१ ] इति मुक्तस्य ज्ञानाभावप्रतिपादनात्कथमनेकशरीरेष्वात्माभिमानानुगुणज्ञानव्याप्तिस्तत्राऽऽह–' स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ' [ ब्र० सू० ४ । ४ । १६ ] ' न बाह्यं किंचन वेद' [ बृ० ४ । ३ । २१ ] इति ज्ञानाभावश्रुतेः सुषुप्तिमरणान्यतरविषयत्वात्सुषुप्तिमरणयोर्निःसंबोधत्वस्य 'नाह खल्वयमेवꣳ संप्रत्यात्मानं जानाति'[ छा० ८ । ११ । १ ] 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' [ बृ० २ । ४ । १२ ] इति श्रुतिभ्यामाविष्कृतत्वात् । अनुविनश्यति न पश्यतीत्यर्थः । मुक्तस्य 'मनसैतान्कामान्पश्यन्रमते ' [छा०८ । १२ । ५] इति सार्वज्ञ्यस्याऽऽविष्कृतत्वाच्चेति स्थितम् । तत्र समन्वयाध्याये—'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' [ छा० ७ । २४ । १ ] इति निर्दिश्यमानो भूमा प्राणशब्दनिर्दिष्टजीव एव प्राणाद्भूयोऽस्ति भगवः प्राणाद्भूय इति प्रश्नस्य वाचो वाव प्राणाद्भूय इति प्रतिवचनस्य वाऽदर्शनेन प्रक्रान्तात्मोपदेशस्य तत्रैव पर्यवसानात् । अतश्च सन्त्यपि ब्रह्मलिङ्गानि तत्रैव यथाकथंचिद्योजयितव्यानीति पूर्वपक्षे प्राप्त उच्यते 'भूमा संप्रसादादध्युपदेशात्' [ ब्र० सू० १ । ३ । ८ ] भूमा परमात्मा । संप्रसादाज्जीवादधिकत्वेन तस्योपदेशात् । 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय' [ छा० ८ । ३ । ४ ] इत्यत्र संप्रसादशब्दस्य जीवे प्रयुक्तत्वात्संप्रसादो जीवः । 'एष तु वा अतिवदति यः सत्येनातिवदति' [ छा० ७ । १६ । १ ] इति सत्यनिमित्तकातिवादिनः प्राणशब्दनिर्दिष्टजीवातिवाद्यपेक्षया तुशब्देनाधिकत्वेनोपदिश्यमानतयाऽतिवदननिमित्तस्य सत्यशब्दनिर्दिष्टस्य प्राणशब्दिताज्जीवादधिकत्वप्रतीतेर्न प्राणशब्दनिर्दिष्टो जीवो भूमा । 'धर्मोपपत्तेश्च' [ ब्र० सू० १ । ३ । ९ ] स्वे महिम्नि प्रतिष्ठितः स एवेदं सर्वमित्यादिभिः प्रतिपादितस्वमहिमप्रतिष्ठत्वसर्वात्मकत्वादिधर्माणामात्मतः प्राण आत्मत आशा इत्यादिवाक्यसंदर्भप्रतिपादितप्राणशब्दितजीवप्रभृतिसकलप्रपञ्चोपादानत्वस्य प्राणशब्दिते जीवेऽसंभवाच्च भूमा परमात्मेति स्थितम् ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकस्य षड्विंशः खण्डः ॥ २६ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायां सप्तमप्रपाठकः समाप्तः ॥ ७ ॥

दहरविद्या प्रस्तूयते—

अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म।

विद्यान्तरारम्भप्रदर्शनार्थोऽयमथशब्दः। उपास्यतया संनिहितस्य परब्रह्मणः स्थानतया नवद्वारादिमत्त्वादिना च पुरशब्दित उपासकशरीरे पुण्डरीकाकारमल्पं हृदयाख्यं परस्य ब्रह्मणो वेश्म।

दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥

अस्मिन्वेश्मनि दहरः सूक्ष्म आकाशः। अत्र य इति पुंलिङ्गयच्छब्दोऽध्याहर्तव्यः। अस्मिन्यो दहर आकाश इत्यर्थः। तस्मिन्यदन्तरित्यत्रान्तःशब्दोऽन्तर्वर्तिपरः। चशब्दश्चाध्याहर्तव्यः। ततश्चायमर्थः—अस्मिन्दहरपुण्डरीके यो दहर आकाशस्तदन्तर्वर्ति च यत्तदुभयं श्रवणमननाभ्यामवगन्तव्यं ध्यातव्यं चेत्यर्थः। तदन्वेष्टव्यमित्यत्र तदिति नपुंसकलिङ्गनिर्देशो लिङ्गसामान्यविवक्षया द्रष्टव्यः। यद्वा दहरोऽस्मिन्नन्तराकाश इति न पुंलिङ्गयच्छब्दोऽध्याहर्तव्यः। अस्मिन्दहराकाशस्तदन्तर्वर्ति च यदिति यच्छब्देनैव "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इति कृतनपुंसकैकशेषैकवद्भावेनैकेनैव नपुंसकलिङ्गेन द्वयोरपि परामर्शसंभवात्। तदन्वेष्टव्यमिति वाक्ये तच्छब्देऽपि नपुंसकैकशेषसंभवादेकेनैव तच्छब्देन द्वयोरपि परामर्शः। ततश्चानेन वाक्येन दहराकाशस्तदन्तर्वर्ति चान्वेष्टव्यमित्युक्तं भवति। उक्तं च भगवता भाष्यकृता—"यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यनूद्य तस्मिन्दहरपुण्डरीकवेश्मनि यो दहर आकाशः, यच्च तदन्तर्वर्ति, तदुभयमन्वेष्टव्यमिति विधीयते" इति। अत्राऽऽकाशशब्द आ समन्तात्काशते प्रकाशत इति व्युत्पत्त्या परमात्मपरः। तत्र च हेतुरुत्तरत्र वक्ष्यते। न च तदन्तर्वर्तिन एवान्वेष्टव्यत्वे प्रतीयमाने दहराकाशशब्दितस्याप्यन्वेष्टव्यतासिद्ध्यर्थमेतावान्क्लेशः किमर्थमाश्रीयते। किंच 'विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति' इत्यत्र पृष्ठगतसर्वताविध्याक्षिप्तपृष्ठविधिवद्दहराकाशान्तर्वर्तित्वेन गुणजातोपासनस्य दहराकाशोपासनमन्तरेणासंभवेनाऽऽक्षेपादेव दहराकाशोपासनस्यापि सिद्धतया यत्तच्छब्दयोर्नपुंसकैकशेषैकवद्भावचशब्दाध्याहारक्लेशानुभवो व्यर्थ इति वाच्यम्। 'अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' [छा०८।१।६] इत्यौपसंहारिकोभयोपा-

सनवचनानुसारेणास्य क्लेशस्यानुभोक्तव्यत्वात् । न च तदेव वाक्यं दहराकाशतदन्तर्वर्तिगुणोभयोपासनविधिपरमस्त्विति वाच्यम् । प्रक्रमस्थं विस्पष्टतव्यप्रत्यययुक्तं वाक्यं विहायौपसंहारिकस्य विस्पष्टविधिप्रत्ययशून्यस्य यच्छब्दयुक्तस्य विधित्वकल्पनानौचित्यात् । तस्य विधित्वकल्पनायामप्यनुवादरूपस्याप्यस्य वाक्यस्य तदनुसारेणार्थद्वयोपासनपरत्वस्याऽऽश्रयणीयतया नपुंसकैकशेषादिक्लेशस्याऽऽश्रयणीयत्वात् । इतिशब्दो वाक्यसमाप्तौ । अथ वा, इतीत्यस्यानन्तरमाचार्यो ब्रूयादित्यध्याहारः ॥ १ ॥

तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं
वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते
यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति ॥ २ ॥

एवमुक्तवन्तमाचार्यं स्वल्पहृदयमध्यवर्तितयाऽतिस्वल्प आकाशे किंवा वर्तितुमर्हति, यदन्वेष्टव्यं स्यादिति दहराकाशशब्दितस्य ब्रह्मत्वतदन्तर्वर्तितया निर्दिष्टस्य तद्गुणजातस्य चाजानाना अन्तेवासिनो यदि ब्रूयुरित्यर्थः । किं तदत्र विद्यत इति वाक्यं सर्वान्तरस्य परमात्मनोऽन्तर्वर्त्यन्तरासंभवलक्षणानुपपत्तिगर्भान्तर्वर्तिविशेषप्रश्नपरमिति व्यासार्याणामभिप्राय इति यद्यपि प्रतीयते तथाऽपि 'यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इत्येतावन्मात्रं श्रुतवतां शिष्याणां परमात्मत्वविरोधिन्याकाशशब्दे जागरूके दहरत्वान्वेष्टव्यान्तराधारत्वादिविरोधिलिङ्गे च जाग्रति ब्रह्मलिङ्गेषु चानुपन्यस्तेषु परमात्मत्वनिश्चयस्य वा तदुपजीव्याक्षेपप्रवृत्तेर्वाऽसंभवात्, सर्वान्तरस्य परमात्मनोऽन्तर्वर्त्यन्तरासंभवलक्षणानुपपत्तेरेव शिष्याणां हृदि विपरिवर्तमानत्वे प्रश्नवाक्ये 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इति दहरपुण्डरीकान्तर्वर्तित्वेनाऽऽकाशस्य दहरत्वोपन्यासस्य वा प्रतिवचने 'यावान्वा अयमाकाशः' [ छा० ८।१।३ ] इति वैपुल्योपन्यासस्य वाऽसंगतत्वापाताद्व्यासार्याणामप्युक्त एवार्थोऽभिप्रेतः । केचित्तु शरीरस्य ब्रह्मपुरत्वेनोपक्रमादेव तदन्तर्वर्त्याकाशशब्दनिर्दिष्टं ब्रह्मेत्यवगत्यैव तदन्तर्वर्तिवस्त्वन्तरासंभवलक्षणानुपपत्तिमभिप्रयन्त एवान्तर्वर्तिविशेषं पप्रच्छुरित्यपि संभवान्नानुपपत्तिरिति वदन्ति ॥ २ ॥

स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि ।

एवमुक्तः स आचार्यः प्रतिब्रूयात् । किमिति । हृदयपुण्डरीकमध्यवर्त्याकाशशब्दनिर्दिष्टो भूताकाशवद्विपुलो द्यावापृथिव्यादिशब्दलक्षितं भोग्यभोगस्थानभोगोपकरणमग्निसूर्यादिशब्दलक्षितो भोक्तृवर्गश्च तदाश्रित इत्यर्थः ।

(१) ग्रन्थान्तर पाठोऽपि समानानपूर्वीक एव

यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥ ३ ॥

अस्योपासकस्येह लोके यद्भोग्यजातमस्ति यच्च मनोरथमात्रगोचरमिह नास्ति सर्वं तद्भोग्यजातमस्मिन्दहराकाशे समाहितमित्यर्थः । दहराकाशो निरतिशयभोग्य इति यावत् । उक्तं च भगवता भाष्यकृता—'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति दहराकाशस्यातीव महत्तामभिधाय 'उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि' इति प्रकृतमेव दहराकाशमस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति' इति पुनरप्यस्मिन्निति तमेव दहराकाशं परामृश्य तस्मिन्नस्योपासकस्येह लोके यद्भोग्यजातमस्ति यच्च मनोरथमात्रगोचरमिह नास्ति सर्वं तद्भोग्यजातमस्मिन्दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधायेति भाषितम् । न च "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमित्यनेनोपासकभोग्यवस्त्वाधारत्वमात्रमुपास्यस्य प्रतीयते न तु दहराकाशस्य निरतिशयभोग्यत्वम् । ततश्च यच्चास्येहास्तीति वाक्येन दहराकाशस्य निरतिशयभोग्यत्वमभिधायेति भाष्यं कथमुपपद्यतामिति वाच्यम् । उपासकस्य ब्रह्मप्राप्त्येकफलकस्य स्वर्गपश्वादीनां भोग्यत्वाभावात् 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति' इत्यनेन दहराकाशस्य निरतिशयभोग्यत्वमेव प्रतिपाद्यत इति भाष्याभिप्राय इति व्यासार्यैरुक्तत्वान्नास्याः शङ्काया अवकाश इति द्रष्टव्यम् । केचित्तु 'स यदि पितृलोककामो भवति' [छा० ८।२।१]

इत्यादिना प्राचीनानेकजन्मसंबन्धिपित्रादिवर्गदिदृक्षायाः संकल्पमात्रेण तत्स्रष्टृत्वस्य च प्रतिपादयिष्यमाणत्वात्, सूत्रकृताऽपि 'संकल्पादेव तु तच्छ्रुतेः, [ ब्र० सू० ४ । ४ । ८ ] इति सूत्रेण तद्वाक्यस्य विवक्षितार्थत्वाविष्करणात्, 'यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते' 'अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते' [ छा० ८ । ३ । १ । २ ] इति नष्टानां पित्रादीनां मुक्तकामनाविषयत्वप्रतिपादनात्, 'प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः' [ ब्र० सू० ४ । ४ । १८ ] इति सूत्रोक्तन्यायेन ब्रह्मविभूतितया नष्टपित्राद्यनुभवस्य कामनाविषयत्वसंभवाच्च, अन्यथा 'अस्मिन्कामाः समाहिताः' [ छा० ८ । १ । ५ ] एतांश्च सत्यान्कामान्, [ छा० ८ १ । ६] इत्यादावपि कामशब्दस्य निरतिशयभोग्यार्थकत्वं को वारयेत्। तथा 'जक्षत्क्रीडन्' [ छा० ८ । १२ । ३ ] इत्यत्रापि भोग्यत्वार्थकत्वमेव स्यादिति परोक्तिं विजयेत । अतोऽस्य वाक्यस्य यथाश्रुतार्थत्वेऽपि न दोषः, भाष्यमपि भोग्याधारत्वफलितभोग्यत्वपरमेवास्त्विति वदन्ति । अत्र भूताकाशे स्पष्टशब्दवैपुल्यप्रतिपादनेन द्यावापृथिव्यादिजगदाश्रयत्वप्रतिपादनेनोपासकं प्रति निरतिशयभोग्यत्वप्रतिपादनेन च दहराकाशस्य प्रसिद्धाकाशवैलक्षण्यप्रतिपादनात्स्वल्पे दहराकाशे किमपि मातुं न शक्नोतीत्याक्षेपबीजं परिहृतं भवति ॥ ३ ॥

तं चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितꣳ सर्वाणि
च भूतानि सर्वे च कामा यदैनज्जरा वाऽऽप्नोति
प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥

अल्पत्वरूपमाक्षेपबीजं परिहृत्य 'किं तदत्र विद्यते' [ छा० ८ । १ । २ ] इति प्रश्नं प्रति विवक्षत्येवाऽऽचार्ये उक्तेऽर्थेऽनुपपत्तिं पश्यन्तः शिष्या यद्याचार्यं ब्रूयुः । किमिति । ब्रह्मपुरशब्दितं शरीरं द्यावापृथिव्यादिशब्दनिर्दिष्टभोग्यभोगोपकरणभोगस्थानान्यग्निवाय्वादिशब्दनिर्दिष्टो भोक्तृवर्गश्च यद्याश्रयेयुस्तदा शरीरस्य जरानाशादौ सति द्यावापृथिव्यादिकं किमपि नावशिष्येत तदपि नश्येदित्यर्थः । सर्वे च कामा इत्यस्य यच्चास्येहास्तीति वाक्यनिर्दिष्टनिरतिशयभोग्यत्वानुवादित्वात्, सर्वे च कामा इत्यस्य निरतिशयभोग्यत्वमर्थ इति व्यासार्यैरुक्तम् । ननु दहराकाशाश्रितं द्यावापृथिव्यादिकमिति वदन्तं प्रत्यस्याः शङ्कायाः

कथमुत्थानम् । दहराकाशाश्रितत्वस्यैवोक्ततया ब्रह्मपुरशब्दितशरीराश्रितत्वस्येहानुक्ततया तज्जरानाशानुविधायिजरानाशत्वस्य दहराकाशाश्रिते द्यावापृथिव्यादौ कथं प्रसक्तिरिति चेदुच्यते । यथा घटाद्यन्तराकाशे निहितस्य दध्यादेर्वस्तुतो घटादिरेव धारकः, आकाशः परमवकाशात्मनोपकरोति, एवं देहान्तर्वर्तिनि दहराकाशे विद्यमानस्य द्यावापृथिव्यादेर्देह एव धारकः । दहराकाशस्तु केवलमवकाशात्मनोपकरोति । अस्तु वा दहराकाशस्य घटाद्याकाशवैलक्षण्येन स्वतो धारकत्वम् । तथाऽपि तस्य देहजराप्रध्वंसानुपदभाविजराप्रध्वंसत्वाद्यावद्देहस्य भारधारणानुकूलं बलं तावत्पर्यन्तमेव दहराकाशस्य तद्धारकत्वमिति फलतो देह एव तस्य सर्वस्य धारकः पर्यवस्यतीत्याक्षिपेतां शिष्याणामभिप्रायः ॥ ४ ॥

स ब्रूयात् ।

आचार्यस्तत्प्रतिवक्ति ।

नास्य जरयैतज्जीर्यति न वधे-
नास्य हन्यत एतत्सत्यं ब्रह्मपुरम् ।

भोग्यभोगस्थानभोगोपकरणभोक्तृवर्गादिशालितया पुरमिव वर्तमानमेतद्दहराकाशाख्यं ब्रह्म न तु घटाकाशादिवत्केवलमवकाशात्मनोपकारकम् । यथा पुरं भोग्यभोगोपकरणभोगस्थानादीनां स्वत एवाऽऽधारभूतं न तु दध्यादीनां घटाकाशादिवदवकाशात्मनोपकारकं तथेत्यर्थः । ननु स्वतो धारकत्वेऽपि [(१)] तद्देहान्तर्वर्तितया तदन्तर्गतहृदयवृज्जरानाशानुविधायिजरानाशत्वं स्यादिति शङ्काबीजं परिहरति—एतत्सत्यमिति । सत्यं निर्विकारमित्यर्थः । अत एव न देहजरामरणानुविधायिजरामरणकं भवतीत्यर्थः । यद्वा 'तद्यत्सत्तदमृतम्' [ छा० ८।३।५ ] इत्यस्मिन्प्रकरणे वक्ष्यमाणसत्यशब्दनिर्वचनरीत्या चेतनाचेतननियामकत्वं वा सत्यत्वम् । यथाकथंचिद्घटाकाशादिविलक्षणाधार इत्यर्थः । केचित्तु—'अस्मिꣳश्चेदिदं ब्रह्मपुरे' इति प्रश्नवाक्ये ब्रह्मपुरशब्देन ब्रह्मरूपपुरत्वाद्दहराकाश एवोच्यते । यदैतज्जरा वाऽऽप्नोतीत्येव पाठः । तत्र चैतस्य शरीरस्य जरा, एतज्जरा यदा दहराकाशं प्राप्नोति तद्ध्वंसेन ध्वंसते वा तदा द्यावापृथिव्यादिकं नावशिष्येतेत्येवार्थः । न तु

(१) अत्र तद्- तस्य स्थाने -तस्य- इति पाठान्तरं भाति किन्तु ... अक्षरेऽपि ... पाठ

ब्रह्मपुरशब्देन शरीरपरामर्शमभ्युपेत्य तदनुगुणैतादृशाभिप्रायपरिकल्पनाक्लेशोऽनुसर्तव्य इति वदन्ति। एवं मध्ये प्रसक्तमाक्षेपं परिहृत्य 'किं तदत्र विद्यते' इत्यन्तर्वर्तिविशेषजिज्ञासां शमयति—

अस्मिन्कामाः समाहिताः।

काम्यन्त इति कामाः कल्याणगुणाः। को दहराकाशः। स च कैः कामैर्विशिष्ट इत्याकाङ्क्षायामाह—

एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको
विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः।

उक्तं च भगवता भाष्यकृता—दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्याऽऽत्मत्वं चैष आत्माऽपहतपाप्मेत्यादिना सत्यसंकल्प इत्यन्तेन स्फुटीकृत्येति, पापजरामरणशोकबुभुक्षापिपासावर्जितः सत्यकामः सत्यसंकल्पश्चेत्यर्थः। परमात्मप्रकरणेषु पापशब्दः सुकृतसाधारणः। 'न सुकृतं न दुष्कृतꣳ सर्वे पाप्मानोऽतो निवर्तन्ते' [छा० ८।४।१] इति सुकृते पापशब्दप्रयोगात्।

एते वै निरयास्तात स्थानस्य परमात्मनः।

इति स्वर्गादीनामपि मुमुक्ष्वनिष्टत्वेन स्वर्गादिसाधनकर्मणो मुमुक्षून्प्रत्यनिष्टसाधनत्वेनालौकिकत्वे सत्यनिष्टसाधनत्वलक्षणपापशब्दप्रवृत्तिनिमित्तक्रोडीकृतत्वेन पापशब्दवाच्यत्वावश्यंभावात्। अपहतपाप्मत्वं चानध्वस्तपाप्मत्वम्। 'नैतꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्।' [छा० ८।४।१] इति सुकृतदुष्कृतप्राप्त्यभावश्रवणात्तरतेः प्रातिवचनत्वात्। तस्मादपहतपाप्मत्वमश्लिष्टपाप्मत्वमित्यर्थः। अकृतकर्माश्लेषस्य सर्वसाधारणत्वात् कृतेऽपि कर्मणि तत्फलाश्लेष उच्यते। अत ईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानीत्यर्थः। कृतेऽपि पापे तत्फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदीश्वरस्य स्वभावविशेषोऽपहतपाप्मत्वम्। परिशुद्धात्मविषयस्यापहतपाप्मत्वस्याप्ययमेवार्थः। स तु तस्य तिरोधानार्हः प्रतिबन्धकनिवृत्तावाविर्भवति, ईश्वरस्य तु तिरोधानानर्हो नित्याविर्भूत इति विशेष इति व्यासार्यैः 'अन्तस्तद्धर्मोपदेशात्' [ब्र० सू० १।१।२०] इत्यत्र वर्णितः। अत्र "सत्यकामशब्दो

न कामनायाः सत्यत्वपरः । अमोघाशत्वस्य सत्यसंकल्पशब्देनैव सिद्धत्वात् । नापि काम्यत इति व्युत्पत्त्या गुणमात्रपरः । कतिपयगुणान्तराणां पृथगुक्तेः । अतो भोग्यभोगोपकरणभोगस्थानरूपा नित्याः कामा अस्य सन्तीत्युच्यते । 'तदक्षरे परमे व्योमन्' इत्युक्तनित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थ इति व्यासार्यैरुक्तम् । वेदार्थसंग्रहे भाष्यकृताऽप्युक्तम् । सत्यसंकल्पोऽप्रतिहतसंकल्पः ।

यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशा-
सनं यं यमन्तमभिकामा भवन्ति यं जन-
पदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥

इह लोके प्रजा यथानुशासनं राजशासनानुल्लङ्घनेन राजानमन्वाविशन्त्यनुसरन्तीत्यर्थः । अनुसृत्य किं कुर्वन्तीत्यत्राऽऽह—यं यमन्तमभिकामा भवन्ति । कर्मणः फलापवर्गत्वात्फलमेव कर्मणोऽन्तः । यं यमन्तं यद्यत्फलमभिकामा अभ्यर्थिनो भवन्ति जनपदक्षेत्रादिकं वा कामयन्ते तत्तत्फलं यथाशासनमेवोपजीवन्ति । राजशासनानुरोधेनैवेह लोके यथोपजीवन्ति तथा परलोकेऽपि परतन्त्रा एव भवन्तीत्यर्थः । यद्वा यं यमन्तमभिकामा भवन्ति तं तमिह लोके यथा प्रजा अन्वाविशन्ति राजानमनुसृत्य लभन्ते तथा परलोकेऽप्युपजीवन्तीत्यर्थः । अयमेवार्थो व्यासार्यैर्वर्णितः ॥ ५ ॥

एवं कर्मसाध्ये परलोके पारतन्त्र्यमुक्त्वा क्षयिष्णुत्वमप्याह—

तद्यथेह कर्मचितो लोकः क्षीयत एव-
मेवामुत्र पुण्यचितो लोकः क्षीयते ।

राजसेवादिकर्मणा चितोऽर्जितो लोको यथा क्षीयत एवमेव परलोकेऽपि पुण्यसंपादितो लोकः क्षीयते ।

तद्य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्का-
मांस्तेषां सर्वेषु लोकेष्वकामचारो भवति ।

यस्मात्सुकृतसाध्येषु परलोकेषु पारतन्त्र्यक्षयिष्णुत्वादिकं तस्माद्य उक्तमात्मानमेतांश्चापहतपाप्मत्वादीनेतांश्च सत्यान्नित्यान्काम्यमानान्क-

ल्याणगुणांश्चानुपास्य परलोकं व्रजन्ति तेषां सर्वलोककामचारो न भवति पारतन्त्र्यमिति यावत् ।

अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्य
प्रथमः खण्डः ॥ १ ॥

---

ये त्वात्मानमपहतपाप्मत्वादींश्च काम्यमानान्कल्याणगुणाननुपास्य परलोकं व्रजन्ति ते ब्रह्मविभूतिभूतान्विकारलोकाननुभूय यथाकामं तृप्ता न पारतन्त्र्यमनुभवन्तीत्यर्थः । नन्वपहतपाप्मेत्यादिवाक्येऽपहतपाप्मत्वादिधर्माणां स्वातन्त्र्येणानुपस्थितानां कथमेतानित्यनेन परामर्शः । न च गत्यभावात्तेषामेव परामर्श इति वाच्यम् । 'यच्चास्येहास्ति' [छा० ८ । १ । ३] इति वाक्ये निर्दिष्टस्य 'सर्वाणि च भूतानि सर्वे च कामाः' [छा० ८ । १ । ४] इति बहुवचनान्तकामशब्देनानूदितस्य निरतिशयभोग्यत्वस्यैव 'अस्मिन्कामाः समाहिताः' 'एतांश्च सत्यान्कामान्' इत्यत्रापि निर्देशोऽस्त्विति चेन्न । तथा सत्यपहतपाप्मा विजर इत्याद्युपन्यासस्य वैयर्थ्यप्रसङ्गात् । कामानित्यस्य भोग्यत्वपरत्वे बहुवचनासंगतेश्च । अपहतपाप्मत्वादय एव 'एतांश्च सत्यान्कामान्' इति कामशब्देन निर्देश्याः । भोग्यत्वहेतुपितृलोकादिविषयपरत्वे सत्या इति कामानां नित्यत्वकथनस्यासंभवादिति सिद्धम् । ततश्च 'दहरोऽस्मिन्नन्तराकाशः' इत्याकाशशब्दनिर्दिष्टः परमात्मा न भूताकाशः, तस्मिन्यदन्तरिति निर्दिष्टमपहतपाप्मत्वादिगुणजातमितीयता संदर्भेणोपदिष्टं भवति । एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते—अत्र दहराकाशो भूताकाशः । आकाशशब्दस्य तत्रैव प्रसिद्धेः । व्यापके परमात्मनि दहरत्वस्याभावाच्च । तस्मिन्यदन्तरित्यन्वेष्टव्यान्तराधारतया निर्देशाच्च । न हि परमात्मनः स्वयमेवान्वेष्टव्यस्यान्वेष्टव्यान्तराधारत्वं संभवति । यावान्वा अयमित्यादिना निर्दिश्यमानभूताकाशोपमेयत्वस्य गगनं गगनाकारमित्यादिवद्भेदेऽप्युपपत्तेः । निरतिशयविपुले परमात्मन्यपि परिच्छिन्नभूताकाशोपमेयत्वस्यास्वरसत्वाच्च भूताकाशो दहराकाश इति पूर्वपक्षे प्राप्त उच्यते— 'दहर उत्तरेभ्यः' [ब्र० सू० १ । ३ । १४] दह-

राकाशः परमात्मा । वाक्यशेषगतभूताकाशोपमेयत्वसर्वाधारत्वनिरतिशयभोग्यत्वनिरुपाधिकापहतपाप्मत्वादिगुणानां परमात्मव्यतिरिक्ते भूताकाशेऽसंभवात् । परमात्मनोऽप्यपहतपाप्मत्वादिलक्षणान्वेष्टव्यान्तराधारत्वसंभवाच्च । न च गगनं गगनाकारमितिवदभेदेऽप्युपमानोपमेयभावोऽस्त्विति वाच्यम् । गगनं गगनाकारमित्यादावभेदे सादृश्यं निबध्यमानमनन्वितत्वादनुपमकत्वफलकं सदनन्वयालंकाररूपम् । न चेह तथा संभवति । 'यावान्वा अयमाकाशः' इति वाक्ये बाह्याकाशत्वहार्दाकाशतारूपोपमानोपमेयतावच्छेदकधर्मभेदसत्त्वेनानन्वयस्यासंभवात् । उपमानोपमेयतावच्छेदकधर्मैक्ये ह्यनन्वयालंकारो यथा गगनं गगनाकारमित्यादौ । यच्चोक्तमतिविपुलस्य ब्रह्मणः परिच्छिन्नभूताकाशोपमेयत्वं न संभवतीति । तन्न । अधिकजवेऽपि सवितरीषुवद्गच्छति सवितेति गतिमान्द्यनिवृत्तिपरवचनवत्स्वल्पत्वनिवृत्त्यर्थतया भूताकाशसादृश्यकथनस्योपपत्तेः । यदुक्तमाकाशशब्दस्य भूताकाशे प्रसिद्धत्वादिति तत्राऽऽह— 'प्रसिद्धेश्च' [ ब्र० सू० १ । ३ । १७ ] 'यदेष आकाश आनन्दो न स्यात्' [ तै० २।७।१ ] इति परमात्मन्यप्याकाशशब्दस्य प्रसिद्धत्वात् । यदुक्तं परमात्मनोऽल्पपरिमाणत्वं नोपपद्यत इति तत्राऽऽह—'अल्पश्रुतेरिति चेत्तदुक्तम्' [ ब्र० सू० १ । ३ । २१ ] शाण्डिल्यविद्यायाम् 'निचाय्यत्वादेवं व्योमवच्च' [ ब्र० सू०१ ।२।७ ] इति सूत्रखण्डेनोपासनार्थं विपुलस्याल्पत्वोपदेश उपपद्यत इति पूर्वमेवोक्तमित्यर्थः । तथा 'प्रदानवदेव तदुक्तम्' [ ब्र० सू० ३ । ३ । ४३ ] इत्यत्र इहाऽऽत्मानमनुविद्य व्रजन्ति इति दहराकाशोपासनमुक्त्वैतांश्च सत्यान्कामानित्यपहतपाप्मत्वादिगुणानामुपासनस्य पृथगाम्नानादपहतपाप्मत्वादिगुणोपासनदशायां न धर्मिस्वरूपं चिन्तनीयम् । ततश्च प्रथमं दहराकाशाख्यं धर्मिस्वरूपमनुसंधाय तस्यापहतपाप्मत्वविजरत्वाविमृत्युत्वविशोकत्वविजिघत्सत्वापिपासत्वसत्यकामत्वसत्यसंकल्पत्वरूपाः कामा इत्येव चिन्तनीयम् । न त्वपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प इति गुणाश्रयस्य गुणिनोऽपि चिन्तनमिति पूर्वपक्षे प्राप्त उच्यते—'प्रदानवदेव तदुक्तम्' [ब्र० सू० ३।३।४३] यद्यपि दहराकाश एवापहतपाप्मत्वादिगुणानां गुणी स च प्रथमं चिन्तितस्तथाऽपि स्वरूपमात्राद्गुणविशिष्टाकारस्य भिन्नत्वात्, प्रकृते चास्मिन्कामाः समाहिता इति ब्रह्माणि कामसमाधानाधारत्वमुक्त्वा के ते कामा

इत्याकाङ्क्षायां निष्कृष्यापहतपाप्मत्वं विजरत्वमित्यनुक्त्वाऽपहतपाप्मा विजरो विमृत्युरिति तद्विशिष्टविशेष्यपर्यन्ततया निर्देशादनेनैवाऽऽकारेणानुसंधानं कर्तव्यमिति श्रुतेराशय उन्नीयते। अतो वैशिष्ट्यानुसंधानार्थं विशेष्यचिन्तनमप्यावर्तनीयं प्रदानवत्। तदुक्तं संकर्षे—नाना वा देवतापृथक्त्वादिति। तन्नानाप्रदानाधिकरणमित्थमस्ति। त्रैधा तण्डुलविभागेष्टिः। यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' [तै० सं०२।३।६।१] इति त्रिपुरोडाशास्तत्र तेषां पुरोडाशानामुपर्युपर्यधिश्रयणं सर्वेषां युगपदवदानं च विहितम्। तेषां पूर्वार्धादवदानं प्रकृतिवत्कर्तुं शक्यं तथाऽपि मध्यादवदानं कर्तुमशक्यम्। पुरोडाशानां मध्ये नलकप्रवेशाद्युपायेन मध्यादपि युगपदवदानं ग्राह्यम्। एवं स्थिते प्रदानमपि युगपत्कर्तव्यं क्रमेण वेति संशये 'तेषामपृथक्प्रदानमवदानैकत्वात्' इति सूत्रेणावदानवत्प्रदानमपि युगपदेव कार्यमिति पूर्वः पक्षः। तत्रेदं सिद्धान्तसूत्रम् 'नाना वा देवतापृथक्त्वात्' इति। त्रयाणां यागद्रव्याणां भेदाद्विशिष्टरूपाणां देवतानां च भेदात्त्रिभिर्द्रव्यदेवतासंबन्धैः कल्प्यानां च यागानां तत्तद्देवतोद्देशेन क्रमिकाणि प्रदानानि कर्तव्यानीति सूत्रार्थ इति स्थितम्। प्रकृतमनुसरामः॥ ६॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य
प्रथमः खण्डः॥ १॥

---

**स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते॥ १॥**

स मुक्तः सन्यदि प्राचीनानेकजन्मसंबन्धिपितृवर्गं दिदृक्षेत तदा स पितृवर्ग एतस्य संकल्पमात्रात्समुत्थितो भवति तेन सहितः पूज्यते। एतत्खण्डविषयकमधिकरणमुपन्यस्यते—अत्र सत्यसंकल्पत्वेन व्यवह्रियमाणानामपि राजादीनामभिलषितसृष्टेः प्रयत्नान्तरसापेक्षत्वदर्शनान्मुक्तस्यापि सिसृक्षितपितृलोकादिसृष्टिः संकल्पव्यतिरिक्तप्रयत्नान्तरसापेक्षैवेति प्राप्त उच्यते—'संकल्पादेव तु तच्छ्रुतेः' [ब्र०सू०४।४।८]

१ कर्म सं° इति पाठान्तरम्।

संकल्पमात्रादेव सृष्टिर्न प्रयत्नान्तरसापेक्षा । कुतः । संकल्पादेव पितरः समुत्तिष्ठन्तीत्येवकारश्रुतेः । न चैवकारस्यायोगव्यवच्छेदकत्वमत्यन्तायोगव्यवच्छेदकत्वं वाऽर्थः । विशेषणक्रियासंगतैवकारयोरेवायोगात्यन्तायोगव्यवच्छेदकत्वेनैतस्य चातथात्वेनान्ययोगव्यवच्छेदकत्वस्यैव युक्तत्वात् । 'अत एव चानन्याधिपतिः' [ ब्र० सू० ४ । ४ । ९ ] एतच्च सूत्रं पूर्वमेव व्याकृतमिति पित्रादीनां संकल्पमात्रसाध्यत्वं स्थितम् । प्रकृतमनुसरामः ॥ १ ॥

अथ यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन संपन्नो महीयते ॥ २ ॥

अथ यदि भ्रातृलोककामो भवति संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयते ॥ ३ ॥

अथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते ॥ ४ ॥

अथ यदि सखिलोककामो भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो महीयते ॥ ५ ॥

अथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन संपन्नो महीयते ॥ ६ ॥

अथ यद्यन्नपानलोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन संपन्नो महीयते ॥ ७ ॥

अथ यदि गीतवादित्रलोककामो भवति संकल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन

गीतवादित्रलोकेन संपन्नो महीयते ॥ ८ ॥

अथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन संपन्नो महीयते ॥ ९ ॥

यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते ॥ १० ॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्य
द्वितीयः खण्डः ॥ २ ॥

---

स्पष्टोऽर्थः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकाय मष्टमप्रपाठकस्य
द्वितीयः खण्डः ॥ २ ॥

---

त इमे सत्याः कामा अनृतापिधाना-
स्तेषाᳬ सत्यानाᳬ सतामनृतमपिधानम् ।

परमात्मनिष्ठा इमे सत्या अपहतपाप्मत्वादयः कामा अनृतमपिधानं येषां तेऽनृतापिधाना अनृताच्छादिताः । ऋतेतरविषयो ह्यनृतशब्दः । ऋतमिति कर्मवाचि 'ऋतं पिबन्तौ' [क० ३।१] इति वचनात् । ऋतं कर्म फलाभिसंधिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तफलं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधीति महासिद्धान्ते भाषितम् । तेषां सत्यानां सतां विद्यमानानामेव कर्माऽऽच्छादकम् । ततश्च स्वात्मभूतपरमात्मगता अपहतपाप्मत्वादिधर्माः कर्मरूपाविद्यातिरोहितत्वान्न भासन्त इत्यर्थः ।

यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥

अथ ये चास्येह जीवा ये च प्रेता यच्चा-
न्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते ।

अस्योपासकस्य यो बन्धुवर्ग इतः प्रैति न स इह द्रष्टुं शक्यः । अस्य तु ये जीवन्तो नष्टाश्च बन्धवोऽलभ्याश्च मनोरथास्तत्सर्वं दहराकाशं

परमात्मानं प्राप्य लभते । अत्र 'यच्चास्येहास्ति यच्च नास्ति' [छा० ८।३।१] इति वाक्यसमानार्थत्वादस्य वाक्यस्य वाक्यस्य मुक्तस्य सर्वतो विरक्तस्य प्राप्यान्तरासंभवान्निरतिशयभोग्यत्वमेवार्थः ।

अत्र ह्यस्यैते सत्याः कामा अनृतापिधानाः ।

यत उपासकस्य काम्यमाना भोग्यभूता अपहतपाप्मत्वादय एतन्निष्ठाः पूर्वमनृतशब्दितकर्माच्छादिता इदानीं दहराकाशं प्राप्तस्याऽऽविर्भवन्त्यतो निरतिशयभोग्यत्वमित्यर्थः । हिशब्दो हेत्वर्थः ।

तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः॥२॥

यथाऽधस्तान्निक्षिप्तं हिरण्यनिधिमक्षेत्रज्ञा निधिमत्क्षेत्रस्वभावविज्ञानहीना निधेरुपर्युपरि संचरन्तोऽपि निधिं न लभन्त एवमेवेमाः सर्वाः प्रजाः सुषुप्तिकालेऽहरहर्गच्छन्त्यः सुषुप्तौ 'सति संपद्य न विदुः' [छा० ६।९।२] इत्युक्तरीत्याऽविभागं गच्छन्त्य एतं दहराकाशाख्यं ब्रह्मरूपं लोकं न विन्दन्ति न लभन्ते न जानन्तीत्यर्थः । ब्रह्मलोकशब्दौ च निषादस्थपतिन्यायेन समानाधिकरणौ । तत्र हेतुमाह—अनृतेन हि प्रत्यूढा इति । प्रत्यूढाः प्रतीपं नीताः स्वभावान्तरं प्रापिता आच्छादिता इति यावत् । यद्वाऽहरहर्गच्छन्त्य इति न सुषुप्तिकालीनं गमनमुच्यतेऽपि त्वन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य हिरण्यनिधिवत्परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छन्त्यः सर्वस्मिन्काले वर्तमानास्तमजानत्यस्तं न विन्दन्ति न लभन्त इत्यर्थः। अर्थद्वयमपि भाष्यकृता वर्णितं 'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च' [ब्र० सू० १।३।१५] इति सूत्रे । सूत्रस्य चायमर्थः—'तद्यथा हिरण्यनिधिं निहितम्' इत्यहरहः सर्वेषां क्षेत्रज्ञानां गमनाद्ब्रह्मलोकशब्दाच्च दहराकाशो ब्रह्मेत्यवसीयते । तथा ह्यन्यत्र सुषुप्तिकालीनगमनब्रह्मलोकशब्दौ ब्रह्मविषयावेव दृष्टौ 'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः' [छा० ६।९।२] 'एष ब्रह्मलोकः सम्राडिति होवाच' [बृ० ४।३।३३] इति मा भूदन्यत्र सुषुप्तिकाले ब्रह्मणि गमनदर्शनम् । एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकालेऽवस्थानं ब्रह्मव्यतिरिक्तेष्वसंभावितं दहराकाशस्य परब्रह्मत्वे

लिङ्गम् । भाष्य एवमेकां व्याख्यां कृत्वा—अथ वाऽहरहर्गच्छन्त्य इति न सुषुप्तिविषयं गमनमुच्यते । अपि त्वन्तरात्मत्वेन सदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छन्त्यः सर्वस्मिन्काले वर्तमानास्तमजानत्यस्तं न विन्दन्ति न लभन्ते । यथा हिरण्यनिधिं निहितं तत्स्थानमजानानास्तदुपरि सर्वदा वर्तमाना अपि न लभन्ते तद्वदित्यर्थः । सेयमेवान्तरात्मत्वेनावस्थितस्य दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति । तथा ह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिः स्वस्मिन्वर्तमानाभिः प्रजाभिरवेदनं दृष्टम् । यथाऽन्तर्यामिब्राह्मणे—'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद' इति 'अदृष्टो द्रष्टाऽश्रुतः श्रोता' इति च । मा भूदन्यत्र दर्शनं स्वयमेव त्वियं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतयाऽहरहः सर्वासां प्रजानामजानतीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गमिति व्याख्यातम् । सुषुप्तिकालीनगमनविषयपूर्वव्याख्यायामुपर्युपरीत्यस्य दृष्टान्त एवान्वयो न दार्ष्टान्तिके । सुषुप्तिकाल एकीभावसद्भावेऽप्युपरिगमनाभावात् । अन्तर्यामिविषयद्वितीयव्याख्यायां तु, अन्तर्यामिण उपरि सर्वदा गतिसत्त्वादुपर्युपरीत्यस्य दार्ष्टान्तिकेऽप्यन्वयो द्रष्टव्यः । अत्र व्यासार्यैरन्तर्यामिविषयतया व्याख्यानेऽन्तर्यामिण्यहरहर्गमनस्य दहराकाशस्य परब्रह्मत्वसाधकत्वमयुक्तम् । उपासकानुग्रहायावस्थितो हि दहराकाशोऽन्तरात्मतयाऽवस्थितो ह्याधारवर्तयो रूपभेदादित्याशङ्क्य धर्मैक्याभिप्रायेणैवमुक्तमिति परिहृतम् ॥ २ ॥

पूर्वोक्तं तस्य हृदयान्तर्वर्तित्वं स्मारयति—

स वा एष आत्मा हृदि ।

अन्तर्वर्तत इति शेषः । हृदयनामनिर्वचनादप्यात्मनो हृद्गतत्वं सिध्यतीत्याह—

तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयम् ।

इति । तस्यैतस्य हृदयस्य हृद्ययमात्मा वर्तत इति हि हृदयशब्दनिरुक्तिरिति भावः ।

अहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ३ ॥ स्वर्गं

अहरहः प्रत्यहमाप्रयाणमेवंविदेतादृशदहराकाशोपासननिष्ठः सुखरूपं

लोक्यमानं ब्रह्म प्राप्नोतीत्यर्थः । ब्रह्मोपासननिष्ठस्य तत्क्रतुन्यायेन ब्रह्मप्राप्तेरेव वक्तव्यतया प्रसिद्धस्वर्गलोकप्राप्त्यसंभवादिति द्रष्टव्यम् ॥ ३ ॥

कथं ब्रह्मप्राप्तिः । प्राप्तस्य वा ततः किं भवतीत्यत्राऽऽह—

**अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ।**

अथशब्दः प्रकृतापेक्षत्वद्योतकः । संप्रसादशब्दः सुषुप्तिस्थानवचनः संस्तत्संबन्धाज्जीवं लक्षयति । एष संप्रसादोऽहरहर्वा एवंविदिति पूर्ववाक्यनिर्दिष्ट उपासको जीवोऽस्माद्धेयतया परिदृश्यमानाच्छरीरादुत्क्रम्य देशविशेषनिष्ठं परमात्मानं प्राप्य स्वेन रूपेणाभिनिष्पद्यते । अस्य वाक्यस्यार्थः प्रजापतिविद्यायां विशिष्य वक्ष्यते ।

**एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ।**

एष आत्मैतदमृतमित्यत्रैतच्छब्दौ पूर्ववाक्ये परं ज्योतिरुपसंपद्येति प्राप्यतया निर्दिष्टपरज्योतिःशब्दितब्रह्मपरौ प्राप्यतया प्राधान्यादव्यवहितत्वाच्च । ननु 'प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्' इत्यत्र विभक्त्यैकरूप्याद्व्यवहितस्यापि प्रजापतेः स इत्यनेन ग्रहणं दृष्टं न त्वव्यवहितस्य संप्रदानत्वेन प्रधानस्य वरुणस्य ग्रहणमित्युक्तं मीमांसकैः । 'आकाशाच्चन्द्रमसमेष सोमो राजा' [ छा० ५ । १० । ४ ] इत्यत्रैतच्छब्दस्य नाव्यवहिताभिसंभाव्यचन्द्रमसः परामर्शित्वं दृष्टमपि त्वभिसंभावितृपरत्वम् । ततश्चेहापि व्यवहितस्य संप्रसादशब्दितस्य जीवस्यैवैष आत्मेत्येतच्छब्देन ग्रहणमुचितं विभक्त्यैकरूप्यादिति चेन्न । प्रजापतिर्वरुणायेति वाक्ये स इत्यनेन प्रजापतिपरामर्शेऽश्वदानसंप्रदानरूपत्वेन स्वीयां वरुणदेवतामार्छत्प्राप्नोदित्यर्थो युज्यते । वरुणपरामर्शे तु वरुणस्याऽऽत्मीयाया देवतायाः प्रागप्रस्तुतत्वादर्थासंगत्या व्यवहितोऽपि प्रजापतिः परामृष्टो न विभक्त्यैकरूप्यमात्रेण । एष सोमो राजेति पितृयाणवाक्य एतच्छब्देन चन्द्रपरामर्शे तस्य सोमराजभावविधानवैयर्थ्याद्व्यवहिताभिसंभवितृपरामर्शित्वं न तु विभक्त्यैकरूप्यात् । प्रकृतेऽव्यवहितप्रधानभूतपरज्योतिःशब्दितपरमात्मपरित्यागे कारणाभावात् । प्रत्युत तेन व्यवहितसंप्रसादशब्दितजीवपरिग्रहे तस्य निरुपाधिकात्मत्वनिरतिशयसुखरूपत्वलक्षणामृतत्वदुःखासंभिन्नत्वरूपाभयत्वब्रह्मत्वविधानासंभवाच्च 'एष आत्मेति होवाच' इत्येतच्छब्देन प्राप्य-

भूतः परमात्मैव परामृश्यते । यद्यपि स्वेन रूपेणाभिनिष्पद्यत इति स्वरूपाविर्भावे कथित आविर्भवत्स्वरूपं किमित्यपेक्षायां प्रजापतिवाक्ये 'एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति' [ छा० ४ । १५ । १ ] इति निर्दिष्टं मुक्तरूपमित्येतदर्थकत्वेऽपि नानुपपत्तिस्तथाऽपि 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' [ छा० ८ । ३ । ४ ] इत्युत्तरवाक्यनिर्देक्ष्यमाणचेतनाचेतननियन्तृत्वार्थकसत्यनामत्वस्य मुक्तात्मन्यसंभवात्पूर्ववाक्यनिर्दिष्टोऽपि न जीवः परामृश्यतेऽपि तु प्राप्यं ब्रह्मैव । एष आत्मेति होवाचेत्येतावन्मात्रस्याऽऽविर्भवत्स्वरूपपरत्वम् । एतदमृतमभयमेतद्ब्रह्मेत्यत्र त्वेतच्छब्दस्य परज्योतिःशब्दितब्रह्मपरत्वमित्याश्रयणेऽपि नानुपपत्तिः । अनेन वाक्यसंदर्भेण परमात्मनो मुक्तप्राप्यत्वतत्स्वरूपाविर्भावयितृत्वलक्षणो महिमा प्रतिपादितो भवति । अत एव सूत्रकृताऽपि 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' [ छा० ८ । ३ । ४ ] इति दहरविद्यामध्यस्थवाक्ये जीवप्रतिपादनदर्शनाद्दहराकाशोऽपि जीव एवास्तु तस्य यावान्वा अयमित्यादिवाक्यसंदर्भप्रतिपादितभूताकाशोपमेयत्वस्य भूताकाशेऽनन्वयेन दहराकाशस्य भूताकाशत्वाभावेऽपि जीवे कथं चिन्निर्लेपत्वादिना भूताकाशोपमेयत्वसंभवादणुपरिमाणे जीवे दहरशब्दितालपपरिमाणत्वस्यापि संभवाद्दहराकाशो जीव एवास्त्विति 'इतरपरामर्शात्स इति चेत्' [ ब्र० सू० १।३।१८ ] इति सूत्रखण्डेनाऽऽक्षिप्य 'दहर उत्तरेभ्यः' [ ब्र० सू० १ । ३ । १४ ] 'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च' [ ब्र० सू० १ । ३ । १५ ] 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' [ ब्र० सू० १ । ३ । १६ ] इति सूत्रत्रयोक्तानां परमात्मधर्माणां जीवेऽसंभवान्न जीवो दहराकाश इति 'नासंभवात्' [ ब्र० सू० १ । ३ । १८ ] इति सूत्रखण्डेन परिहृत्य तर्हि ब्रह्मप्रकरण एष संप्रसादोऽस्माच्छरीरात्समुत्थायेति जीवपरामर्शः किमर्थ इत्याशङ्क्य मुक्ते तत्स्वरूपाविर्भावयितृत्वलक्षणपरमात्ममहिमप्रकाशनार्थो जीवपरामर्श इति 'अन्यार्थश्च परामर्शः' [ ब्र० सू० १ । ३ । २० ] इति सूत्रेण प्रतिपादितम् ।

तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

तानि ह वा एतानि त्रीण्यक्षराणि सत्तियमिति।

सत्तियमिति सत्यनाम त्र्यक्षरात्मकमित्यर्थः।

तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यम्।

अत्रामृतमर्त्यशब्दाभ्यां चेतनाचेतने निर्दिश्येते।

अथ यद्यं तेनोभे यच्छति।

अमृतत्वमर्त्यत्वरूपेणोपलक्षिते उभे यच्छतीति यमित्यर्थः। तदेवोपसंहरति—

यदनेनोभे यच्छति तस्माद्यम्।

अनेन चेतनाचेतनत्वरूपेणोपलक्षिते उभे यतो यच्छति तस्माद्यमित्यर्थः। नामनिर्वचनाभिज्ञं स्तौति—

अहरहर्वा एवंवित्स्वर्गं लोकमेति॥ ५॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्य
तृतीयः खण्डः॥ ३॥

---

स्पष्टोऽर्थः॥ ५॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य
तृतीयः खण्डः॥ ३॥

---

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय।

उक्तलक्षण आत्मा सेतुरिव विधृतिर्विधारक इत्यर्थः। किमर्थं सेतुर्विधृतिरित्यत्राऽऽह—एषां लोकानामसंभेदायेति। असंभेदोऽसंकरः। यद्ययं परमात्मा स्वशासनेन जगन्न धारयेत्, सर्वधर्माणां सांकर्यमेव स्यात्। पृथिव्या गन्धवत्त्वं जलस्य शैत्यं तेजस औष्ण्यमित्यादयो धर्माः परमात्माज्ञया व्यवस्थिता भवन्ति। सिनोति बध्नाति स्वस्मिंश्चिदचिद्वस्तुजातमसंकीर्णमिति सेतुरुच्यत इति 'सामान्यात्तु' [ब्र० सू० ३। २। ३२] इति सूत्रे भाषितम्।

नैतꣳ सेतुमहोरात्रे तरतो न जरा न
मृत्युर्न शोको न सुकृतं न दुष्कृतम् ।

"तरतिः प्राप्तिवचनः । वेदान्तं तरतीतिवदिति" तत्रैव भाषितत्वात् । एतं परमात्मसेतुमहोरात्रे परिच्छेदकत्वेन न प्राप्नुवतो जरादिकमपि न प्राप्नोति । उक्तमर्थं निगमयति—

सर्वे पाप्मानोऽतो निवर्तन्ते ।

शोकादिषु पाप्मशब्दस्यामुख्यत्वेऽपि सुकृतदुष्कृतयोरलौकिकमुमुक्ष्वनिष्टसाधनत्वलक्षणपापशब्दप्रवृत्तिनिमित्तसंभवात्पाप्मशब्दो मुख्य इति व्यासार्यैर्लघुसिद्धान्ते वर्णितम् । तत्र हेतुमाह—

अपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥

इति । ब्रह्मरूपो लोक एषोऽपहतपाप्मा । हिर्हेतौ यस्मादयमपहतपाप्मा तस्मात्सर्वे पाप्मानोऽतो निवर्तन्त इत्यर्थः । पापहेतुकर्माचरणेऽपि तदुत्पत्तिप्रतिबन्धकशक्तियोगित्वमेव ह्यपहतपाप्मत्वं तस्मात्पाप्मशब्दमुख्यार्थसुकृतदुष्कृतयोस्तत्फलभूतजरारोगादीनां च न प्रसक्तिरित्यर्थः ॥ १ ॥

तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति
विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति ।

यस्मादयमपहतपाप्मा तस्मादेवैतं परमात्मलक्षणं सेतुं प्राप्य पूर्वमान्ध्यायुधवेधज्वरादियुक्तदेहोऽपि संस्तद्दोषरहितदिव्यदेहयुक्तो भवतीत्यर्थः ।

तस्माद्वा एतꣳ सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥

परमात्मानं प्राप्तस्य तामिस्रा तामसी रात्रिरपि दिवैव । तस्याज्ञानप्रसक्तेरभावादहःसदृशी सा रात्रिः । अहोरात्रयोर्न विशेष इत्यर्थः । तत्र हेतुः—एष पूर्वोक्तो ब्रह्मलोको हि यस्मात्सकृद्विभातो सर्वदा ब्रह्मस्वरूपप्रकाशस्यानावृततया भासमानत्वादित्यर्थः ॥ २ ॥

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुवि-
न्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाᳬ सर्वेषु
लोकेषु कामचारो भवति ॥ ३ ॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अनुविन्दन्ति

तत्तत्रैवं सति य एतं परमात्मानं स्त्रीविषयतृष्णात्यागरूपब्रह्मचर्य-पूर्वकशास्त्राचार्योपदेशादिना जानन्ति तेषामेवेद्दशब्रह्मप्राप्तिः सर्वलोकानुभवश्च । न ब्रह्मचर्यादिहीनानामित्यर्थः । सूत्रितं च—'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' [ ब्र० सू० १ । ३ । १६ ] इति 'एष सेतुर्विधरण एषां लोकानामसंभेदाय' [ बृ० ४ । ४ । २२ ] इति परब्रह्ममहिमत्वेन प्रसिद्धस्य जगद्विधरणमहिम्नो दहराकाश उपलभ्यमानत्वाद्दहराकाशः परं ब्रह्मेति ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य
चतुर्थः खण्डः ॥ ४ ॥

---

यज्ञेष्टसत्त्रायणमौनानाशकायनारण्यायनाख्यानि कर्माणि ब्रह्मचर्यसाध्यत्वाद्ब्रह्मलोकसाधनत्वेन प्रस्तुतं प्राङ्निर्दिष्टं ब्रह्मचर्यमेवेति स्तौति—

अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्।

लोके यत्पाकयज्ञहविर्यज्ञादिकं कर्म वैदिका यज्ञ इत्याचक्षते तद्ब्रह्मचर्यसाध्यत्वाद्ब्रह्मचर्यमेवेत्यर्थः । ननु यज्ञस्य कथं ब्रह्मलोकसाधनब्रह्मचर्यसाध्यत्वं न हि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यस्य यज्ञो द्वारमित्याशङ्क्य ब्रह्मचर्यसाध्यस्य ब्रह्मप्राप्तिसाधनस्य ज्ञानस्य यज्ञरूपत्वाज्ज्ञानसाधनस्य ब्रह्मचर्यस्य यज्ञसाधनत्वमप्यस्तीति प्रतिपादयितुमेकशब्दरूपितत्वेन तयोरैक्यं संपादयति—

ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते।

ब्रह्मचर्यपुरःसरब्रह्मज्ञानवान्हि तं ब्रह्मलोकं विन्दते। तत्र यो ज्ञाता ब्रह्मचर्येणेत्युक्त्या यो ज्ञातेत्यस्य ब्रह्मचर्यसाध्यत्वं प्रतीयते यो ज्ञातेति

शब्दैकदेशस्य यो ज्ञशब्दस्य यज्ञशब्दस्य च साम्यकृताभेदाध्यवसायेन तदर्थाभेदाध्यवसायमूला यज्ञस्यापि ब्रह्मचर्यसाध्यतेति भावः। एवमुत्तरत्रापि।

अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ॥ १ ॥

अत्रापि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यसाध्यस्य परमात्मपूजनस्य दर्शपूर्णमासादीष्टीनां चेष्ट्वेत्येकशब्दरूषितत्वेनाभेदाध्यवसायः ॥ १ ॥

अथ यत्सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दते।

अत्रापि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यसाध्यस्य विषयान्तरविमुखीकरणलक्षणस्य सच्छब्दितात्मत्राणस्य गवामयनादिसत्रस्य च सत्रायणरूपैकशब्दरूषितत्वेनाभेदाध्यवसायः।

अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवाऽऽत्मानमनुविद्य मनुते ॥ २ ॥

वाङ्नियमनलक्षणमौनस्य ब्रह्मचर्यसाध्यात्मश्रवणाधीनमननस्य च मौनरूपैकशब्दरूषितत्वेनाभेदाध्यवसायः ॥ २ ॥

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते।

ब्रह्मचर्यसाध्यनाशाभावरूपफलस्य चानशनलक्षणमार्गस्य चानाशकायनशब्दैक्यकृतोऽभेदः।

अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि।

इतो भूलोकापेक्षया तृतीये द्युशब्दिते ब्रह्मलोकेऽरण्यसंज्ञकार्णवौ स्तः। अतश्चारण्यायनस्य ब्रह्मलोकस्य चारण्यवासस्य चारण्यायनशब्दकृतोऽभेदः। भुवं चतुर्मुखलोकान्तान्तरिक्षलोकं चापेक्ष्य भगवल्लोकस्य

तृतीयत्वं न तु चतुर्मुखलोकस्य तृतीयत्वमिति मन्तव्यम् । प्रश्नोपनिषदि चतुर्मुखलोकस्याप्यन्तरिक्षलोककोटौ निवेशितत्वात्प्रसङ्गाद्भगवल्लोकचिह्नानि कानिचिदाह—

तदैरंमदीयꣳ सरस्तदश्वत्थः सोमसवनः ।

तत्तत्रैरंमदीयनामकं सरः । अस्तीति शेषः । इरयाऽमृतेन माद्यन्ते यस्मिंस्तदैरंमदीयममृतमयं सर इत्यर्थः । सोमसवननामाऽश्वत्थश्चास्तीत्यर्थः । चन्द्रवदाह्लादकरत्वात्सोमसवनत्वम् ।

तदपराजिता पूर्ब्रह्मणः ।

तत्तत्राब्रह्मविद्भिः प्राप्तुमशक्यत्वेनापराजिता नाम परब्रह्मणः पुरी चास्तीत्यर्थः ।

प्रभुविमितꣳ हिरण्मयम् ॥ ३ ॥

मण्डपमिति शेषः । प्रभुणा भगवता विशेषेण मितं स्वभोगभूमित्वेन विशेषतः परिगृहीतमित्यर्थः । भगवतो व्याप्तत्वेऽपि नित्यविग्रहविशिष्टतया संनिधानाद्विमितत्वम् । अतश्च तद्देशविशिष्टब्रह्मप्राप्तिरेव ब्रह्मप्राप्तिरिति भावः ॥ ३ ॥

प्रसङ्गादाह—

तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्म-
चर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ
सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥

इति च्छान्दोग्योपनिषदष्टमप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

---

ब्रह्मप्राप्तिसाधनीभूतारण्यशब्दितार्णवद्वयप्राप्तेर्ब्रह्मचर्याधीनत्वाद्ब्रह्मचर्यमेव सर्वसाधनोत्कृष्टमिति भावः ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य
पञ्चमः खण्डः ॥ ५ ॥

---

उक्तब्रह्मलोकप्राप्तिसाधनतया मूर्धन्यनाडीगमनं प्रस्तौति—

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणि-
म्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येति ।

हृदयसंबन्धिन्यो नाड्यो नानारूपसूक्ष्मान्नरसपूर्णास्तिष्ठन्तीत्यर्थः ।

असौ वा आदित्यः पिङ्गल एष शुक्ल
एष नील एष पीत एष लोहितः ॥ १ ॥

आदित्यस्य नानारूपाश्रयत्वं च मधुविद्याप्रसिद्धं प्रत्यक्षसिद्धं च । ततश्चैतद्रश्मिसंबन्धादेवान्नरसस्य नानारूपत्वं चेति भावः ॥ १ ॥

तद्यथा महापथ आतत उभौ ग्रामौ गच्छ-
तीमं चामुं चैवमेवैता आदित्यस्य रश्मय
उभौ लोकौ गच्छन्तीमं चामुं च ।

यथा विस्तीर्णो महान्पन्था ग्रामद्वयप्रविष्टो भवति तथाऽऽदित्यरश्मयो लोकद्वयानुप्रविष्टा इत्यर्थः । लोकद्वयप्रवेशनक्रममाह—

अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो
नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥

प्रतायन्ते संतताः सृप्ताः प्रविष्टाः । रश्मीनामुभयलिङ्गत्वात्ते ता इति च निर्देशः । शिष्टं स्पष्टम् ॥ २ ॥

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न
विजानात्यासु तदा नाडीषु सृप्तो भवति ।

तत्तत्रैवं सतीत्यर्थः । यत्र यदा समस्त उपसंहृतकरणमण्डलोऽत एव संप्रसन्नो बाह्यविषयसंपर्कजनितकालुष्यशून्यः स्वप्नं न पश्यतीत्येतत्स्वप्नादर्शनं सुषुप्तिरिति यावत् । तदाऽऽसु नाडीषु प्रविष्टो भवति पुरीतद्ब्रह्मगमनाय नाडीषु प्रविष्टो भवति । 'नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' [बृ० २।१।१९] इति श्रुत्यन्तरान्नाडीपुरीतद्ब्रह्मणां समुच्चयेन सुषुप्तिस्थानत्वस्य 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' [ब्र० सू०३।२।७]

इत्यत्र स्थितत्वान्नाडीनामपि सुषुप्तिस्थानत्वमस्तीति द्रष्टव्यम् ।

तं न कश्चन पाप्मा स्पृशति ।

सुषुप्तौ सतोऽपि कर्मणः फलजननसामर्थ्यं नास्तीत्यर्थः । न कश्चन पाप्मा स्पृशतीत्यस्मिन्वाक्येऽनुष्ठानाशक्तिर्विवक्षितेति व्यासार्यवचनस्याप्ययमेवार्थः । तत्र हेतुमाह—

तेजसा हि तदा संपन्नो भवति ॥ ३ ॥

'सता सोम्य तदा संपन्नो भवति' [छा० ६ । ८ । १] इति श्रुतेः । तेजःशब्दः प्रकाशकत्वगुणयोगाद्ब्रह्मपरः । ब्रह्मणि संपत्तिर्नाम देहेन्द्रियाधिष्ठातृत्वराहित्येन ब्रह्मण्यवस्थानम् । संपत्त्यधिकरणस्य करणत्वविवक्षया तृतीयानिर्देशः ॥ ३ ॥

अथ यत्रैतदबलिमानं नीतो भवति ।

अथशब्दोऽर्थान्तरप्रस्तावार्थः । अबलस्य भावोऽबलिमाऽबलत्वं रोगादिकृतं दौर्बल्यं नीतो भवतीत्येतद्यत्र यदेत्यर्थः । यदा दौर्बल्यं प्राप्तवानित्यर्थः ।

तमभित आसीना आहुर्जानासि मां जानासि मामिति ।

तं तादृशदशाविशिष्टं परितो वर्तमाना बान्धवा मां जानासि किं मां जानासि किमित्याहुः । यद्वा, एतदेतासु नाडीषु स्थित इत्यर्थः ।

स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते ।

एतैरेव रश्मिभिः पूर्वोक्तैरादित्यरश्मिभिरित्यर्थः । इदं च वाक्यमुत्क्रान्तिपादे चिन्तितम् । निशि मृतस्य विदुषो रश्म्यनुसारेण गमनासंभवाद्रश्मिभिरेव गमनमिति न नियमः । अथैतैरेव रश्मिभिरूर्ध्वमाक्रमत इति वचनं तु पक्षप्राप्तविषयम् । एवकारोऽत्यन्तायोगव्यवच्छेदार्थ इति पूर्वपक्षे प्राप्त उच्यते—'रश्म्यनुसारी' [ब्र० सू० ४ । २ । १८]

विद्वान्नियमेन रश्मीननुसृत्यैव गच्छति । एतैरेव रश्मिभिरित्येवकारस्य क्रियासंगतैवकारत्वाभावेनात्यन्तायोगव्यवच्छेदकत्वासंभवेनान्ययोगव्यवच्छेदकत्वस्यैव वक्तव्यत्वात् । यदुक्तं निशि मृतस्य रश्म्यसंभवाद्रश्मीननुसृत्य गमनं नोपपद्यत इति तन्न । निदाघसमये हि रात्रावप्यूष्मोपलम्भाद्रश्मिसंभवः । हेमन्तादौ तु हिमाभिभवाद्दुर्दिन इवोष्मानुपलम्भः । श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः ‘ तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ’ इति ।

स ओमिति वाऽऽहोद्वा मीयते ।

स विद्वान्

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः [ गी० १७ । २३ ] तस्योदिति नाम ’ [ छा० १ । ६ । ७ ] इति प्रमाणप्रसिद्धं परमात्मानमाह कीर्तयति कीर्तयन्नेव मीयते प्रमीयते च । मरणकाले तस्य भगवन्नामस्मरणं संभवति । यद्वा स एतै रश्मिभिरुन्मीयत उन्नीयते । एको वाशब्दोऽवधारणार्थः ।

स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति ।

मनोवेगेनाऽऽदित्यं स गच्छतीत्यर्थः । न च ‘स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति’ इति त्वरावचनेन रश्म्यनुसारिमार्गस्य मार्गान्तरवैलक्षण्यप्रतीतेर्मार्गभेदः शङ्क्यः । ‘अर्चिरादिना तत्प्रथितेः’ [ब्र० सू० ४।३।१] इत्यधिकरणे नानाशाखासु तस्यैव मार्गस्य प्रथितेः प्रत्यभिज्ञानादर्चिरादिरेक एव मार्गः । अतोऽर्चिरादिनैव मार्गेण विद्वान्गच्छतीति समर्थितत्वात् । स यावत्क्षिप्येन्मन इति त्वरावचनस्य काश्मीरापेक्षया मगधान्क्षिप्रं गच्छतीतिवद्न्तरालस्वर्गाद्यपेक्षयाऽऽदित्यगमनस्य शैघ्र्येण स यावत्क्षिप्येन्मन इति त्वरावचनस्याप्युपपत्तेर्न दोषः ।

एतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥५॥

विदुषां ब्रह्मलोकस्य द्वारं प्रपदनं प्रपद्यतेऽनेनेति प्रपदनं प्राप्तिसाधनं य आदित्यः । द्वारापेक्षया नपुंसकनिर्देश एतदिति । अविदुषां च निरो-

धकः। अविद्वांसो हि सूर्यमण्डलभेदासामर्थ्यान्न गन्तुं शक्नुवन्तीत्यर्थः ॥ ५ ॥

तदेष श्लोकः।

तत्तस्मिन्विषय एष वक्ष्यमाणः श्लोकः प्रवृत्त इत्यर्थः।

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानम-
भिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्व-
ङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति॥६॥

इति च्छान्दोग्योपनिषदि अष्टमप्रपाठकस्य
षष्ठः खण्डः ॥ ६ ॥

---

मूर्धन्यनामनाड्या गच्छन्मुक्तिं प्राप्नोति विष्वग्गतयो नानागतय इतरा नाड्यस्तूत्क्रमणमात्रे प्रभवन्ति न त्वमृतत्वस्थानीभूतोर्ध्वगतावित्यर्थः। यद्वा विष्वगुत्क्रमणेऽन्योत्क्रमणेऽन्या नाड्य उपयुज्यन्त इत्यर्थः। शिष्टं स्पष्टम् ॥ ६ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य
षष्ठः खण्डः ॥ ६ ॥

---

एवं दहरविद्यां समाप्य तदङ्गभूतां प्रत्यगात्मविद्यां प्रस्तौति—

य आत्माऽपहतपाप्मा विजरो विमृत्युर्वि-
शोको विजिघत्सोऽपिपासः सत्यकामः
सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासि-
तव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च
कामान्यस्तमात्मानमनुविद्य विजानाती-
ति ह प्रजापतिरुवाच ॥ १ ॥

अत्रानुविद्येति वाक्यार्थज्ञानमुच्यते विजानातीति ध्यानं लघुसिद्धान्ते तथैव भाषितत्वात् ॥ १ ॥

तद्धोभये देवासुरा अनुबुबुधिरे ।

तत्प्रजापतिवचनमैतिह्यरूपेण देवा असुराश्चोभयेऽपि श्रुतवन्त इत्यर्थः ।

ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाꣳश्च लोकानाप्नोति सर्वांश्च कामानिति ।

अन्विच्छामः श्रवणमननाभ्यामवगच्छाम इत्यर्थः ।

इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम् ।

देवानां मध्य इन्द्रश्चासुराणां मध्ये विरोचनश्च प्रजापतिसमीपं गन्तुं प्रस्थितौ ।

तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥

असंविदानौ परस्परासूयया परस्परसंमन्त्रणमकुर्वन्तावित्यर्थः । शिष्टं स्पष्टम् ॥ २ ॥

तौ ह द्वात्रिꣳशतं वर्षाणि ब्रह्मचर्यमूषतुः ।

द्वात्रिंशद्वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यं चेरतुः ।

तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति ।

किंप्रयोजनमुद्दिश्योषितवन्तावित्यर्थः ।

तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह भगवतो वचो वेदयन्ते तमिच्छन्ताववास्तमिति ॥ ३ ॥

य आत्माऽपहतपाप्मेत्यादि हि भगवतः पूज्यस्य तव वचो वेदयन्त ऐतिह्यरूपेण जनास्तमिच्छन्ताववास्तं तज्ज्ञानमिच्छन्तावावां ब्रह्मचर्यमुषितवन्ताविति तौ प्रजापतिं प्रत्यूचुरित्यर्थः । अवास्तमिति पुरुषव्यत्ययश्छान्दसः ॥ ३ ॥

तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ।

अत्र य एषोऽक्षिणि पुरुषो दृश्यत इति नेहाक्षिपुरुषः परमात्मा 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि ' [ छा० ८ । ९ । ३ ] इत्युपक्रम्य स्वप्नाद्यवस्थानामभिधानात् । न चायं छायादिपुरुषः प्रजापतिनोपदिश्यत आत्मजिज्ञासयोपसन्नयोस्तयोस्तदुपदेशायोगात्, आत्मत्वामृतत्वाभयत्वब्रह्मत्वाद्ययोगाच्च । अतोऽत्र प्रजापतिना प्रत्यगात्मैवोपदिश्यते । न चेहाक्षिणि जीवस्थितिरुपदिश्यतेऽपि त्वक्षिप्रसादविकाराभ्यां जीवस्थितिगती निश्चीयेते । अतोऽक्ष्णो जीवस्थितिगतिसूचकत्वादक्षिणि दृश्यत इत्युक्तं कर्मणः सामर्थ्यसूचकत्वाभिप्रायेणास्मिन्कर्मण्यस्य सामर्थ्यं दृष्टमितिवत् । ततश्च गृहे स्थित्वा निर्गच्छन्पुरुषो यथा गृहादन्य एवं शरीरे स्थितिगतिमानात्माऽपि शरीरादन्य इत्युक्तं भवति । अमृतमिति निरतिशयसुखरूपत्वम् । अभयमिति दुःखासंभिन्नत्वम् । ब्रह्मेत्यसंकुचितविज्ञानतया बृहत्त्वं चोक्तमिति व्यासार्यैरुक्तम् ।

अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति ।

एवं प्रत्यगात्मनि प्रजापतिनोपदिष्टे छायापुरुष आत्मेत्युपदिष्ट इति भ्रान्त्या स्वगृहीतच्छायापुरुषात्मत्वदृढीकरणाय जलादर्शादिप्रतिबिम्बोऽप्यक्षिप्रतिबिम्बाभिन्नात्मैवोत तद्भिन्नोऽनात्मेत्यभिप्रायेण पप्रच्छतुरित्यर्थः । एवं ताभ्यां पृष्टः प्रजापतिस्तयोर्भ्रान्तिमनिराकुर्वन्नेवाऽऽह—

एष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति स होवाच ॥ ४ ॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

(१) यश्चक्षुषि दृश्यत्वेन मयोक्तः स आत्मा सर्वान्तरो जलादिष्वपि न भिद्यत इत्युत्तरं ददावित्यर्थः । शिष्यभ्रान्तिमनिराकृत्य तद्भ्रान्तिदृढीकरणायेत्थमुत्तरं ददत आचार्यस्यायमभिप्रायः—सुरासुरेन्द्राविन्द्रविरोचनौ

(१) सर्वान्तर इति निर्देशस्याभिप्राय: ८८ पृष्ठे द्वितीयपङ्क्तौ द्रष्टव्य:।

स्वात्मन्यध्यारोपितपाण्डित्यमहत्त्वातिशयौ तथैव जगति प्रसिद्धौ च। तद्यदि युवां भ्रान्ताविति ब्रूयां तदा चित्तावसादात्पुनः प्रश्नग्रहणधारणेषु भग्नोत्साहौ स्याताम्। अतो यथाश्रुतप्रश्नमात्रस्योत्तरमिदानीं वक्तव्यमिति। अनेन चोत्तरेण पूर्वोत्पन्नप्रतिबिम्बात्मभ्रमो दृढी भवति चेद्भवतु। दृढीभूतोऽपि भ्रम उदशरावनिरीक्षणनियोजनोपायेनापनेष्यत इति। अत एव तद्भ्रमापनयनार्थमाह—'उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति' [छा० ८।८।१]। उदशरावावेक्षणे तौ नियुयोज। अत्र व्यासार्यैरेतादृशाभिप्रायपरिकल्पनस्यातिक्लिष्टत्वात् 'योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायते' इत्येतावानपि प्रश्न एव। प्रश्नवाक्यमध्यगत इतिशब्दः प्रश्नान्ते निवेशितव्यः। इति होवाचेत्येतदुत्तरस्योदशरावब्राह्मणस्य शेषभूतम्। उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमितीति होवाचेत्युत्तरेणान्वयः। तत्र चैक इतिशब्दः समाप्तिद्योतकोऽन्यस्तु प्रकारवचनः। अथ वा कतम एष इतीत्यत्रेतिशब्दो वक्ष्यमाणवचनोऽन्यस्तूक्तवचनः। यद्वा प्रश्नवाक्ये प्रथम इतिशब्दः प्रकारवचनो द्वितीयस्तु प्रश्नसमाप्तिद्योतकः। होवाचेति तूत्तरशेषभूतम्। प्रब्रूतमिति होवाचेत्यन्वय इत्येवं नेतिशब्दद्वयवैयर्थ्यमित्यभिप्रेत्य प्रजापतिहृदयानभिज्ञानेन च्छायापुरुष उपदिष्ट इति मत्वा पुनः पप्रच्छतुः—योऽयं भगवोऽप्सु परिख्यायत इत्यादिना। सर्वेष्वन्तेषु नेत्रादिस्थानेषु परिख्यायते कतम एष इत्यर्थ इत्युक्तम्। चक्षुरादिप्रतिबिम्ब एवाऽऽत्मेति स्वग्रहणदार्ढ्यार्थं पुनरपि पप्रच्छतुरिति भावः। अप्सु परिख्यायत आदर्शे परिख्यायत इत्येवंप्रकारेण जलादिष्वन्तेषु स्थानेषु यो दृश्यते स नेत्रे दृश्यमान एष भवदुक्त एव किमुतान्यः, कतम एष इत्यर्थ इति व्यासार्याणामभिप्रायः ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य सप्तमः खण्डः ॥ ७ ॥

---

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति।

उदकपूर्णे शराव आत्मानं दृष्ट्वाऽऽत्मसंबन्धिनमनुपपन्नतया भासमानं सम्यगनवगतमंशं युवां वदतमितीत्युक्तवान्।

(१) 'इति स होचः' इत्येतत् उत्तरस्योदशरावब्राह्मणस्य शेषभूतम् इति पाठो नियतः।

तौ होदशरावेऽवेक्षांचक्राते।

तौ ह प्रतिबिम्बमवलोकितवन्तौ। अवलोक्यापि दोषास्फुरणात्तूष्णीमुषितवन्तौ तयोरनुपपत्त्यस्फूर्तिं ज्ञात्वा किं पश्यथ इति स्वयमेव प्रजापतिरुवाचेत्याह—

तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ॥ १ ॥

इदं प्रतिरूपमात्मानं पश्याव इति प्रतिबिम्बात्मभ्रममेवोद्घाटितवन्तावित्यर्थः ॥ १ ॥

तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥

तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलंकृतौ सुवसनौ परिष्कृताविति।

आवां साध्वलंकृतौ सुवसनौ परिष्कृतौ स्वो भवाव इतीदं यथैव तथैवेमावपि प्रतिबिम्बौ साध्वलंकारादियुक्ताविति प्रत्यूचतुरित्यर्थः। अत्रोदशरावावेक्षणालंकृतदेहप्रतिबिम्बनिरीक्षणयोर्नियुञ्जानस्य प्रजापतेरयमभिसंधिः—आगमापायशालिद्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूतकेशनखवस्त्रालंकारादिलक्षणदोषगुणयुक्ताव्यवस्थितदेहानुकारिदोषगुणवत्त्वाद्देहवत्तत्प्रतिबिम्बोऽप्यनात्मा निरतिशयसुखत्वदुःखासंभिन्नत्वलक्षणामृतत्वाभयत्वशून्य इति जानीतामिति। एवं द्विविधनियोजनेऽपि तयोरप्रक्षीणकल्मषतया दोषादर्शनेन प्रतिबिम्बात्मभ्रमो नापनीतः। ततः प्रजापतिर्भ्रान्तिनिराकरणार्थं मया कृतस्य द्विविधप्रतिबिम्बदर्शनस्याभिप्रायमिमावप्रक्षीणकल्मषत्वान्नावगच्छतः। प्रत्यक्षं च युवां भ्रान्ता-

विति वक्तुमप्यनर्हौ । तदिदानीमेतदीयहृदयानुरोधेन प्रतिबिम्बमेव निर्दिश्य सर्वान्तरं परमात्मानं मनसि निधायैष एवाऽऽत्मेत्युपदेशेन तयो-राकाङ्क्षां निवर्तयिष्यामि । कालेन कल्मषे प्रक्षीणे मद्वचनसंदर्भस्य सर्वस्याप्यभिप्रायं स्वयमेवावगमिष्यत इति विचिकित्समानौ वा मत्स-मीपमागमिष्यत इति मत्वाऽऽह—

एष आत्मेति होवाचैतदमृतमभयमेतद्ब्र-
ह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥

शान्तहृदयौ निवृत्ताकाङ्क्षावित्यर्थः ॥ ३ ॥

तौ हान्वीक्ष्य प्रजापतिरुवाच ।

एवं तयोः प्रतिनिवृत्तयोः सतोः प्रजापतिर्भ्रान्तिगृहीतार्थश्रद्धयेमौ विनष्टौ मा भूताम्, इदमपि मद्वचनं य आत्मेतिवचनवत्कर्णाकर्णिकया शृणुतामित्यभिप्रेत्योवाचेत्यर्थः । उक्तिमेवाऽऽह—

अनुपलभ्याऽऽत्मानमननुविद्य व्रजतो
यतर एतदुपनिषदो भविष्यन्ति देवा
वाऽसुरा वा ते पराभविष्यन्तीति ।

एताविन्द्रविरोचनावात्मस्वरूपं श्रवणमननाभ्यामज्ञात्वा गच्छतः । यतरे देवा वाऽसुरा वैतदुपनिषदो भविष्यन्ति । उपनिषच्छब्द उपदेश-परः । अनयोरुपदेशाद्भ्रान्तिगृहीतार्थविषयकनिश्चया ये ह भविष्यन्ति ते पराभविष्यन्ति नित्यसंसारिणो भविष्यन्तीत्यर्थः ।

स ह शान्तहृदय एव विरोचनोऽसुरा-
ञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाच ।

विरोचनस्तु प्राजापत्यस्य द्विविधदेहच्छायादर्शननियोगस्य देहानु-कारित्वाच्छायाया देह एवाऽऽत्मेति सूचने तात्पर्यम् । अलंकृतदेहच्छायां निर्दिश्य, एष आत्मेत्युपदेशस्य नीलानीलयोरादर्शे दृश्यमानयोर्वाससो-र्यन्नीलं तन्महार्घमिति वचनस्य च्छायानिमित्ते वाससी वाऽलंकृतदेहे तात्पर्यमिति मन्वानो देह एवाऽऽत्माऽलंकारादिभिः परिचरणीय इति निश्चित्य राज्यं प्राप्यासुरेभ्यस्तथैवोपादिक्षदित्यर्थः ।

आत्मैवेह महय्य आत्मा परिचर्य
आत्मानमेवेह महयन्नात्मानं परिचर-
न्नुभौ लोकाववाप्नोतीमं चामुं चेति॥४॥

आत्मैव देह एव महय्यः पूज्य इत्यर्थः । उभौ लोकाविति सर्वलोक-सुखानुभवोऽपि शरीरगत एवेति भावः ॥ ४ ॥

स संप्रदायोऽद्याप्यनुवर्तत इत्याह—

तस्मादप्यद्येहाददानमश्रद्दधानमयजमान-
माहुरासुरो बतेत्यसुराणाꣳ ह्येषोपनिषत् ।

यस्मादसुरेभ्य एवेयमुपनिषत्प्रवृत्ता तस्मादिह लोकेऽद्यापि विशिष्टा यागदानश्रद्धाविधुरं पुरुषमासुरस्वभावमित्याहुः । तत्र हेतुरसुराणां ह्येषोपनिषत् । यागदानश्रद्धावैधुर्ये हेतुभूता नास्तिक्यबुद्धिरसुराणा-मेव हि ।

प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति सꣳ-
स्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्या-
ष्टमः खण्डः ॥ ८ ॥

---

यत एवं देहस्यैवाऽऽत्मतया परिचरणीयत्वमत एव प्रेतस्य मृतस्य शरीरं भिक्षित्वा वस्त्रालंकारादिभिः पूजयन्ति कुणपसंस्कारेणैव परलोकजयं मन्यमाना इत्यर्थः ॥ ५ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्या-
ष्टमः खण्डः ॥ ८ ॥

---

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श ।

इन्द्रस्य शुद्धान्तःकरणत्वाद्देहात्मभ्रमोऽपि नाभूत् । स स्वराज्यं प्राप्य देवेभ्यस्तदुपदेशात्प्रागेव मध्ये मार्गे प्रतिबिम्बात्मन्यपीमं वक्ष्यमाणं दोष-मपश्यदित्यर्थः ।

यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतः ।

अयं देहप्रतिबिम्ब इत्यर्थः । परिष्कृतेऽपाकृतनखलोमादिक इत्यर्थः ।

एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाश-मन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

नासिका यस्य सदा स्रवति स स्रामः । भिन्नपाणिपादः परिवृक्णः । प्रतिबिम्बस्य बिम्बभूतशरीरगतसाध्वलंकृतत्वसुवसनत्वपरिष्कृतत्वानुवि-धायित्ववत्तद्गतान्ध्यस्राम्यपरिवृक्णत्वनाशानुविधायित्वावश्यंभावेनामृत-त्वाभयत्वात्मत्वादिकं भोग्यं न संभवतीत्यमन्यतेत्यर्थः ॥ १ ॥

स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच ।

स इन्द्र एयाय प्रजापतिमिति शेषः ।

मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन्पुनरागम इति ।

हे मघवञ्शान्तदोषशङ्को विरोचनेन सार्धं यद्यस्मात्त्वं गतवान्स किं प्रयोजनमभिलषन्नागतोऽसि । आगम इति गमेर्लुङि लृदित्वादङ् ।

स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायम-स्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्य-ति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

उक्तोऽर्थः ॥ २ ॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनु-

व्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥ ३॥

इति च्छान्दोग्योपनिषदष्टमप्रपाठकस्य नवमः खण्डः ॥ ९ ॥

---

त्वदुक्त

हे मघवंस्त्वदुक्तं सत्यमेव । उक्तमिममेवाऽऽत्मानं पुनरपि दोषशून्यतया प्रतिपादयिष्यामि । अन्तःकरणशुध्द्यर्थमितोऽपि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यं वसेत्याज्ञप्तो मघवांस्तथैव कृतवानित्यर्थः । एवमुषितवत इन्द्राय प्रजापतिर्वक्ष्यमाणमुवाचेत्यर्थः ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य नवमः खण्डः ॥ ९ ॥

---

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ।

निरतिशयसुखत्वा

यः स्वप्ने स्त्र्यादिभिः पूज्यमानश्चरत्येष स्वप्नद्रष्टा भोग्यतादिलक्षणामृतत्वादियुक्त आत्मेत्युक्तवानित्यर्थः । नायं पूर्वोक्तदेहगतान्ध्यस्राम्याद्यनुविधायित्वलक्षणदोषदुष्ट इति भावः ।

स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति । (सः स्वप्नात्मा।

तदिदं शरीरं यद्यप्यन्धं भवति तथाऽपि सोऽनन्धो भवतीति योजना ।

यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति॥ १ ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामः । स्वप्नात्मेति शेषः।

केचन विच्छाद-

स्पष्टोऽर्थः ।

घ्नन्ति त्वेवैनं विच्छादयन्तीव । घ्नन्ति

एवशब्द इवार्थः । एवं स्वप्नात्मानं केचन घ्नन्तीव, द्रावयन्तीव भान्तीत्यर्थः ।

अप्रियवेत्तेव भवत्यपि रोदितीव नाह-
मत्र भोग्यं पश्यामीति ॥ २ ॥

हन्यमानत्वद्राव्यमाणत्वबन्धुजनमरणाद्यप्रियवेत्तृत्वरोदितृत्वादिदर्शनात्स्वप्नावस्थस्य न भोग्यत्वमित्यर्थः ॥ १ ॥ २ ॥

स समित्पाणिः पुनरेयाय तꣳ ह प्रजापति-
रुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमि-
च्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः
शरीरमन्धं भवत्यनन्धः स भवति यदि स्राम-
मस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो।
घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भव-
त्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येव-
मेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्या-
ख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स
हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥४॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

उक्तोऽर्थः ॥ ३ ॥ ४ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य
दशमः खण्डः ॥ १० ॥

---

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजा-
नात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ।

यत्र यदा तदेतत्स एषः । सुपां सुलुगिति सोर्लुक् । समस्त उपसं-

हृतकरणग्रामः संप्रसन्नो बाह्यविषयसंपर्कजनितकालुष्यरहितः शिष्टं स्पष्टम् ।

स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवा-
नेतद्भयं ददर्श नाह खल्वयमेवꣳ संप्रत्यात्मानं
जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाश-
मेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

अहेत्याश्चर्ये । अयं सुषुप्तः संप्रति सुषुप्तिकालेऽयमहमस्मीति विशेषज्ञानाभावेन स्वेतरभूतविषयकज्ञानाभावेन च सुषुप्तो विनष्टप्राय इत्यर्थः । विनाशमेव विनाशमिव । अपीतोऽपिगतो विनष्टप्राय इत्यर्थः ॥ १ ॥

स समित्पाणिः पुनरेयाय तꣳ ह प्रजा-
पतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः
किमिच्छन्पुनरागम इति स होवाच नाह
खल्वयं भगव एवꣳ संप्रत्यात्मानं जानात्ययमह-
मस्मीति नो एवेमानि भूतानि विनाशमेवापीतो
भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्या-
स्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्च वर्षाणीति ।

एतस्मादन्यत्र नो एवोक्तादन्यन्न व्याख्यास्याम्यपि त्वेतं त्वेव पूर्वोक्तमेव निर्दोषतया भूयो व्याख्यास्यामीत्यर्थः । एतं त्वेवेत्येवकारस्य विवरणमेतत् ।

स हापराणि पञ्च वर्षाण्युवास तान्येकशतꣳ संपेदुः ।

तानि वर्षाण्याहत्यैकशतं संपन्नानीत्यर्थः ।

एतत्तद्यदाहुरेकशतꣳ ह वै वर्षाणि
मघवान्प्रजापतौ ब्रह्मचर्यमुवास ।

एकशतसंवत्सरानिन्द्रः प्रजापतेः संनिधौ ब्रह्मचर्यं चरन्नुवासेति लोके प्रसिद्धतया यदाहुस्तदेतदेवंविधमनेन प्रकारेणेति यावत् ।

तस्मै होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्यै-
कादशः खण्डः ॥ ११ ॥

---

एकशतवर्षब्रह्मचर्यनिर्मलीकृतान्तःकरणाय मघवते शुद्धात्मस्वरूपोपदेशयोग्यतां परीक्ष्योपादिक्षदित्यर्थः। अनया चाऽऽख्यायिकया बहुकालब्रह्मचर्यनिर्मलीकृतान्तःकरणतया संपन्नोपदेशयोग्यत्वायोपदेष्टव्यमित्यर्थः सूच्यते ॥ ३ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्यै-
कादशः खण्डः ॥ ११ ॥

---

मघवन्मर्त्यं वा इदꣳ शरीरमात्तं मृत्युना
तदस्यामृतस्याशरीरस्याऽऽत्मनोऽधिष्ठा-
नमात्तो वै सशरीरः प्रियाप्रियाभ्याम् ।

वा शब्द एवार्थे

हे मघवन्निदं शरीरमेव हि मरणधर्मि, न केवलं मरणधर्मित्वमात्रमपि तु मृत्युनाऽऽत्तं तद्ग्रासं च सततविनाशशीलमिति यावत्। इदं च शरीरे हेयत्वानुसंधानार्थमुक्तम् । एवंभूतं तदिदं शरीरं कर्मकृतशरीरराहित्यलक्षणामृतत्वस्वरूपस्याऽऽत्मनो भोगाधिष्ठानं कर्मवश्येन जीवेन भोगार्थं परिगृहीतमित्यर्थः। ततश्चाशरीरत्वमेव स्वरूपं सैवामृतत्वलक्षणा मुक्तिः सशरीरत्वमेव 'तदभाव इत्युक्तं भवति। ननु पुरुषार्थस्य हि मुक्तिरूपत्वं वक्तव्यं न ह्यशरीरत्वं पुरुषार्थः। अपि तु दुःखाभावः। ततश्च तस्यैवामृतत्वरूपत्वमुचितं न त्वशरीरत्वस्येत्यत्राऽऽह—

आत्तो एव सशरीरः प्रियाप्रियाभ्याम् । स्पष्टोऽर्थः । तदेवोपपादयति

न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।

कर्मारब्धशरीरयोगिनस्तदनुगुणसुखदुःखयोगस्यावश्यंभावित्वात्कर्मारब्धदेहसंबन्धाभावस्यैव पुरुषार्थतया मुक्तिरूपत्वमुपपद्यत इति भावः। व्यतिरेकं दर्शयति—

अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥

वावशब्दः प्रसिद्धाववधारणे वा ततश्चावश्यान्नापराहित्यलक्षणस्वरूपमेव मुक्तिरित्यर्थः। शिष्टं स्पष्टम् ॥ १ ॥

अशरीरो वायुः।

शिरःपाण्यादिलक्षणशरीरशून्यो वायुरित्यर्थः।

अभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि।

अभ्रादीनि चाशरीराणीत्यर्थः। 'अभ्रं भूत्वा मेघो भवति' [ छा० ५।१०।६ ] इत्यादिवदभ्रस्तनयित्न्वोरवस्थाभेदेन भेदो द्रष्टव्यः। अशरीराणां च प्रियाप्रियानन्वयो दृष्ट इति भावः।

तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योति-
रुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्त एवमे-
वैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योति-
रुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ॥ २ ॥

अत्र व्यासार्यैरुक्तः "वाय्वादीनामाकाशात्समुत्थानं नाम स्वकार्यकरणायोर्ध्वदेशेऽभिवृद्धिः। परशब्दो वाय्वादीनां कारणावस्थावाची। ज्योतिःशब्दस्तु कारणानां कार्योत्पादनद्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तः। वाय्वादीनि च स्वकारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति। वायुर्ह्यावहप्रवहादिरूपेण सप्तविधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते। विद्युच्च विद्युत्त्वं च हित्वा तेजस्त्वेन। अभ्रस्तनयित्नू चाभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण। एवं जीवोऽपि मार्गविशेषेण देशविशेषविशिष्टं परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेणाऽऽविर्भवतीत्येवमर्थे सत्येव दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवतीति वर्णितम्। इदं च वाक्यं फलपादे चिन्तितम्। "स्वेन रूपेणाभिनिष्पद्यत" इति देवादिरूपवत्साध्येन रूपेणाभिनिष्पत्तिरुच्यतेऽभिनिष्पत्तिशब्दस्याऽऽगन्तुकधर्मोत्पत्तिपरत्वात्। स्वशब्दः स्वात्मीयवचनः। आगन्तुकस्यापि रूपस्याऽऽत्मीयत्वात्स्वेन रूपेणेत्युपपद्यते। न तु "स्वेन रूपेणाभिनिष्पद्यत" इत्यत्र स्वशब्दस्याऽऽत्मार्थकत्वं वा निष्पत्तिशब्दस्याऽऽविर्भावार्थकत्वं वा युक्तं स्वरूपस्य नित्यत्वेन तत्प्राप्तेरपुरुषार्थत्वप्रसङ्गादिति पूर्वपक्षे प्राप्त उच्यते—'संपद्याऽऽविर्भावः स्वेनशब्दात्' [ ब्र०सू० ४।४।१ ] परं ज्योतिरुपसंपद्य स्वस्वरूपस्यैवाऽऽविर्भावो न त्वागन्तुकात्मीयधर्मोत्पत्तिः। तथाहि सति स्वेन रूपेणाभिनिष्पद्यत इत्यत्र स्वेनशब्दवैयर्थ्यप्रसङ्गात्। अतः स्वशब्दो नाऽऽत्मीयव-

चनोऽपि त्वात्मवचन एव । आविर्भावेऽप्यभिनिष्पत्तिशब्दो दृश्यते । युक्त्याऽथमर्थो निष्पन्नः । इदमेकं सुनिष्पन्नमित्यादिषु । नन्वात्मनः पूर्वसिद्धत्वात्कथमस्य पुरुषार्थत्वं तत्राऽऽह—'मुक्तः प्रतिज्ञानात्' [ब्र० सू० ४।४।२] स्वेन रूपेणाभिनिष्पद्यत इत्यस्य मुक्तो भवतीत्यर्थः । निवृत्ताविद्यातिरोधानो भवतीति यावत् । कथमिदमवसीयत इति चेत्प्रतिज्ञानात् । जागराद्यवस्थात्रयकलुषितं जीवं प्रस्तुत्य 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्' इति तस्यैवाशरीरत्वलक्षणं मुक्तत्वं 'मघवन्मर्त्यं वा इदꣳ शरीरम्' इत्यादिना चतुर्थेन पर्यायेण प्रतिपादयिष्यामीति प्रतिज्ञानान्निवृत्ताविद्यातिरोधानस्य स्वेन रूपेण साध्यत्वमस्त्येवेति न पुरुषार्थत्वहानिः । ननु निवृत्ततिरोधानस्याप्यात्मस्वरूपस्य कथंचित्साध्यत्वसंभवेऽपि तस्य न पुरुषार्थत्वे प्रमाणमस्तीत्यत्राऽऽह—'आत्मा प्रकरणात्' [ब्र० सू० ४।४।३] य आत्माऽपहतपाप्मेत्यादिवाक्यसंदर्भप्रतिपाद्यापहतपाप्मत्वादिगुणाष्टकविशिष्टतयाऽत्यन्तानुकूलत्वेन परमपुरुषार्थभूतोऽयमात्मा । अपहतपाप्मत्वादीनां कथं जीवसंबन्धित्वमित्यत्राऽऽह—प्रकरणादिति । अवस्थात्रयकलुषितं जीवं प्रकृत्यैवापहतपाप्मत्वादिगुणानामाम्नानादित्यर्थ इति स्थितम् । तथा स्वेन रूपेणाभिनिष्पद्यत इत्यत्र स्वरूपमपहतपाप्मत्वमेव न तु विज्ञानमात्रत्वम् । मुक्तस्य ब्रह्मसाम्यश्रवणेन ब्रह्मसाम्यापादकरूपाविर्भावस्यैव वक्तव्यतया ब्रह्मसाम्यापादकं स्वेन रूपेणाभिनिष्पद्यत इत्युच्यमानं स्वरूपं किमिति विवक्षायामस्मिन्प्रकरणेऽपहतपाप्मत्वादिगुणानामेवोपन्यासात्सत्यसंकल्पत्वकार्यजक्षणादिभ्यश्च ब्रह्मसंबन्धिनाऽपहतपाप्मत्वादिगुणलक्षणेन रूपेणाऽऽविर्भवतीति जैमिनिराचार्यो मन्यत इति 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' [ब्र० सू० ४।४।५] इति जैमिनिमतमुपन्यस्य 'प्रज्ञानघन एव' [बृ० ४।५।१३] विज्ञानघन एव [बृ० २।४।१२] इति ज्ञानैकरसत्वाम्नानेन निर्धर्मकत्वप्रतिपादनाज्ज्ञानमात्रस्वरूपेणाऽऽविर्भवतीति । 'चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः' [ब्र० सू० ४।४।६] इत्यौडुलोमिमतमुपन्यस्य 'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः' [ब्र० सू० ४।४।७] इति स्वसिद्धान्तमाविष्कृतवांस्तस्य चायमर्थः—एवमपि विज्ञानघनत्वेऽप्यपहतपाप्मत्वाद्युपन्यासेन 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति पूर्वसूत्रोक्तब्रह्मरूपस्यापि सद्भावात्सैन्धवघनस्य कृत्स्नस्य रसनेन्द्रिया-

वगतरसघनत्वस्य चक्षुराद्यवगतरूपकाठिन्यादेश्चाविरोधवन्मानान्तरावगतब्राह्मरूपस्य च मानान्तरावगतविज्ञानघनत्वस्य चाविरोध इति बादरायण आचार्यो मन्यते । विज्ञानघन एवेत्येवकारस्य स्वप्रकाशत्वाव्याप्तांशनिषेधमात्रपरत्वादिति स्थितम् । यत्परैरुक्तं शरीरात्समुत्थाय शरीर आत्माभिमानं हित्वा स्वेन परमात्मरूपेण साक्षात्कृत्य परं ज्योतिर्भवति परमात्मा भवतीत्यर्थः । न तु शरीरादुत्क्रमणं देशान्तरगमनं ब्रूते तदसत् । अपदार्थत्वात् । न हि शरीरात्समुत्थायेत्यस्य शरीर आत्माभिमानं हित्वेत्यर्थो भवति । स्वरूपसाक्षात्कारलक्षणस्वरूपाभिनिष्पत्त्यनन्तरभाविनः परज्योतिर्भावस्य च परं ज्योतिरुपसंपद्येति पूर्वकालतया निर्देशो न युक्तः । न हि सर्पात्समुत्थाय रज्जुमुपसंपद्येति च प्रयोगो दृष्टचरः । वाय्वभ्रादिदृष्टान्तवैरूप्यं च स्पष्टमेव । किंच निर्विशेषब्रह्मभावोऽत्र परं ज्योतिरुपसंपद्येत्यनेन विवक्षितश्चेत्सुषुप्तिदृशोद्घाटितस्य विशेषविज्ञानाभावप्रयुक्तविनष्टप्रायत्वदोषस्यापरिहृततया तद्दोषपरिहाराय मुक्त्यवस्थोपदेशोऽसंगतः स्यादित्यास्तां तावत् ॥ २ ॥

स उत्तमः पुरुषः स तत्र पर्येति ।

स उपसंपदनीय उत्तमः पुरुष इत्यर्थः । 'उत्तमः पुरुषस्त्वन्यः' [गी० १५ । १७] इति भगवत एवोत्तमपुरुषत्वेनोपसंपदनकर्तुर्युत्तमपुरुषत्वस्य बाधितत्वात् । स तत्र पर्येतीत्युत्तरवाक्यस्वारस्यभङ्गप्रसङ्गाच्च । स उपसंपत्ता तत्र परमात्मनि पर्येति तं परितोऽनुभवति । यद्वाऽनुसंचरतीत्यर्थः 'कामरूप्यनुसंचरन्यत्र यत्र धाता गच्छति' इति श्रुत्यन्तरात् ।

जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा ।

यथेष्टं भोगानवाप्नोतीत्यर्थः ।

नोपजनꣳ स्मरन्निदꣳ शरीरम् ।

स्त्रीपुंसयोरन्योन्योपगमेन जातमित्युपजनत्वं शरीरस्य तेन चापुरुषार्थत्वमुच्यते । अथ वोपजनं जनानां बन्धुजनानां समीपे शयितं कुणपमित्यर्थः । यद्यपि मुक्तः सर्वज्ञत्वात्त्यक्तमपि शरीरमनुभवत्येव तथाऽप्यब्रह्मात्मकतया दुःखरूपत्वेनानुभूतं शरीरं न मुक्तिदशायां तथाऽनुभवतीत्यर्थः । आत्मनोऽशरीरस्वभावत्वे प्राक्शरीरसंबन्धः किंनिबन्धन इत्यत्राऽऽह—

स यथा प्रयोग्य आचरणे युक्त एवमे-

वायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥

यथा, आचरणे शकटे प्रयोग्यो युग्योऽश्वो बलीवर्दो वा पाशेन युक्तो भवत्येवमेवायं प्राणः प्राणसहचारी प्रत्यगात्मा संसारदशायां कर्मपाशवशेन युक्तो भवति। अनेन युग्यशकटदृष्टान्तेन देहात्मनोर्व्यतिरेको दृढीकृतो भवति ॥ ३ ॥

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः

स चाक्षुषः पुरुषो दर्शनाय चक्षुः ।

आकाशं प्रकाशमालोकादि। अथ वा प्रकाश्यमानत्वादाकाशं रूपं ततश्चायर्थः—यत्र यस्मिन्नुपकरणत्वेनानुविषण्णं निबद्धं चक्षुराकाशमालोकं रूपं वा प्रकाशयतीति शेषः। यद्वा, आकाशं रूपादिप्रकाशकमित्यर्थः। स चाक्षुषः। चक्षुरुपकरणकः पुरुष आत्मेत्यर्थः। चक्षुरुपकरणकमुद्दिश्य पुरुषशब्देनाऽऽत्मत्वं विधीयते चक्षुस्तु तद्दर्शनाय करणमात्रम्। ततश्च चक्षुरादीनां रूपादीनामात्मनश्च करणत्वज्ञेयत्वज्ञातृत्वप्रदर्शनमुखेन शरीरेन्द्रियेभ्यो व्यतिरेक उपपादितो भवति।

अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्।

गन्धग्रहणकरणं घ्राणं ज्ञाता त्वात्मेत्यर्थः। अनेन घ्राणेन्द्रियव्यतिरेक उक्तो भवति।

अथ यो वेदेदमभिव्याहराणीति स आत्माऽ-

भिव्याहाराय वागथ यो वेदेदꣳ शृण-

वानीति स आत्मा श्रवणाय श्रोत्रम् ॥४॥

स्पष्टम् ॥ ४ ॥

अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दिव्यं चक्षुः।

सकलेन्द्रियविषयमननसाधनत्वान्मनो दिव्यं चक्षुरुच्यते। शिष्टं स्पष्टम्।

स वा एतेन दिव्येन चक्षुषा मनसैतान्का-

मान्पश्यन्रमते य एते ब्रह्मलोके ॥ ५ ॥

स एष उक्तरीत्या शरीरेन्द्रियग्रामविलक्षण आत्मा विधूतकर्मनिमित्तशरीरेन्द्रियः पुरुषो मनःशब्दाभिहितेन दिव्येन स्वाभाविकेन चक्षुषा ज्ञानेन पूर्वोक्तब्रह्मलोकशब्दितदहराकाशनिष्ठान्सर्वान्कामाननुभवन्मोदत इत्यर्थः ॥ ५ ॥

तं वा एतं देवा आत्मानमुपासते तस्मा-
त्तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः ।

एतादृशात्मस्वरूपस्य प्रजापतिना मघवत उपदिष्टत्वाद्देवाः सर्वे मघवत एतमात्मानमुपश्रुत्य तमेवोपासते । अतस्तेषां सर्वलोकसर्वकामावाप्त्युपलक्षितब्रह्मानुभवो भवति । असुराणां तु न तथेति भावः । अद्यत्वेऽपि तमुपासीनानां तत्प्राप्तिर्भवतीत्याह—

सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामा-
न्यस्तमात्मानमनुविद्य विजानाति ।

अद्यत्वेऽपि मनुष्याणामपि तमात्मानं श्रुत्वोपासीनानां सर्वलोकसर्वकामावाप्तिर्भवतीत्यर्थः । अत्र किं प्रमाणमित्यत्राऽऽह—

इति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्य
द्वादशः खण्डः ॥ १२ ॥

---

अत्र प्रत्यगात्मविद्याया ब्रह्मविद्याङ्गत्वेनाङ्गीभूतब्रह्मविद्याफलमेव तदङ्गभूतप्रत्यगात्मविद्यायां स्तुत्यर्थं निर्दिश्यत इति द्रष्टव्यम् । उक्तं च भगवता भाष्यकृता—प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तं, ब्रह्म प्रेप्सोर्हि जीवात्मनः स्वस्वरूपं च ज्ञातव्यमेव, स्वयमपि कल्याणगुण एव सन्ननवधिकातिशयासंख्येयकल्याणगुणगणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात् 'सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्' इति प्रजापतिवाक्ये कीर्त्यमानं फलं दहरविद्याफलमेवेति । ननु प्रजापतिविद्याया दहरविद्याङ्गत्वे दहरब्रह्मविद्याधिकृतायैवोपदेष्टव्या स्यादुपकोशलविद्याङ्गभूताग्निविद्यावत् । प्रकृते च दहरब्रह्मविद्याविधुरायेन्द्रायो-

पदिश्यमानायाः प्रत्यगात्मविषयकप्रजापतिविद्यायाः कथं विद्यान्तरशेषत्वमिति चेन्न। प्रजापतिवाक्यस्य 'एष संप्रसादः' [छा० ८। १२। ३] इति दहरविद्यावाक्यान्तर्गतसंप्रसादशब्दार्थशोधनार्थं प्रवृत्ततया तदेकवाक्यत्वेन तादार्थ्ये सिद्ध इन्द्रस्यापि पश्चाद्दहरविद्योपदिष्टेत्येवावगन्तव्यत्वेनादोषात्। ननु प्रजापतिविद्यायाः प्रकरणाद्दहरविद्याशेषत्वे सर्वब्रह्मविद्याशेषत्वं न स्यात्। विद्यान्तरशेषत्वे प्रमाणाभावात्। न चेष्टापत्तिः। 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' [ब्र० सू० ४। १। ३] इत्यत्र प्रत्यगात्मनः परमात्मात्मकत्वेनानुसंधानस्योक्तत्वात्। 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' [ब्र० सू० १। ४। ६] इति सूत्र उपास्यस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वोक्तेश्च। गुणोपसंहारपादे 'आत्मेति तूपगच्छन्ति' [ब्र० सू० ४। १। ३] इत्यधिकरणसिद्धं जीवोपास्यत्वमङ्गीकृत्य किं कर्तृत्वादिविशिष्टं सांसारिकस्वरूपमनुसंधेयमुत प्रजापतिवाक्योदितापहतपाप्मत्वादिलक्षणः सांसारिकरूपव्यतिरेको वेति विशये कर्तृत्वादिविशिष्टमेव रूपमनुसंधेयं, शरीरे वर्तमानस्योपासितुरात्मनस्तथाभावादित्येके मन्यन्त इति 'एक आत्मनः शरीरे भावात्' [३। ३। ५३] इति सूत्रेण पूर्वपक्षं कृत्वा प्रजापतिवाक्योदितापहतपाप्मत्वादिलक्षणः सांसारिकरूपव्यतिरेक एवानुसंधेयः। तथोपासने सत्येव 'तत्क्रतुन्यायेन तादृशात्मस्वरूपफलप्राप्तेर्भावित्वादिति। 'व्यतिरेकस्तद्भाव( वा )भावित्वात्' [ब्र० सू० ३। ३। ५४] इति सूत्रेण सिद्धान्तितत्वादिति चेन्न। यथा विद्याविशेषप्रकरणश्रुतानां सत्यत्वज्ञानत्वादिस्वरूपनिरूपकधर्माणाम् 'आनन्दादयः प्रधानस्य' [ब्र० सू० ३। ३। ११] इत्यधिकरणोक्तन्यायेन सर्वब्रह्मविद्यापेक्षितब्रह्मस्वरूपप्रतिपत्त्युपयोगितया सामर्थ्यरूपाल्लिङ्गात्प्रकरणभङ्गेन सर्वब्रह्मविद्यासाधारण्यमाश्रीयते। यथा वा 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' [बृ० ४। ४। २२] इति विद्याविशेषप्रकरणश्रुतानां वेदानुवचनादीनां सर्वविद्यापेक्षितचित्तनैर्मल्योपयोगित्वलक्षणसामर्थ्यरूपलिङ्गवशेन सर्वविद्यासाधारण्यमेवमिहापि ब्रह्मप्राप्तिपूर्वकापहतपाप्मत्वादिगुणाष्टकविशिष्टस्वात्माविर्भावलक्षणमोक्षरूपफलस्य तत्क्रतुन्यायेन तादृशस्वात्मोपासनसाध्यत्वेन प्रजापतिवाक्योदितप्रत्यगात्मविद्यायाः सर्वब्रह्मविद्याङ्गत्वसिद्धेः। दहरविद्यायाः परमात्मपरत्वं च दहराधिकरणे स्थितम्। तस्मिंश्चाधिकरणे—'दहर उत्तरेभ्यः' [ब्र०

सू० १।३।१४ ]। 'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ' [ ब्र० सू० १।३।१५ ]। 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ' [ ब्र० सू० १।३।१६ ] 'प्रसिद्धेश्च ' [ ब्र० सू० १।३।१७ ]। 'अल्पश्रुतेरिति चेत्तदुक्तम् ' [ ब्र० सू० १।३।२१ ] 'इतरपरामर्शात्स इति चेन्नासंभवात् ' [ ब्र० सू० १।३।१८ ]। 'अन्यार्थश्च परामर्शः ' ब्र० सू० १।३।२० ] 'उत्तराच्चेदाविर्भूतस्वरूपस्तु ' [ ब्र० सू० १।३।१९ ] 'अनुकृतेस्तस्य च ' [ ब्र० सू० १।३।२२ ] 'अपि च स्मर्यते ' [ ब्र० सू० १।३।२३ ] इति दश सूत्राणि। तत्राऽऽद्यानि सप्त सूत्राणि स्वावसर एव व्याख्यातानि। 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' 'अनुकृतेस्तस्य च ' 'अपि च स्मर्यते ' इति त्रीणि सूत्राण्यव्याख्यातानि व्याख्यास्यन्ते—उत्तरात्प्रजापतिवाक्याज्जीवस्याप्यपहतपाप्मत्वादिगुणयोगावसायादपहतपाप्मत्वादिगुणैर्दहराकाशः परमात्मेति न शक्यं निर्णेतुमिति चेत्तत्राऽऽह—आविर्भूतस्वरूपस्त्विति। पूर्वमनृततिरोहितापहतपाप्मत्वादिगुणकस्वस्वरूपः पश्चाद्विमुक्तकर्मबन्धः शरीरात्समुत्थितः परं ज्योतिरुपसंपन्न आविर्भूतस्वरूपः सन्नपहतपाप्मत्वादिगुणविशिष्टस्तत्र प्रजापतिवाक्येऽभिधीयते। दहरवाक्ये त्वतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते। आविर्भूतस्वरूपस्यापि जीवस्यासंभवनीयाः सेतुत्वविधरणत्वादयः सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वं च दहराकाशस्य परब्रह्मतां साधयन्ति, सेतुत्वसर्वलोकविधरणत्वादयो न मुक्तानां नित्यमुक्तानां वा संभवन्तीति 'जगद्व्यापारवर्जम्' [ ब्र० सू० ४।४।१७ ] इत्यत्र स्थितम्। अत एव नित्यानां नित्याविर्भूतापहतपाप्मत्वादिगुणाष्टकतया तेष्वतिप्रसक्तस्य नित्याविर्भूतापहतपाप्मत्वादिमत्त्वस्य कथं ब्रह्मलिङ्गत्वमिति शङ्काऽपि निरस्ता सेतुत्वादीनां तदसंभावितधर्माणामपि श्रवणात्। ननु ' य एषोऽक्षिणि पुरुषो दृश्यते ' [ छा० ८।७।४ ] इति प्रजापतिविद्यागतवाक्यान्यपि ब्रह्मपराण्येव भवन्तु वाक्यत्रयेऽपि ' एतदमृतमभयमेतद्ब्रह्म ' [ छा० ८।७।४ ] इति श्रवणात्, अक्षिवाक्य उपकोशलविद्योपास्यप्रत्यभिज्ञानात्, ' य एष स्वप्ने महीयमानश्चरति ' [ छा० ८।८।१ ] इति वाक्येऽपि स्वाप्नपदार्थस्रष्टृत्वेन महीयमानस्य परमात्मन एव प्रतिपादनसंभवात्, सुषुप्तिपर्यायेऽपि यत्र यस्मिन्नाधारे समस्तः सुप्तो भवतीति सुषुप्त्याधारब्रह्मपरत्वोपपत्तेरिति चेदु-

च्यते—स्वप्नपर्याये 'घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव' [छा० ८। १०। ४] इतीन्द्रेण तस्य हन्यमानत्वद्राव्यमाणत्वबन्धुजनमरणाद्यप्रियद्रष्टृत्वरोदितृत्वादिप्रतिभासतो दुष्टत्वस्योपन्यासात्, सुषुप्तिसंबन्ध्यात्मोपदेशानन्तरं 'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति' [छा० ८।११। २] इति तस्य विशेषज्ञानरहिततया विनष्टप्रायत्वस्योक्तत्वादभयत्वामृतत्वादीनां च मुक्त्यवस्थाभाविरूपापेक्षयाऽप्युपपत्तेर्जीवविषयत्वमेव द्वितीयतृतीयपर्याययोः। एवं तयोः स्वप्नसुषुप्त्यवस्थावज्जीवपरत्वे स्थिते प्रथमपर्यायस्य जागरावस्थावज्जीवविषयत्वमेवोपपद्यते। 'य एषोऽक्षिणि पुरुषो दृश्यते' [छा० ८। ७। ४] इत्यस्य दर्शनलिङ्गादक्षिणि संनिहितोऽनुमीयत इत्यर्थकत्वेन जागरावस्थाविषयत्वस्यैवोपपन्नत्वात्। ततश्च प्रजापतिवाक्ये जीवः संसारदशायामनृततिरोहितापहतपाप्मत्वादिकः स मुक्तिदशायां साधनाधीनतदाविर्भावः प्रतिपाद्यते। दहराकाशे श्रूयमाणं त्वपहतपाप्मत्वादिकं नित्याविर्भूतमेव ग्राह्यं नित्याविर्भूतस्य ग्रहणसंभवे तिरोहितत्वेनासत्प्रायस्य साधनाधीनाविर्भावस्य ग्रहणायोगात्। ननु स्यादेवं यदि ब्रह्मणो नित्याविर्भूतापहतपाप्मत्वादिमत्त्वं जीवस्यातथात्वं च प्रमाणसिद्धं स्यात्। तदा दहराकाशे श्रूयमाणमपहतपाप्मत्वादिकं ब्रह्मगतं नित्याविर्भूतमेव ग्राह्यमिति शक्यते वक्तुं न च तदस्तीति शङ्कमानं प्रत्याह—'अनुकृतेस्तस्य च' [ब्र० सू० १। ३। २२]। अनुकृतिरनुकारः साम्यं तस्य परब्रह्मण उपासनया तदनुकारो हि जीवस्य श्रूयते—'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' [मु० ३। १। ३] इति। 'अपि च स्मर्यते' [ब्र० सू० १। ३। २३] स्मर्यत इत्यर्थः

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः [गी० १४। २] इति च

ततश्च तदुपासनासिद्धमेतस्यैश्वर्यम्। तस्य तु नान्योपासनासिद्धमपि तु नित्याविर्भूतम्। ततश्च दहरवाक्ये श्रूयमाणमपहतपाप्मत्वादिकं ब्राह्ममेवेति स्थितम्। प्रकृतमनुसरामः॥ ६॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य द्वादशः खण्डः॥ १२॥

———

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये ।

एते च मन्त्रा विद्याङ्गभूता विद्वद्भिर्जप्याः । परमात्मनो हि त्रिविधमुपासनमुक्तम् । 'उपासात्रैविध्यात्' [ब्र० सू० १।१।३१] इत्यत्र चिच्छबलतयाऽचिच्छबलतया स्वरूपेण च, तत्र स्वरूपेणानुसंधाने ज्ञानादिगुणवद्दिव्यविग्रहयोगिताऽप्यनुसंधेया । तत्सिद्ध्यर्थमेव हि पुण्डरीकाक्षमप्राकृतं वपुरतिदिश्यते 'स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः' [तै०२।८।१] इति । तत्र स यश्चायं पुरुष इत्यानन्दमयमनूद्य यश्चासावादित्य इति विग्रहातिदेश इति व्यासार्यैरुपासात्रैविध्यादित्यत्रोक्तम् । वेदार्थसंग्रहे च भगवता भाष्यकृता "'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' [छा० १।६।६] 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' [ना० १।८] विद्युद्वर्णात्पुरुषादित्यर्थः। 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा' [ना० ११।१२] मध्यस्थनीलतोयदा विद्युल्लेखेव सेयं दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहितनीलतोयदा विद्युदिव भातीत्यर्थ" इत्युक्तम् । अतो नीलविग्रहवैशिष्ट्यं सिद्धम् । अत एव हि 'श्यामा एकरूपा भवन्त्येवमेव हि प्रजापतिः समृद्ध्यै' इति प्रजापतिशब्दितस्य भगवतः श्यामरूपत्वमुक्तं तस्माच्छ्याम इति विग्रहविशिष्टस्वरूपमुच्यते। ततश्च श्यामादिति ल्यब्लोपे पञ्चमी । श्यामविग्रहविशिष्टं स्वरूपं प्रपद्य स्वरूपमुपास्य शबलं चिदचिद्विशिष्टं प्रपद्य उपासे । शबलमुपास्य श्याममुपासे । ततश्च निरन्तरं त्रैविध्येनोपास इत्यर्थः ।

अश्व इव रोमाणि विधूय पापं चन्द्र इव
राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा
ब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति॥१॥

इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

---

भगवल्लोकं

अश्वो रोमाणीव स्वयं पापं विधूय। विधूयेत्यनेन पापत्याग उच्यते । राहुमुखप्रमुक्तश्चन्द्र इव शरीराद्विमुक्तोऽकृतं नित्यं ब्रह्मलोकं भगवल्लोकं कृतात्मा

कृतार्थात्मा सन्नभिसंभवामि प्राप्नवानीत्यर्थः। अभिसंभवामीत्यभिसंभवामीतीति द्विरुक्तिः खण्डसमाप्त्यर्था ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य
त्रयोदशः खण्डः ॥ १३ ॥

---

आकाशो वै नाम नामरूपयोर्निर्वहिता
ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा।

अत्र 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यपि पाठान्तरं द्रष्टव्यम्। उभयत्राप्ययमर्थः—श्रुतिष्वाकाश इति प्रसिद्धो नामरूपयोर्निर्वहिता व्याकर्ता। यत्, आकाशशब्दितं। विधेयब्रह्माभिप्रायेण नपुंसकत्वम्। ते नामरूपे अन्तरा मध्ये वर्तमानं ताभ्यामस्पृष्टमित्यर्थः। ब्रह्मामृतादिशब्दानां पूर्ववदेवार्थः। इदं च वाक्यं समन्वयाध्याये चिन्तितम्। तत्र 'आकाशो ह वै नामरूपयोर्निर्वहिता' इति, नामरूपवोढृत्वश्रवणात्, नामरूपवोढृत्वस्य परमात्मनि 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' [छा० ६।३।२] इति जीवद्वारकतयैवोपपाद्यतया नामरूपवोढृत्वस्य जीव एव स्वरसत्वात्। 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' [छा० ८।३।४] इति वाक्यप्रतिपाद्यस्य 'नामरूपयोर्निर्वहिता ते यदन्तरा' इति वाक्ये प्रत्यभिज्ञानात्, पूर्वं निरूढनामरूप एव पश्चाद्विमुक्त इह प्रतिपाद्यते, आकाशशब्दस्यापि यौगिक्या वृत्त्या मुक्तात्मनि संभवादित्येवं पूर्वपक्षे प्राप्त उच्यते—'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' [ब्र० सू० १।३।४१] आकाशः परं ब्रह्म, अर्थान्तरत्वादिव्यपदेशान्नामरूपयोर्निर्वहितेति जीवापेक्षयाऽर्थान्तरत्वस्य भेदकधर्मस्य व्यपदेशात्। न हि नितरां वोढृत्वं निर्वोढृत्वं रूढ्या निर्वोढृशब्दस्य कर्तृत्वाभिविधायित्वात्, ते यदन्तरेति नामरूपास्पृष्टत्वकथनाच्च, नामरूपास्पृष्टत्वे सति नामरूपकर्तृत्वस्य बद्धे मुक्ते वाऽसंभवात्। मुक्तस्यापि 'जगद्व्यापारवर्जम्' [ब्र० सू० ४।४।१७] इति जगद्व्यापाररराहित्यस्य प्रतिपादितत्वात्। आदिशब्देनामृतत्वाभयत्वादीनां संग्रहः। ननु प्रत्यगात्मनोऽर्थान्तरत्वव्यपदेशादिति न घटकं युक्तम्। शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्मेति च व्यपदिश्यते तत्राऽऽह—'सुषुप्त्युत्क्रान्त्योर्भेदेन' [ब्र०सू०१।३।४२]

वाजसनेयके—'कतम आत्मा योऽयं विज्ञानमयः प्राणेषु' [बृ०४।३।७] इति प्रकृतस्य प्रत्यगात्मनः सुषुप्त्युत्क्रान्तौ च 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नाऽऽन्तरम्' [बृ०४।३।२१] इति 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन्याति' [बृ० ४।३।३५] इति प्राज्ञेन परिष्वङ्गान्वारोहावाम्नायेते । जीवस्यैव शुद्धावस्थस्य परमात्मत्वे परिष्वङ्गान्वारोहौ नोपपद्येयातां न ह्यभेदे तौ संभवतः । 'पत्यादिशब्देभ्यः' [ब्र०सू०१।३।४३] 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' [बृ० ४।४।२२] इति प्रत्यगात्मा संभावितपतित्वादिधर्माणां श्रवणान्नायं मुक्तात्मेति स्थितं प्रकृतमनुसरामः ।

प्रजापतेः सभां वेश्म प्रपद्ये ।

प्रजापतेः परमात्मनः सभामास्थानं वेश्म प्रपद्ये । 'प्रभुविमितꣳ हिरण्मयम्' [छा०८।५।३] इति दहरविद्यायां निर्दिष्टं वेश्म प्रपद्य इत्यर्थः । न चात्र प्रजापतिशब्दः कार्यहिरण्यगर्भविषयकः 'न च कार्ये *प्रत्यभिसंधिः' [ब्र० सू० ४।३।१४] इति सूत्रकृतैव निरस्तत्वात् । भाष्यकृता च "न चायं प्रत्यभिसंधिः कार्ये हिरण्यगर्भेऽपि तु परस्मिन्नेव ब्रह्मणि 'यशोऽहं भवामि ब्राह्मणानाम्' इत्येतस्याभिसंधातुः सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसंधानात् 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' [ छा० ८।१३।१ ] इत्यभिसंभाव्यब्रह्मलोकस्याकृतत्वश्रवणात्, सर्वबन्धविनिर्मोकस्य च साक्षाच्छ्रवणा"दिति भाषितम् ।

यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशाम् ।

अत्र यशःशब्देन यशःसाधनभूतात्मोच्यते।ब्राह्मणादीनामात्माऽस्मीत्यर्थः । अत्राहमितिशब्दः स्वान्तर्यामिपरमात्मपरः । ननु तव ब्राह्मणादीन्प्रति कथं यशःशब्दितमात्मत्वमित्यत्राऽऽह—

यशोऽहमनुप्रापत्सि स हाहं यशसां यशः ।

अहं यशोरूपं परमात्मानमात्मतयाऽहंत्वेन प्राप्तवानस्मि साक्षात्कृतवानस्मि । अतः सोऽहं परमात्मरूपोऽहं यशसां जीवात्मनां यश आत्माऽस्मीत्यर्थः ।

* प्रतिपत्त्याभि इति सूत्रपाठः ।

श्वेतमदत्कमदत्कꣳ श्वेतं लिन्दु माऽ-
भिगां लिन्दु माऽभिगाम् ॥ १ ॥
इति च्छान्दोग्योपनिषद्यष्टमप्रपाठकस्य
चतुर्दशः खण्डः ॥ १४ ॥

---

श्वेतं शुक्लधातुम् । अदत्कं दन्तहीनं श्वेतम् । अत्र श्वेतशब्देन लक्षणया सत्त्वगुण उच्यते । तस्मादत्कं भक्षयितृ । चरमधातोः सत्त्वगुणतत्कार्यज्ञानादिप्रमोषकत्वाद्भक्षकत्वम् । तादृशं चरमधातुं प्राप्य लिन्दु स्त्रीलिङ्गं माऽभिगां न प्राप्नुयां चरमधातुतया योनिप्रवेशो मा भूदिति। जन्म मा भूदिति यावत् । लिन्दु माऽभिगां लिन्दु माऽभिगामिति द्विर्वचनं जप्यमन्त्रपरिसमाप्त्यर्थम् ॥ १ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य
चतुर्दशः खण्डः ॥ १४ ॥

---

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः ।

एतद्ब्रह्मविज्ञानं ब्रह्मा हिरण्यगर्भः प्रजापतये कश्यपायेत्यर्थः । शिष्टं स्पष्टम् । विद्याङ्गभूततया कर्मानुष्ठातव्यमित्येतत्प्रस्तौति—

आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेण ।

यथाविधानं विधिमनतिक्रम्य गुरोः कर्मातिशेषेण कर्मावशिष्टकालेन गुरुशुश्रूषानवरुद्धेन कालेनाधीत्येति योजना । व्यासार्यैस्तु पुरुषार्थाधिकरणेऽतिशेषेण निःशेषमित्यर्थ इति व्याख्यातं तेषामयमाशयः—'ब्रह्मचारी वेदमधीत्योपहृत्य गुरवेऽनुज्ञातो न्यायतो दारान्कुर्वीत' 'विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञानस्य वा स्नानम्' इत्यादिस्मृत्यनुसारात् 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' इत्यादिश्रुत्यनुसाराच्च गुरोर्यथाविधानमाचार्यस्य नियमनमनतिलङ्घ्य कर्तव्यं कर्म, अतिशेषेण, अतिमर्यादमित्यादावतेर्मर्यादाभावे वृत्तेर्दर्शनादतिरर्थाभावे वर्तते । ततश्चातिशेषेणाशेषेणाभिसमावृत्य निर्वर्त्येत्येवान्वयो न त्वतिशेषेणेत्यस्याधीत्येति पूर्वेणान्वयः । तस्य व्यवहितत्वान्निराकाङ्क्षत्वाच्च । न च 'गुरोः कर्मशेषेण जपेत्' इति गौतमस्मृत्यैकरूप्यात्कर्मातिशेषशब्दस्यापि कर्मातिशिष्टकालपरत्वं वक्तव्यमिति वाच्यम् । शेषातिशेषशब्दयोर्भिन्नार्थत्वेन तत्प्रत्यभिज्ञानाभावादिति ।

अभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः ।

अभिसमावृत्य समावर्तनं कृत्वा गुरुकुलान्निवृत्येत्यर्थः । न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्यविहितकर्मनिष्ठ इत्यर्थः । शुचौ देशे स्वाध्यायमधीयान इत्यत्र स्वाध्यायमिति नित्यकर्मणामप्युपलक्षणम् ।

धार्मिकान्विदधत् ।

पुत्रशिष्यादीन्धर्मे नियुञ्जानः ।

आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्या-
हिꣳसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः ।

अनात्मविषयेभ्य इन्द्रियाणि निगृह्य शास्त्रीयहिंसाव्यतिरिक्तां हिंसामकुर्वाण इत्यर्थः । न च 'अशुद्धमिति चेन्न शब्दात्' [ब्र०सू०३।१।२५] इति सूत्रे क्रत्वर्थपशुहिंसाया हिंसात्वाभावस्योक्तत्वादन्यत्र तीर्थेभ्य इति व्यर्थमिति वाच्यम् । 'न वा उ एतन्म्रियसे न रिष्यसि' इति मन्त्रलिङ्गात्तस्य हिंसात्वाभावेऽपि गृहस्थानामवर्जनीयतुलस्याहरणादिहिंसाया हिंसाधात्वर्थसंभवेन तत्पर्युदासार्थमन्यत्र तीर्थेभ्य इत्यस्याऽऽवश्यकत्वादिति द्रष्टव्यम् ।

स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंप-
द्यते न च पुनरावर्तते न च पुनरावर्तते ॥ १ ॥

'आप्रयाणात्तत्रापि हि दृष्टम्' [ब्र० सू० ४ । १ । १२] इत्यत्र इदमपवर्गसाधनमुपासनमेकस्मिन्नेवाहनि कार्यं शास्त्रार्थस्य तावतैव समाप्तत्वादिति पूर्वपक्षं कृत्वा, आप्रयाणादामरणादनुवर्तनीयमामरणं सर्वस्मिन्काले 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते' इत्युपासनस्य दृष्टत्वात् । अत आप्रयाणं कर्तव्यमिति स्थितम् । 'सहकार्यन्तरविधिः' [ब्र० सू० ३ । ४ । ४७] इत्यधिकरणे छान्दोग्ये 'अभिसमावृत्य कुटुम्बे शुचौ देशे' इत्यारभ्य 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति ब्रह्मविदो यावदायुषं गृहस्थधर्मेण स्थितिदर्शनादाश्रमान्तरेषु न ब्रह्मविद्याऽस्तीत्याशङ्क्य सर्वेष्वाश्रमेषु विद्यायाः प्रमाणप्रतिपन्नत्वाद्गृहस्थधर्मेणोपसंहार आश्रमान्तरधर्माणामप्युपलक्षणार्थ इति 'कृत्स्नभावात्तु गृहिणोपसंहारः' [ब्र० सू० ३ । ४ । ४८] इति सूत्रेण समर्थितम् । 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' [ब्र० सू० ४ । ४ । २२] इत्यत्र 'स

खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ' इति शब्दान्मुक्तस्य पुनः प्रकृतिवश्यतालक्षणावृत्तिर्नास्तीत्यर्थः । तत्र पुनरावृत्तौ हि न मुक्तेच्छा हेतुः, अनवधिकातिशयानन्दरूपं ब्रह्मानुभवतः पुनरावृत्तीच्छाया असंभवात् । नापि भगवदिच्छा हेतुः, एतल्लाभं महालाभं मन्वानस्य पुनस्तदावर्तनेच्छाया असंभवात् । नापि कर्मसंबन्धो हेतुः, तस्य निःशेषनष्टत्वादिति भाष्ये प्रतिपादितम् । न च पुनरावर्तते न च पुनरावर्तत इतिद्विरुक्तिर्ब्रह्मविद्यायाः साङ्गायाः परिसमाप्त्यर्था ॥ १ ॥

आप्याययन्तु ममाङ्गानि वाक्प्राणश्चक्षुः
श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि ।

अध्ययनजपादौ शान्तिपाठार्थोऽयं मन्त्रः । मदङ्गानि वागादिभिः सहाऽऽप्यायितानि भवन्त्वित्यर्थः ।

सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्याम् ।

सर्वां ब्रह्मप्रतिपादिकामुपनिषदं प्रति ब्रह्मविषये च नास्तिक्यबुद्धिं मा कार्षमित्यर्थः ।

मा मा ब्रह्म निराकरोत् ।

मा मां ब्रह्म निराकुर्यादनुगृह्णात्वित्यर्थः ।

अनिराकरणमस्त्वनिराकरणं मेऽस्तु ।

ब्रह्मणश्च मम च परस्परनिराकरणं मा भूत् । अनैकरस्यं मा भूयादैकरस्यमेव भूयात् ।

तदात्मनि निरते य उपनिषत्सु धर्मास्ते
मयि सन्तु ते मयि सन्तु ॥ २ ॥

इति च्छान्दोग्योपनिषदष्टमप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

इति च्छान्दोग्योपनिषद्यष्टमः प्रपाठकः
समाप्तः ॥ ८ ॥

---

आत्मज्ञाननिरतस्य ये धर्माः शान्तिदान्त्यादय उपनिषत्सु प्रसिद्धास्ते सर्वे मयि सन्त्वित्यर्थः । ते मयि सन्तु ते मयि सन्त्विति द्विरुक्तिरुपनिषत्समाप्त्यर्था ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमप्रपाठकस्य
पञ्चदशः खण्डः ॥ १५ ॥

---

इति च्छान्दोग्योपनिषत्प्रकाशिकायामष्टमः प्रपाठकः
समाप्तः ॥ ८ ॥

---

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥ १ ॥

इति श्रीमत्तातार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिकृपालब्धपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु
च्छान्दोग्योपनिषत्प्रकाशिका समाप्ता ।

---

# अथ च्छान्दोग्योपनिषद्विभागानां वर्णानुक्रमणिका प्रारभ्यते ।

समाप्तेयं छान्दोग्योपनिषद्विभागानां वर्णानुक्रमणिका ।

